बलिया: मिड्डी चौराहा (कार्यक्रम 15.10.95 को 10.00
देवरीया: स्टेट बैंक के सामने, राघवनगर (कार्यक्रम 15.10.95 को 2
जौनपुर: टी. डी. कालेज रोड, पाठक ऑटो के समीप (कार्यक्रम 15.10.95

२२/२२ कैरेट स्वर्णाभूषण



| | |
|---|---|
| 16.10.95 | बस्ती: कृष्णा मेडिकल एजेन्सी, साऊथ गेट, पुरानी ब पेट्रोल पम्प के पीछे, सहादतपुरा, शाहगंज: जौनपुर रो |
| 17.10.95 | फैजाबाद: नियामा रोड, नहारबाग, सुल्तानपुर: गीता मंजिल, गोला घाट, गाजीपुर: विश्वेश्वरगंज, पुलिस |

*प्रायोजक : जे वी जी सुपर वाश, डिटरजेन्ट पाउडर / के*
जे वी जी डिपार्टमैन्ट स्टोर्स लि० द्वारा उत्

*जे वी जी का सपना एक - प्रगति पथ पर*

# बनाएं एक बेहतर कल.

ब्लैक एण्ड व्हाइट टी वी। ३६ से.मी.,
मॉडल में उपलब्ध। उत्तम क्वॉलिटी
ली क्यों ना ले आयें यह खुशी निराली।



॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

११५



( न्यायविभागे एकोनविंशं [१९] पुष्पम् )



श्रीमद्गदाधरभट्टाचार्यचक्रवर्त्तिविरचितः

# व्युत्पत्तिवादः

जौनपुर-वदलापुर-उदयपुरगेल्हवाभिजनकौमुदीकल्पलतिकापरिष्कारदर्पणाद्यनेक-
ग्रन्थनिर्माणकर्तृघटिकाशतकशतावधानसंस्कृताशुकविचक्रवर्त्तिवैयाकरण-
शिरोमण्याद्यनेकोपाधिभृद्गर्गवंशीयसरयूपारीण-

पण्डितराज-

## शुक्ल-श्रीवेणीमाधवशास्त्रिरचित-

## ( शास्त्रार्थ-परीक्षोपयोगि- )

## 'शास्त्रार्थकला'टीकासहितः

## तदात्मजेन शुक्लश्रीराजनारायणशास्त्रिणा

उपयुक्तटिप्पणीभिः परिष्कृत्य संशोधनपुरस्सरं
सुसम्पादितः






चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९६८

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मुद्रक : विद्याविलास प्रेस, वाराणसी

संस्करण : द्वितीय, संवत् २०२५

मूल्य : रु० [illegible]






Gopal Mandir Lane,

P. O. Chowkhamba, Post Box 8,

Varanasi-1 ( India )

1968

Phone : 3145

प्रधान शाखा

चौखम्बा विद्याभवन

चौक, पो० बा० ६९, वाराणसी-१

फोन : ३०७६

THE

KASHI SANSKRIT SERIES

115

( Nyāya Section No. 19 )

# VYUTPATTIVĀDA

OF

## GADĀDHARA BHAṬṬĀCHĀRYA

WITH

*THE ŚĀSTRĀRTHAKALĀ COMMENTARY*

By

VĀIYĀKARAṆA ŚIROMAṆI

PAṆḌIT ŚRĪ VEṆIMĀDHAVA ŚĀSTRĪ

*Edited with notes etc.*

By

PAṆḌIT ŚRĪ RĀJANĀRĀYAṆA ŚUKLA

THE

CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI-1

1968

# ईषत् प्रास्ताविकम्

अतिगभीरो हि तत्रभवत्या वाग्देवताया विस्तरः। न कोऽपि सकलसंसारकारणात् सर्वज्ञादृते जगत्पितुस्तं विस्तरं वेद। अनन्तो हि वेदराशिः, निरवधिश्च तदङ्गप्रचारः, दुर्ज्ञेयञ्च शास्त्रगाम्भीर्यम्। तथापि तत्परिज्ञानार्थं यथासामर्थ्यं यतनीयमेव। संसारस्यातिदुःखरूपतया तन्निवृत्तिरूपापवर्गसाधनतायास्तत एतावगमात् अदृष्टे ह्यर्थेऽर्वाग्दृशामस्मद्विधानाम् प्रमाणप्रवृत्त्यभावेन शास्त्रप्रमाणमन्तरा तदधिगमस्य सर्वथासम्भवात्। शास्त्रत्वञ्च हितबोधकत्वेन वेदेष्वेव प्रसिद्धमिति न केषामपि विप्रतिपन्नम्। एवञ्च प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वेत्यादि शास्त्रलक्षणमपि सङ्गच्छते। प्रवृत्तिनिवृत्तिबोधकवाक्यानां बहुशो वेदे दर्शनात्। अन्यत्रासत्त्वेऽपि तेषां व्युत्पत्तिसमर्पणद्वारा तादृशां वाक्यानामेव परिपोषणात् तदर्थबोधकत्वमस्त्येव। तत्रापि व्युत्पत्तिसमर्पकत्वं सर्वैरपि "काणादं पाणिनीयञ्च" इति वदद्भिः प्रेक्षावद्भिः पाणिनीयस्येव काणादोपलक्षितस्य न्यायशास्त्रस्यापि कण्ठत एवोररीकृतम्। नहि व्युत्पत्तिं विना तत्तच्छब्दानां स्वारसिकोऽर्थः प्रत्यभिज्ञातुं शक्यते। शब्दार्थज्ञानाभावे च वाक्यार्थज्ञानमपि दूरापेतम् भवेत्, उभयोः परस्परमविनाभावलक्षणसम्बन्धाभ्युपगमात्। अतश्च व्युत्पित्सुभिर्न्यायशास्त्रमध्येतव्यम्। यद्यपि न्यायत्वम्प्रतिज्ञाहेतूदाहरणादिपञ्चकसमुदायत्वन्तथापि तत्सम्बन्धात् शास्त्रस्यापि न्यायत्वन्नासमञ्जसम्। तदिदं न्यायशास्त्रं गौतमकणादाभिधप्रवर्त्तकाचार्यभेदेन न्यायवैशेषिकसंज्ञे अर्हति। अन्यत्र विप्रतिपन्नस्यापि प्रमाणचतुष्टयस्य न्यायतन्त्रेऽभ्युपगततया तदन्तःपातिन आगमप्रमाणोपजीव्यपदपदार्थसंसर्गजातस्य विचारितत्वाच्छब्दखण्डेऽस्यैव महतो ग्रन्थस्य ज्येष्ठत्वमिति सर्वोऽपि पण्डितवर्गः सोरस्ताडम्मन्यते। अत एव परम्परया शब्दप्रमाणविचारपटोरस्य व्युत्पत्ति-

वादग्रन्थस्यानितरसाधारणतया कृत्स्नेऽपि कृतिवर्गे विद्वत्प्रायेषु छात्रेषु च भूयानादरातिशयो विलोक्यते। अस्य च पंडितराजमहामहोपाध्याय-श्रीमद्गदाधरभट्टाचार्यचक्रवर्त्तिप्रणीतत्वमपि किमपि विजातीयं गौरवं सम्पादयति। यद्यपि ग्रन्थस्यैतस्य बहुशष्टीका यत्र तत्र मुद्रितास्समुपलभ्यन्ते तथापि तासां काश्चनातिविस्तृताः काश्चनातितरां संक्षिप्ता इति छात्राणान्ततो बोधक्लेशमनुभूय प्रातःस्मरणीयस्वर्गीयश्रीमहामहोपाध्यायजयदेवमिश्रशास्त्रिणाम् परिभाषेन्दुशेखरविजयादिटीकाकृताम्मैथिलकुलसरोजसूर्याणाम् प्रधानशिष्याः शास्त्रार्थविद्यावतारसर्वतन्त्रापरतन्त्र-दिगन्तविश्रुतकीर्त्तिपण्डितसार्वभौममहामहोपाध्याय–श्रीशिवकुमारशास्त्रि-मिश्रसहोदयानामन्तेवसन्तः अस्मत्तातचरणा घटिकाशतकशतावधानसंस्कृताशुकविचक्रवर्त्तिवैयाकरणशिरोमण्याद्यनेकपदवीभृतो १ हिंसा-खण्डनकौमुदी २ कौमुदीकल्पलतिका ३ परिष्कारदर्पणादिग्रन्थकृतो विख्यातशास्त्रार्थकीर्त्तयः पण्डितराज-श्रीवेणीमाधवशुक्लशास्त्रिणः (जौनपुर बदलापुर उदयपुर गेल्हवाभिजनाः) शास्त्रार्थप्रचाराय परीक्षासमुत्तीर्णतायै च टीकामेनां शास्त्रार्थकलाभिधानां विरचय्य बहूपकृतवन्तः।

टीकाकारैः प्रायशस्तत्तत्पदार्थविशेषाणां विशेषतोऽनुगमाय परीक्षा-लेखनप्रकारादिभिर्विभागो विहितस्तदपि सविशेषं ग्रन्थाध्येतॄणां सौकर्य्यस्थानं स्यादिति न मनागपि संशीतिपदम्। न खल्वयं केवलं संस्कृत-परीक्षायां पाठ्यत्वेन प्रक्षिप्त इत्येतावतैवोपयोगी, परन्तु विद्यानुरागिभिः सर्वदा चिन्तितः कामपि नवीनां चमत्कृतिं प्रकटयितेति तदभ्यासेन स्पष्टमेव भवेत्।

अपि च टीकायां मूले वा उपनिबद्धानां दुरूहानाम्पदार्थानां विशेषतः सौकर्य्याय टिप्पणीप्रदानेन विवरणमपि सम्पादितम् ततोऽपि लाभोऽवश्यं स्यात् इति दृढो मे विश्वासः।

व्युत्पत्तिवादस्यातिगहनस्य टीकादिकार्यं नाल्पायाससाध्यन्तथापि चौखम्भासंस्कृतपुस्तकालयाध्यक्षमहोदयैर्भृशम्प्रबोधिताष्टीकाकारा अनेक-कार्यासक्ता अपि स्वीयममूल्यं समयमेतस्मिन् कार्ये व्ययीकृत्य शास्त्रार्थ-

कलां रचितवन्त इति प्रबोधयितृमहाशयेभ्योऽपि भूरिशो धन्यवादान् वितरामः।

यद्यपि पूर्वसंस्करणापेक्षयाऽत्रसंस्करणे किञ्चित्परिवर्द्धनमावश्यकमिवाभीष्टन्तथापि सत्वरमुद्रणावस्थतया तथा कर्त्तुं नापारीति विवेकशीलैः क्षन्तव्यम्। इह संशोधनकार्ये वाढं प्रयतितम् तथापि यत्र तत्राक्षरविन्यासजनिता अशुद्धयः पाठकमहोदयैरेव संशोध्य परिष्कर्त्तव्याः। प्रायो यन्त्रालयमुद्रिता ग्रन्थाश्चारु दृष्टा अपि क्वचित्तथैवाशुद्धिपिशाचिन्या दुष्टा भवन्त्येवेति न संशोधकः प्रतिभूः।

सम्पिपादयिषितमपि गदाधरभट्टाचार्यजीवनवृत्तान्तं तदुपयुक्तसामग्र्या बहुकालसम्पाद्यतामनुभूय साम्प्रतमुपेक्षितमिव। परन्तु भगवतस्सच्चिदानन्दस्यानुग्रहेण कदाचन सुयोग्यसमयमासाद्य तच्चरित्रमन्यत्र प्रकाशितं स्यादिति सुदृढं विश्वस्यते।

आशास्यते च "गुणगृह्या वचने विपश्चितः" इति न्यायेन विद्वज्जना अनुग्रहीष्यन्तीति।

विजया दशमी
वि० सं० २०२५

विदुषामाश्रवस्य—
श्रीराजनारायणशुक्लस्य
[ एतद्ग्रन्थसम्पादकस्य ]




# व्युत्पत्तिवादः

## 'शास्त्रार्थकला'-परिष्कृतः

शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते ।

---

श्रीमते रामानुजाय नमः

नत्वा च विष्णुं भगवन्तमाद्यं रामानुजं योगिवरं यतीन्द्रम् ।
श्रीवैष्णवौ सत्पितरौ गुरुञ्च प्रारभ्यते कार्यमिदं हिताय ॥ १ ॥
व्युत्पत्तिवादे विमलाश्च टीका यद्यप्यनेका विलसन्ति लोके ।
शास्त्रार्थयुद्धे विजयां विचित्रां टीकान्तु शास्त्रार्थकलान्तनोमि ॥ २ ॥
काशीप्रयागावधमध्यवर्ती कृतश्रमश्शास्त्रनिकुञ्जपुञ्जे ।
व्याख्याम्परिष्कारततिप्रभूतान्तथा परीक्षाफलदामजस्रम् ॥ ३ ॥
सरयूपारीणशुक्लो वेणीमाधवनामकः ।
टीकामेनाम्परिष्कृत्य मुहुस्सद्भ्यस्समर्पये ॥ ४ ॥

ननु नैयायिकमतेऽस्तीश्वर इति कथङ्कारमादौ शिष्टाचारपरम्पराप्राप्तम्मङ्गलन्न कृतमिति चेन्न ! ६४ चतुष्षष्टिवादा गदाधरेण कृता इत्यादिवादे मङ्गलस्य सत्त्वेनान्नासत्त्वेऽप्यदोषात् , वस्तुनिर्देशात्मकमङ्गलस्य सत्त्वाच्च । व्युत्पत्तीर्वदतीति व्युत्पत्तिवादः कर्मण्यण् कुम्भकारादिशब्दवत् । शाब्दबोध इति । शब्दादागतश्शाब्दः "तत आगत"

---

ध्यात्वा भवानीशमशेषशास्त्रजनिप्रदं भक्तजनानुरक्तम् ।
पित्रोः पदद्वन्द्वमथाभिनत्य तन्वे गुरूणाम्पदपङ्कजालिः ॥ १ ॥
श्रीराजनारायणशर्मशुक्लो विद्वज्जनानां हृदयानुरक्तः ।
कृताञ्च शास्त्रार्थकलात्मजेन पित्रा यथाबुद्धि सुटिप्पणीभिः ॥ २ ॥

शाब्दबोधे चेत्यत्र अवसरसंगतिस्सूचिता भट्टाचार्यैः । संगतित्वञ्च अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम् । सा च सङ्गतिः षोढा ।

इत्यण्, शब्दप्रयोज्य इत्यर्थः। प्रयोज्यत्वमणप्रत्ययार्थो भाति, तादृशो बोधश्शाब्दबोधः। न च शब्दप्रत्यक्षे शाब्दलिङ्गकानुमितौ च शब्दप्रयोज्यत्वबोधसत्त्वाद् व्यभिचारापत्तिरिति वाच्यम्? पङ्कजादिशब्दवत् योगरूढ्यभ्युपगमेनाक्षतेः। ननु शाब्दबोधे चैकपदार्थेऽपरपदार्थस्येतिनियमस्य किमवतरणमितिप्रश्नः, न्यायमते प्रत्यक्षानुमानोपमानशब्दानामेव प्रामाण्यम्प्रसिद्धम्। तत्र प्रत्यक्षे संसर्गभासकस्सन्निकर्ष एव। अनुमितौ संसर्गस्य भासकः परामर्शः। उपमितौ शक्तिरूपसंसर्गभासकमतिदिष्टवाक्यार्थस्मरणम्, राजपुरुषः नीलो घटः नीलघटमानयेत्यादिवाक्यजन्यशाब्दबोधस्थले स्वत्वाभेदादिसम्बन्धानाङ्कथम्प्रतीतिस्तादृशसम्बन्धनिष्ठा विषयता च किम्प्रयोज्या भवतीतिशिष्यजिज्ञासया चतुर्थशब्दप्रमाणविषयकतुरीयप्रकरणादौ पदार्थद्वयसंसर्गभासकत्वेनाकाङ्क्षासामान्यं व्यवस्थापयन्प्रतिजानीते शाब्दबोधे चेति। तदुक्तं वैशेषिकैः "इ-

---

सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा।
निर्वाहकैक्यकार्यैक्ये षोढा संगतिरिष्यते॥

यो यन्निरूपणानन्तरन्निरूपणीयस्स तन्निरूपितसंगतिमान् भवति। अत्रैव च तात्पर्यग्राहकोऽवच्छेदकावच्छेदेन निरूपणम्प्रति अवच्छेदकावच्छेदेन संगतेरावश्यकत्वनियमः। अवसरसंगतित्वञ्च जिज्ञासानिवृत्तित्वम्। अत एव जिज्ञासानिवृत्तिरवसर इति श्रूयते।

शाब्दबोधे चेत्यत्र त्वर्थकशब्देनैतदभिप्रेतम्, यथा अनुमितौ परामर्शीयविषयतायाः सांसर्गिकविषयताप्रयोजकत्वन्तथा शाब्दबोधे सांसर्गिकविषयतायाः प्रयोज्यता न सङ्केतज्ञानीयविषयत्वस्य, किन्तु आकाङ्क्षाज्ञानस्यैवेति।

शाब्दबोधे इत्यत्र निरूपितत्वं सप्तम्यर्थः, तस्य च निरूपकतानिरूपितनिरूप्यतात्वस्वरूपत्वेनैतादृशनिरूपितत्वपदार्थैकदेशनिरूपकतायां शाब्दबोधपदार्थस्य निष्ठत्वसम्बन्धेनान्वयो नान्यथा। आख्यातार्थकालकृत्योः स्वरूपसम्बन्धो वा क्वचित्।

शाब्दबोधत्वञ्च–शब्दार्थबोधजनकत्वम्। जनकता च द्वेधा स्वरूपयोग्यताफलोपधायकताभेदात्। तत्र कारणतावच्छेदकीभूतधर्माश्रयत्वं स्वरूपयोग्यत्वम्, यथा घटकारणतावच्छेदकीभूतदण्डत्वधर्माश्रयत्वमरण्यस्थदण्डे। कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तित्वम् फलोपधायकत्वम्, यथा घटजनयितरि कुलालीयदण्डे। अन्यथासिद्धभिन्नत्वनिवेश उभयत्र समः। शाब्दबोधे च आसत्तितात्पर्याकाङ्क्षाज्ञानादेः कारणत्वम्। समासतस्तु—

पदज्ञानन्तु करणन्द्वारन्तत्र पदार्थधीः।
शाब्दबोधः फलन्तत्र शक्तिधीस्सहकारिणी॥ इति।

योगरूढीति—चतुर्विधो हि शब्दः रूढः, योगरूढः, यौगिको यौगिकरूढश्चेति। मण्डपपङ्कजपाचकोद्भिदादीनि क्रमश उदाहरणम्।

प्रत्यक्षानुमानेति–तत्र प्रामाण्यवादे प्रत्यक्षमेव प्रमाणमिति चार्वाकाः। प्रत्यक्षमनुमानञ्चेति द्वे इति वैशेषिकाः। प्रत्यक्षानुमानागमा इति साङ्ख्याः। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति अक्षपादानुयायिनो नैयायिकाः। अर्थापत्त्यनुपलब्धिभेदात् षट् प्रमाणानीति भाट्टवेदान्तिनौ। तत्रापि सम्भवैतिह्यभेदादष्टौ प्रमाणानीति पौराणिकाः। चेष्टया युतानि नव प्रमाणानीत्यालङ्कारिकाः। प्रमाजनकत्वञ्च प्रमाणत्वम्। अत एव न्यायभाष्ये "प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दः" इति।

ह्यात्मनि ज्ञानमिहाकाशे शब्द इतीह बुद्धिरुत्पद्यमाना न विना सम्बन्धमुत्पत्तुमर्हति तेनानुमीयते अस्ति कश्चित्सम्बन्ध" इति स वाक्यार्थे कस्मादागत इत्याशयेनाह शाब्दबोधे चैकेति ।

इति परीक्षालेखप्रकारः ।

अथ शास्त्रार्थप्रकारः ।

अपौरुषेयवेदनिष्ठकर्ममात्रसमर्थकानीश्वरवादिमीमांसकमतं खण्डयन्नप्याह शाब्दबोधे चैकेति । तथाहि, मीमांसकमते घटपदाद् घटोपस्थितिः योग्याऽस्त्यादिक्रियासम्बन्धः, अर्थनिष्ठाकाङ्क्षायोग्यताज्ञानादिकारणसामग्रीसत्त्वादस्तित्ववान् घट इति शाब्दबोधोऽर्थाध्याहारिसम्मतः । किञ्च "पश्यतः श्वेतिमा रूपं ह्रेषाशब्दश्च शृण्वतः । खुरनिक्षेपशब्दश्च श्वेतोऽश्वो धावतीति धीरि"ति तदीया कारिका । श्वेतादिबोधकपदाऽभावेऽपि श्वेतोऽश्वो धावतीतिशाब्दबोधो मीमांसकाभिमत इति च । एवञ्च अर्थनिष्ठाकाङ्क्षायोग्यतादिज्ञानन्न कारणं शाब्दबोधे किन्तु पदनिष्ठाकाङ्क्षायोग्यतादिज्ञानमेवेति तन्मतनिरोधपूर्वकपदनिष्ठाकाङ्क्षाप्रयोज्यसंसर्गस्यैव शाब्दबोधे कारणत्वमिति खण्डनतात्पर्येण प्रदर्शयति शाब्दबोधे चैकेति नैयायिकाः । किञ्च मीमांसकमते कार्यकारणभावस्तु तत्पदजन्यतद्विषयकशाब्दबोधे तत्पदनिष्ठवृत्तिज्ञानाधीनतद्विषयकोपस्थितिः कारणम् । वृत्तिज्ञानाधीननिषेधफलन्तु घटपदजन्यघटविषयकशाब्दबोधे समवायसम्बन्धेन सम्बन्ध्याकाशविषयकशाब्दबोधवारणमेवाकाशोपस्थितेर्वृत्तिज्ञानजन्यत्वाऽभावात् । कार्यकारणभावसमन्वयश्च नीलो घट इत्यादौ, तथाहि—नीलपदजन्यनीलविषयकशाब्दबोधम्प्रति घटपदजन्यघटविषयकशाब्दबोधम्प्रति च नीलघटपदनिष्ठवृत्तिज्ञानाधीननीलघटविषयकोपस्थितेस्सत्त्वात् । एवमन्यत्राऽपि । ननु तन्मते नीलो घट इति वाक्यजन्याऽभेदसंसर्गकनीलत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्न-विशेष्यताकशाब्दबोधेऽभेदसंसर्गप्रवेशो न स्यात् तत्पदनिष्ठवृत्तिज्ञाधीनाऽभेदसंसर्गोपस्थितेरभावात् कार्यकारणभावघटतद्विषयकशाब्दबोधम्प्रतीतिकार्यदलङ्गच्छति परन्तु कारणदलन्न गच्छतीतिहेतोः कार्यतावच्छेदकानाक्रान्तत्वेन कथङ्कारं कार्यसिद्धिः ? कारणात्कार्यमुत्पद्यत इति नियमविरोधात् । शाब्दबोधे सम्बन्धानां स्वातन्त्र्येण प्रवेशश्चेत्तर्हि विनिगमनाविरहेण अबाधितकालिकादिसम्बन्धप्रवेशापत्तौ महदनिष्टमापद्येत । न च मीमांसकमते संसर्गभिन्नतद्विषयकशाब्दबोधत्वावच्छिन्नम्प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनोपस्थितिः कारणमितिकार्यकारणभावेन नास्ति हेत्वनाक्रान्तत्वं दलद्वयमपि संसर्गांशन्नावगाहत इति न व्यभिचार इति वाच्यम् ? गौरवात् तादृशनिषेधानर्हत्वात् इति चेन्न, अन्वितो घटो घटपदशक्य इत्यादिक्रमेण तत्तत्संसर्गविशिष्टघटादित्वावच्छिन्ने घटादिपदशक्तेरङ्गीकारः । न च यथा नीलो घट इति शाब्दबोधे वृत्त्याऽभेदप्रवेशस्तथा विनिगमनाऽभावात्कालिकादिसम्बन्धप्रवेशो दुर्वार इति वाच्यम् ? शाब्दबोधे सम्बन्धभा-

ननियामिका प्रतीतिरेव, तस्यास्सर्वसम्मताया अभावात्। मीमांसकमते दोषप्रकाराः, यत्र शक्तिभ्रमेण खण्डशः घटपदात् घटघटत्वयोर्विशेष्यविशेषणभावरहितयोरुपस्थितिस्तत्र तन्मते कार्यमस्ति हेतुर्नास्ति वृत्तिज्ञानाधीनोपस्थित्यभावात्। तथा च हेतोः कार्यतावच्छेदकानाक्रान्तत्वं स्यात्। किञ्च विनिगमनाविरहेण यथा घट इत्यादौ घटत्वप्रकारकघटविशेष्यकबोधस्तथा घटप्रकारकघटत्वविशेष्यकशाब्दबोधोऽपि तन्मते दुर्वार एव स्यात्। किञ्च शाब्दबोधे शक्तिज्ञानं लक्षणाज्ञानञ्च तन्मतेऽपि कारणमिति तयोः कार्यकारणभावयोः परस्परव्यभिचारवारणाय तत्पदनिष्ठशक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानतद्विषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति तत्पदनिष्ठशक्तिज्ञानाधीनोपस्थितिः कारणम्, तत्पदनिष्ठत्वलक्षणाज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानतद्विषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति तत्पदनिष्ठलक्षणाज्ञानाधीनोपस्थितिः कारणम्। तथाच तन्मतेऽपि संसर्गांशे कार्यकारणभावीयदलद्वयन्न गच्छतीति कथम्व्यभिचार इति न संसर्गविशिष्टे शक्तिः। तथाच घटप्रकारकघटत्वविशेष्यक इत्यादिपूर्वोक्तदोषवारणाय तत्पदजन्यतत्प्रकारकतद्विशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनतत्प्रकारकतद्विशेष्यकोपस्थितिः कारणमिति नैयायिकमतम्। एवञ्च घटप्रकारकघटत्वविशेष्यकोपस्थितेरभावादक्षतेः। अभेदादिसंसर्गस्य यत्किञ्चिन्निष्ठप्रकारतात्मकयत्किञ्चिन्निष्ठविशेष्यतात्मकोपस्थितेरभावात्पदार्थबोधे चिकीर्षिते व्यभिचाराद्यभावान्न तन्मतज्ज्यायस्तरमिति पदार्थद्वयसंसर्गभाननियामकं किमिति स्वमतमाह शाब्दबोधे चैकेति। अस्माच्छब्दादयमर्थो बोद्धव्य इत्यनुभवत्वसाक्षाद्व्याप्ये शाब्दत्वजात्याश्रयश्शाब्दबोध इति फलितम्। नच योगरूढित्वङ्कथमनुमितित्वव्याप्यशाब्दत्वजात्याश्रयश्शाब्दबोध इत्येवास्तु। नच "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"तिशास्त्रे शब्दस्य पृथगुपादानेन स्वातन्त्र्यमेव शब्दार्थयोरिति वाच्यम्? सिद्धान्ते समानविषयकशाब्दबोधम्प्रति प्रत्यक्षसामग्री प्रतिबन्धिकेत्येको नियमः, समानविषयकानुमितित्वावच्छिन्नम्प्रति प्रत्यक्षसामग्री प्रतिबन्धिकेति द्वितीयो नियमः, एकस्मिन्नेव पदार्थे शाब्दत्वमनुमितित्वञ्च पराऽपरत्वेन चिकीर्षितन्तत्र समानविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति अनुमितिसामग्री प्रतिबन्धिकेतितृतीयो नियमः। विनिगमनावैकल्येन समानविषयकानुमितित्वावच्छिन्नम्प्रति शाब्दसामग्री प्रतिबन्धिकेतिचतुर्थो नियमः परन्तु शाब्दत्वस्यानुमितित्वे त्वेकेनैव समानविषयकानुमितित्वावच्छिन्नम्प्रति प्रत्यक्षसामग्री प्रतिबन्धिकेति कार्यकारणभावेन निर्वाहे त्रयाणामकरणरूपलाघवानुसन्धानेन सूत्रविरोधेऽपि क्षतिविरहात्। नच विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्री प्रतिबन्धिकेतिनियमे शाब्दसामग्रीपदेनानुमितिकारणीभूतशाब्दबोधकारणीभूतव्याप्तिपरामर्शपक्षतायोग्यताऽकाङ्क्षाऽऽसत्तितात्पर्याणां सर्वेषामेव सामग्रीत्वेन रूपेण ग्रहणे विशेष्यविशेषणभावे विनिगमनावैकल्येनानेकगौरवमतो नानुमितित्वव्याप्यत्वं शाब्दत्वस्येति, वाच्यम्, तद्विषयकप्रवृत्तिम्प्रति तद्विषयकेष्टसाधनत्वप्रकारकज्ञा-

नन्कारणं पर्वतो वह्निमानित्यादौ व्याप्तिज्ञानादीनामेकस्वरूपेण कारणत्वन्न भवति परस्पर-व्यन्यत्रोवे व्यभिचारश्च कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशः । एवन्नीलो घट इत्यत्राकाङ्क्षायोग्यतादावपि । एवञ्चार्थबोधनाय वाक्यप्रयोग इति न्यायेन व्याप्ति-ज्ञानादिरहिताकाङ्क्षायोग्यतादिघटितसामग्र्यैव शाब्दात्मकानुमित्युत्पत्तिः, विशेषविशेष-सामग्रीसहकारेण शाब्दबोधस्यानुमितित्वसम्भवः । एवञ्च पूर्वोक्तकार्यकारणभावे कारण-मात्राणामप्रवेशेनाऽगौरवात् । तथाच शाब्दबोधस्यानुमितावन्तर्भावे विशिष्टं लाघवं स कुतो नेति प्रश्नकर्तुराशयः । ननु यथा लाघवाच्छाब्दस्यानुमितावन्तर्भावस्तथैव विनि-गमनाविरहेणानुमितेरपि शाब्देऽन्तर्भावः कथन्न ?

यश्चोभयोस्समो दोषः परीहारस्तयोस्समः ।
नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे ॥

इति न्यायात् । नचात्र लाघवाऽभावश्शङ्क्यः, समानविषयकानुमितित्वावच्छि-न्नम्प्रति प्रत्यक्षसामग्री प्रतिबन्धिकेति पृथक् कार्यकारणभावस्याकर्त्तव्यत्वेन समानविषयक-शाब्दबुद्धित्वावच्छिन्नम्प्रति प्रत्यक्षसामग्री प्रतिबन्धिकेत्येकेनैव निर्वाहसम्भवात् । अत एव समानविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति अनुमितिसामग्र्याः प्रतिबन्धकत्वमपि न कर्त्तव्यम्भवत्युभयोरेकत्वात् । नचानुमितेश्शाब्देऽन्तर्भावेऽनुमितावपि शाब्दयामीति-प्रतीतिरापतेदुभयोरेकत्वादिति वाच्यम् ? पूर्वोक्तलाघवरीत्या शाब्देऽप्यनुमिनोमीति-व्यवहाररूपप्रतीते "यश्चोभयोस्समो दोष" इति न्यायेन तुल्यत्वात् । नच न शाब्द-यामीत्याकारकानुव्यवसायेऽनुमितिभिन्नश्शाब्द एव कारणमिति न व्यभिचार इति वाच्यम् ? अनुमिनोमीत्यनुव्यवसायेऽपि शाब्दान्यत्वस्य हेतुत्वसम्भवात् । नच शाब्द-यामीत्यनुभवानुरोधेनोभयोरेकत्वेऽपि न व्यभिचार इति वाच्यम्, नानुमिनोमीत्यनु-भवानुरोधेनाऽपि समाधानस्य तुल्यत्वात् । इति चेत्सत्यम्—उभयत्र समाधानप्रति-बन्द्यैव शाब्दानुमित्योः पार्थक्येनोपादानात् । नच शाब्दमात्रे ज्ञानलक्षणप्रत्यासत्त्योप-स्थितिसत्त्वेन लौकिकसन्निकर्षाऽभावेऽपि शाब्दे प्रत्यक्षत्वमेवास्त्विति वाच्यम्, ज्ञानलक्षणप्रत्यासत्त्याऽपूर्वव्यक्तिभानाऽसम्भवात् । नच सामान्यलक्षणप्रत्यासत्त्यैवाऽ-पूर्वव्यक्तिभानमिति वाच्यम्, तदनङ्गीकारपक्षे दोषात् । नचेश्वरज्ञानस्येव सन्निकर्षा-भावेऽपि शाब्दबोधस्याऽपि प्रत्यक्षत्वसम्भव इति वाच्यम्, ज्ञानाऽकरणकं ज्ञानं प्रत्यक्षमिति हि प्रत्यक्षलक्षणमेवञ्च शाब्दबोधे पदज्ञानादेः करणत्वेन लक्षणा-संघटनात् । नच ज्ञानत्वावच्छिन्नम्प्रति सामान्यरूपेण मन एव कारणम् एवञ्च पद-ज्ञानादेरकरणत्वेन प्रत्यक्षत्वसम्भव इति वाच्यम्, शाब्दत्वजातौ चाक्षुषत्वजात्या साङ्कर्य्याऽपत्तेः । नच शाब्दबुद्धौ प्रत्यक्षत्वस्वीकारे मानसत्वव्याप्यत्वस्यैव शाब्दत्व-जातौ स्वीकारेण तादृशदोषाऽसम्भव इति वाच्यम्, नीलो घटः पीतो घट इति शाब्दबोधाऽव्यवहितोत्तरकाले नीलं घटं साक्षात्प्रत्यक्षीकरोमीत्यनिष्टानुभवापत्तेर्दुर्वार-त्वात् । नच लौकिकसन्निकर्षाऽभावान्नोक्तानुभव इति वाच्यम्, विभिन्नविष-

यकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्री प्रतिबन्धिकेति कार्यकारणभाव एकः, विभिन्न-विषयकप्रत्यक्षत्वावच्छिन्नम्प्रति अनुमितिसामग्री प्रतिबन्धिकेति द्वितीयः, एवञ्च शाब्दबोधस्य प्रत्यक्षत्वस्वीकारे नीलो घट इति पीतो घट इति च शाब्दबोधसाम-ग्रीसत्त्व इष्टोऽपि समूहालम्बनशाब्दबोधो न स्यात्। पीतपदात्मकविभिन्नविषयक-शाब्दबोधरूपप्रत्यक्षत्वावच्छिन्नम्प्रति नीलघटविषयकशाब्दसामग्र्याः प्रतिबन्ध-कत्वेन क्लृप्तत्वात्। एवंविनिगमनाविरहेण नीलघटशाब्दात्मकप्रत्यक्षत्वावच्छिन्नम्प्रति पीतो घट इति शाब्दसामग्र्याः प्रतिबन्धकत्वाऽपत्तेश्च। अनयैव रीत्या पर्वतो वह्निमान् महानसं वह्निमदिति समूहालम्बनात्मकानुमितावपि प्रतिबन्धकत्वापत्तौ समूहालम्बनत्वानुपपत्तिर्बोध्या। नच प्रतिबध्यतावच्छेदककोटौ शाब्दरहितत्वे सती-तिनिवेशोऽर्थात् शाब्दभिन्नविभिन्नविषयकप्रत्यक्षत्वमेव प्रतिबध्यतावच्छेदकमिति तथैवानुमितिरहितविभिन्नविषयकप्रत्यक्षत्वमेव प्रतिबध्यतावच्छेदकमिति कार्यकार-णभावानुरोधेन नोक्तसमूहालम्बनद्वयानुपपत्तिरिति वाच्यम्, शाब्दबोधरहितत्वा-नुमितिरहितत्वनिवेशोऽपि सगौरवस्तत्र विशेष्यविशेषणभावे विनिगमनाविकल्येन वैप-रीत्यानुसन्धाने गुरुधर्मावच्छिन्नानेकप्रतिबध्यतापत्तेश्च। यदि त्वनेकनिरुक्तकार्यकारण-भावलाघवानुरोधेनैतद्गौरवन्न दोषावहमित्युच्यते तर्हि शाब्दत्वस्य प्रत्यक्षत्वोपगमे दोषोऽन्वेषणीयः।

वस्तुतस्तु—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"तिसूत्रे चतुर्णाम्प्रमाणानां पार्थक्येनोपादानात्प्रमेयानामपि शाब्दबोधादीनाम्पार्थक्येनोपादानमेव ज्यायस्तर-मित्यलम्।

अत्र कुशाग्रबुद्धयस्तु—

ननु गामानय गौरस्तीत्यादौ शाब्दबोधसिद्धये शब्दः प्रमाणमानुभविकम्परन्तु तादृशवाक्ये मानस एव बोधस्वीकार्योऽलंशब्दस्य प्रमाणान्तरत्वस्वीकारेणेति चेन्न? विषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नम्प्रति तादात्म्यसम्बन्धेन विषयस्य हेतुत्वमिति-नियमानुसारेण गोकर्मकत्वेनानयनं शृणोमि अस्तित्वेन गां शाब्दयामीत्याद्यनुभवानां सर्वाऽभिमतत्वेनाऽसिद्धयाऽपत्तेः। किञ्च गामानयेत्यादिवाक्यस्थले मानसबोधस्वीकारे प्रतिबन्धकाऽभावात्कारणान्तरेणोपस्थितानां घटदण्डादीनामुपस्थित्या कर्मत्वांशे भाना-पत्तेश्च। न चेष्टापत्तिरत्यन्ताऽनुभवविरोधात्। एवंविधांशे घटादिकर्मकत्वेनानयनं शृणो-मीति विशिष्टानुभवस्यानुदयात्। न चानुमितिरेव साऽस्तु कथं शब्दप्रमाणस्वीकृतिरिति प्रश्ने प्रकारो द्रष्टव्यः। गौरस्तीतिवाक्यश्रवणानन्तरं "गौरस्ति तावती अस्तिपद-साकाङ्क्षपदस्मारितत्वात् चक्षुर्वत्" इतिविशेषानुमानात्। एवमन्यत्राऽपीति वाच्यम्, विनष्टचक्षुषि व्यभिचारसम्भवात्। पक्षे स्मृतिविषयत्वाऽज्ञानदशायामपि शाब्दमतेर-नुभवसिद्धत्वाच्छाब्दम्प्रति पदजन्योपस्थितेरेव कारणत्वात्तद्विषयत्वज्ञानस्यानावश्यक-त्वेन शाब्दस्यैव युक्तत्वात् इत्याहुः।

अत्रैव प्रसङ्गात्कारणत्वं विचार्य्यते—

ननु कारणत्वञ्च अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववृत्तित्वमिति । अत्र लक्षणे अन्यथासिद्धित्वस्यानुगतरूपेण ज्ञानाऽभाव इति कथं लक्षणसिद्धिरितिचेन्न ? नियतपूर्ववर्त्तिवृत्तिदण्डत्वादिभेदकूटवत्त्वे सति घटनियतपूर्ववर्त्तित्वं घटकारणत्वम् । अनियतपूर्ववर्त्तिपटादिवारणाय विशेष्यदलम् । नच विशेषणकोटौ पटादिभिन्नत्वे सतीत्यस्य निवेशः ? गौरवात् । अत्र नियतपूर्ववर्तित्वञ्च कार्याऽव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । दण्डत्वादिवारणाय सत्यन्तनिवेशः । अत्र शुक्लाः ननु कार्यप्राक्क्षणे कार्याऽसत्त्वेन तदानीं कार्याधिकरणत्वस्य कथङ्कारं सम्भवः ? कार्यकारणयोरेककालावच्छेदेनैकाधिकरणकारणज्ञानवृत्तित्वाऽभावात् यावत्कार्यज्ञानन्नास्ति तावत्कारणज्ञानन्न भवेत् यावच्च कारणज्ञानन्नास्ति तावत्कार्यज्ञानन्न भवेत् इतिपरस्परापेक्षत्वात् । न च कार्यकारणयोस्साक्षात्सम्बन्धाऽभावेऽपि परम्परासम्बन्धेन कथञ्चित्कार्याऽसत्त्वकालेऽपि कार्यवत्त्वाङ्गीकारेणैकाधिकरणवृत्ति वास्कारणत्वलक्षणं युक्तमेवेति वाच्यम् ? परम्परासम्बन्धेन कार्यवत्त्वमित्यत्रापि कारणत्वज्ञानमन्तरा सिद्धिर्न भवेत्, भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन परम्परासम्बन्धस्वीकारेपि कार्यकारणयोरैक्याऽभावेन लक्षणे महाप्रलयस्य दुर्वारत्वात् । किञ्च उक्तकारणत्वलक्षणात् प्राक् एवं किञ्चिदस्तीत्यवगम्यते तदुत्पत्तिस्तु कुतो न ज्ञायते तदुत्पत्तिप्रयोजकत्वादिक किञ्चिद्विलक्षणमङ्गीकार्यं स्यात्तर्हि विलक्षणं कीदृशं विलक्षणे विलक्षणञ्चीदृशमित्यनवस्था दुर्वारैव स्यात् ।

वस्तुतस्तु कल्पितं कार्यकारणयोरधिकरणत्वमाश्रित्य लक्षणसंघटने कथञ्चिद्विवादराहित्यम् । ननु तद्विषयकशाब्दानुकूलशक्तिमत्त्वेन पदार्थज्ञाने पदानां कारणत्वे भाविभूतपदज्ञानाच्छाब्दबोधो न स्यात् तयोश्शाब्दबोधप्राक्कालावच्छेदेनावर्त्तमानत्वात् । कारणस्य च कार्याव्यवहितप्राक्क्षणसत्त्वस्योक्तत्वादिति चेन्न, केषांचिन्मते पदानान्नित्यत्वात् । नच शाब्दधाराप्रसङ्गः, ज्ञानविषयतापन्नशक्तिमत्त्वेन पदानां हेतुत्वात् । नच पुरुषान्तरीयज्ञानदशायाम्पुरुषान्तरस्य शाब्दबोधापत्तिरिति वाच्यम् ? तत्तत्पुरुषीयत्वस्य तत्र तत्र निवेशेनाऽदोषात् । नच शब्दस्याकाशधर्मत्वाच्छाब्दबोधकारणत्वं कथमिति वाच्यम् ? कालिकविशेषणतया कार्यकारणभावाऽभ्युपगमेन कार्यकारणयोस्सामानाधिकरण्यसम्भवात् । तथा च शब्दाः प्रमाणमितिविवेकेन शब्दप्रमाणस्य गरीयस्त्वात् इति । समन्वयश्च नीलो घट इत्यादौ नीलादिपदजन्यनीलादित्वप्रकारकनीलादिनिष्ठविशेष्यताकशाब्दबोधे नीलादित्वप्रकारकनीलादिनिष्ठविशेष्यताकोपस्थितेस्सत्त्वात् । न च नीलो घट इत्यादिवाक्यजन्याऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधे नीलप्रकारकोपस्थितेरभावाद्धेतोः कार्यतावच्छेदकानाक्रान्तत्वं स्यादिति वाच्यम् ? कार्यतावच्छेदककोटीयप्रकारांशे निरवच्छिन्नत्वनिवेशात् । नीलो

---

निरवच्छिन्नत्वञ्च—पदशक्यसम्बन्धातिरिक्तयत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छेद्यत्वाभावव-

घट इत्यादौ अभेदसंसर्गकंनीलनिष्ठा प्रकारता नीलत्वावच्छिन्नत्वेन सावच्छिन्नेति न कार्यदलीयो व्यभिचार इत्याशयात्। समन्वयश्च यथा घट इत्यादौ घटनिष्ठविशेष्यतानिरूपिता घटत्वनिष्ठा प्रकारता निरवच्छिन्नैवेति समवायसंसर्गकनिरवच्छिन्नघटत्वप्रकारकघटविशेष्यकशाब्दबुद्धिम्प्रति घटत्वप्रकारकघटविशेष्यकोपस्थितिरस्त्येवेति। नचैवन्निवेशे गुरुरित्यादौ आश्रयत्वसंसर्गकगुरुत्वप्रकारकगुरुविशेष्यकशाब्दबोधो न स्यात् गुरुत्वस्य जात्यखण्डोपाध्यतिरिक्तपदार्थत्वेन गुरुत्वत्वेनोपस्थितेः। एवञ्च गुरुत्वनिष्ठा प्रकारता गुरुत्वत्वावच्छिन्नत्वेन सावच्छिन्नैवेति कथं शाब्दबोध इति वाच्यम्? प्रकारांशे निरवच्छिन्नत्वनिवेशम्परित्यज्य विशेष्यांशे देयस्तथा च गुरुनिष्ठा विशेष्यता निरवच्छिन्नैवेति तत्राऽदोषात्। न च पूर्वोक्तरीत्या नीलो घट इत्यादावभेदसंसर्गकसावच्छिन्नविशेष्यकशाब्दबोधः कथमिति वाच्यम्, तत्र कारणान्तरमादाय शाब्दबोधविधानात्।

शाब्दबोधे चेत्यत्र चशब्दस्तुशब्दार्थकोऽनुमित्यादिभ्यो वैलक्षण्यन्द्योतयति। अथवा यावत्तावच्छब्दवद्वाक्यालङ्कारार्थश्च। शाब्दबोध इत्यत्र निरूपितत्वं सप्तम्यर्थ इति विद्वद्धौरेया वदन्ति तत्र कुशाग्रबुद्धीनान्न रुचिः। निरूपितत्वस्य वृत्त्यनियामकत्वेन सप्तम्यर्थत्वाऽभावात्। आश्रयत्वसंयोगादीनामेव वृत्तिनियामकत्वम् प्रसिद्धम्, येन सम्बन्धेन यः पदार्थो यत्रास्ति स एवाधिकरणतानियामक इत्याशयः। किञ्च निरूपितत्वस्य सप्तम्यर्थत्वे व्याप्यव्यापकभावभङ्ग एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गत्वमेवोद्देश्यतावच्छेदकं तच्च प्रत्यक्षानुमानोपमानेषु सर्वत्र साधारणं शाब्दबोधनिरूपिताकाङ्क्षाप्रयोज्यविषयताश्रयत्वाख्ये विधेये तद्व्यापकत्वं व्याहन्येतेत्यभिप्रायात्। एवञ्च अभिव्यापकत्वं सप्तम्यर्थः, प्रकृत्यर्थतावच्छेदकव्यापकत्वमिति फलति। भासधात्वर्थो विषयता आश्रयत्वन्तङर्थः एकपदार्थ इत्यत्रानुयोगित्वं सप्तम्यर्थः, अपरपदार्थ-

---

त्वम्। यथा पट इतिज्ञानीयविशेष्यतानिरूपिता पटत्वनिष्ठा प्रकारता निरवच्छिन्ना। प्रकारतायास्सर्वत्र यत्किञ्चित्सम्बन्धावच्छिन्नत्वेन लक्षणासम्भववारणाय सम्बन्धातिरिक्तेतिनिवेशः।

सावच्छिन्नत्वञ्च—यत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्त्वम्। पटवन्महानसमित्यादौ महानसत्वावच्छिन्नविशेष्यतानिरूपिता पटनिष्ठा प्रकारता पटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्त्वेन सावच्छिन्ना।

प्रतियोगित्वम्—"अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इत्युदयनाचार्यव्याख्यानुसारि अभावाभावरूपत्वं लक्षणम्, यथा घटनिष्ठप्रतियोगित्वन्नाम घटाभावाभावत्वम्। एतच्चाभावस्थलीयं लक्षणम्। भावस्थलेऽपि (अपरपदार्थनिष्ठप्रतियोगितानिरूपके) व्यवहारात् प्रति (पूर्वं) योगोऽस्यास्तीति प्रतियोगी तस्य भावस्तत्ता बोध्या।

अनुयोगित्वञ्च—स्वरूपसम्बन्धविशेषः, यथा भूतले घट इत्यत्र भूतले घटसत्त्वादशायां भूतलनिष्ठा भूतलस्वरूपा संयोगसम्बन्धस्यानुयोगिता। पटो नास्तीत्यादौ पटनिष्ठप्रतियोगितानिरूपितानुयोगिताऽभावे। अनु (पश्चाद्) योगोऽस्यास्तीत्यनुयोगी तस्य भावस्तत्त्वम्। विस्तरस्तु परिष्कारदर्पणे द्रष्टव्यः।

स्येत्यत्र प्रतियोगित्वं षष्ठ्यर्थः, संसर्गमर्यादाशब्दार्थः आकाङ्क्षाप्रयोज्यसंसर्गत्वम्' अभेदस्तृतीयार्थः। एवञ्च एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्ग आकांक्षाप्रयोज्यसंसर्गत्वाऽभिन्नशाब्दबोधत्वव्यापकविषयताश्रय् इति विशिष्टार्थः। पदार्थद्वयसंसर्गश्शाब्दबोधे आकाङ्क्षाबलेनैव भासते। पीतघटमानयेत्यादौ पीतप्रतियोगिकघटानुयोगिको यो हि पीतघटयोरभेदादिसंसर्गस्तस्य पदानुपस्थितत्वेनाकाङ्क्षाबलेनैव भानम्। एवमेव राजपुरुष इत्यादिसमासस्थले राजप्रतियोगिकपुरुषानुयोगिकस्वत्वोपस्थापकपदाऽभावात्स्वत्वसम्बन्धज्ञानं विना विशिष्टबोधस्य राजपुरुष इत्यस्यानुपपत्त्या आकाङ्क्षाबलेन स्वत्वसंसर्गस्य शाब्दबोधे व्यवहृतिः। आकाङ्क्षा तु—

यत्पदेन विना यस्याननुभावकता भवेत्।
आकाङ्क्षा वक्तुरिच्छा तु तात्पर्य्यम्परिकीर्त्तितम्॥

इतिकारिकावली, आकाङ्क्षायोग्यताऽऽसत्तितात्पर्य्याणि शाब्दबोधकारणानि। तथाहि नीलो घट इत्यादौ अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानङ्कारणमित्याकाङ्क्षाज्ञानाकारः। अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति नीलपदजन्यनीलत्वावच्छिन्नघटपदजन्यघटत्वावच्छिन्नोपस्थितिरूपयोग्यताज्ञानङ्कारणमिति योग्यताज्ञानाऽऽकारः। नीलपदाव्यवहितोत्तरवर्त्तिघटपदत्वरूपाऽऽसत्तिज्ञानङ्कारणम्। तत्पदाऽव्यवहितोत्तरवर्त्तितत्पदत्वरूपमेवाऽऽसत्तिज्ञानमित्यासत्तिज्ञानाऽऽकारः। नीलो घट इतिवाक्यमभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नविशेष्यताकशाब्दबोधञ्जनयत्विति तात्पर्य्यज्ञानाऽऽकारः।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च षड्भिस्तात्पर्य्यनिर्णयः॥

इतिदार्शनिकाः। गदाधरभट्टाचार्य्यास्तु समभिव्याहाररूपाकाङ्क्षाज्ञानन्न शाब्दबोधे कारणं केवलेन तात्पर्यज्ञानकारणेनैव गतार्थत्वादिति मूल एवाहुः।

ननु पदप्रयोगेणैवार्थज्ञानमित्यर्थज्ञानार्थं सर्वत्र लोके पदप्रयोग इति व्याप्तिः। परन्तु पदप्रयोग विनैव प्रकरणानुमानेङ्गनचेष्टनर्निमेषणादिप्रमाणान्तरेणोपस्थितिविषयीभूतो यः पदार्थो घटपटादिस्तस्य प्रकारविशेष्यविधया शाब्दबोधे प्रतीतिः कुतो नेति प्रश्नः। घटः कर्मत्वम् आनयनम् कृतिः नीलं घट इत्यादिषु तत्तत्पदजन्यपदार्थोपस्थितौ

---

पदार्थत्वञ्च—तत्तत्पदनिष्ठवृत्तिज्ञानाधीनवृत्तिविषयकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्ना याऽवच्छेदकता ताद्दशावच्छेदकतानिरूपिता याऽवच्छेद्यता ताद्दशावच्छेद्यतावती या विषयता ताद्दशविषयताश्रयत्वम्। तत्तत्पदनिष्ठेतिनिवेशान्न घटपटयोरन्योन्यपदार्थत्वम्। निरूप्यनिरूपकभावप्रवेशाच्च न समूहालम्बनादिकमादाय दोषसम्भवः।

घटनिष्ठकर्मतानिरूपकानयनानुकूलकृतिविषयकशाब्दबोधवारणाय अभेदसम्बन्धेन नील-विशिष्टघटविषयकशाब्दबोधवारणाय घटमानयेतिवाक्यजन्यशाब्दबुद्धौ एकसम्बन्धिज्ञान-मपरसम्बन्धिस्मारकम्भवतीतिन्यायेन घटादिपदज्ञानजन्योपस्थितौ भासमानाकाशविष-यकशाब्दबोधवारणाय च संसर्गभिन्नपदानुपस्थितपदार्थस्य शाब्दबोधे भानन्न भवतीति कल्पनाया वृत्त्या पदजन्यपदार्थोपस्थितिश्शाब्दबोधे कारणमिति नियमानुरोधेन प्रकृ-तत्वात्। नन्वेतन्मते पूर्वोक्तरीत्या पदनिष्ठाकाङ्क्षाज्ञानमेव शाब्दबोधे कारणमितिसि-द्धमेवञ्च घटः कर्मत्वमानयनं कृतिरित्यादिषु घटपदसमभिव्याहृतकर्मत्वपदरूपाकाङ्क्षाज्ञा-नस्य सत्त्वेन घटनिष्ठकर्मतानिरूपकानयनमितिशाब्दबोधस्स्यादेवेति चेन्न, द्वितीयान्तघट-पदसमभिव्याहृतानयनपदसमभिव्याहारस्यैव कारणत्वाऽभ्युपगमेन क्षतिविरहात्। नन्वै-कघटादिपदादपि शाब्दबोधो दुर्वारस्तथाहि नीलपदसमभिव्याहृतघटपदत्वरूपाकाङ्क्षाज्ञा-नाऽव्यवहितोत्तरजायमाननीलाऽभिन्नो घट इति शाब्दबोधम्प्रति नीलपदसमभिव्याहृ-तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमेवं शाब्दबोधेऽपि कार्यकारणभावस्तथाच तत्तदाकाङ्क्षा-ज्ञानाऽभावस्य क्षतिकरत्वाऽभावेनोक्तशाब्दस्य निश्शङ्कत्वादिति वाच्यम्? यद्विशेष-योः कार्यकारणभावस्तत्सामान्ययोरपीतिन्यायेन सामान्यरूपेण शाब्दबोधत्वावच्छिन्न-म्प्रति पदविशिष्टपदत्वरूपाकाङ्क्षाज्ञानङ्कारणमित्यभिप्रायात्। वैशिष्ट्यञ्च स्वभिन्नत्व-स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वमित्युभयसम्बन्धेन परिष्काराश्रयणात्। एवञ्च सामान्यकारणाऽभावेनैकपदाच्छाब्दाऽपत्तेरसम्भवादित्यलम्।

यथा नीलो घट इत्यादौ एकपदार्थो घटस्तदनुयोगिकोऽपरपदार्थो नीलस्तत्प्रतियो-गिकश्चाभेदसंसर्ग इति समन्वयः। नन्वेवं पर्वतो वह्निमानित्यादौ व्याप्तिभास्यसंयोग-स्याऽप्याकाङ्क्षाभास्यत्वापत्तावुद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयविरोध इति चेन्न, नहि तावदुद्देश्यतावच्छेदकमेकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गत्वं किन्तु प्रा-

---

संसर्गत्वञ्च—सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति द्विष्ठत्वे सति विशिष्टबुद्धिनियामकत्वम्। द्रव्यत्वाभाववान् गुण इत्यत्रत्यस्वरूपसम्बन्धस्य लाघवेन प्रतियोगिस्वरूपतामङ्गीकृत्य संसर्गत्वसम्भ-वो न स्यादिति सम्बन्धप्रतियोग्यनुयोगिभिन्नेतिनिवेशो नास्तीति केचित्।

प्रकारताविशेष्यताभिन्नत्वे सति विशिष्टधीनियामकत्वे सति विषयतात्वं संसर्गतात्वमितितर्क-शास्त्राधिकारिणः।

परे तु—सम्बन्धानवच्छिन्ना विषयतैव संसर्गतेत्युच्यमानश्शास्त्रीयो व्यवहारः।

वस्तुतस्तु—शाब्दबोध इत्यत्र विषयत्वं सप्तम्यर्थः न तु निरूपितत्वम् तच्च संसर्गपदार्थान्वयि ज्ञेयम्। एकपदार्थ इत्यत्रानुयोगित्वं सप्तम्यर्थः, अपरपदार्थस्येत्यत्र प्रतियोगित्वं षष्ठ्यर्थः। अवयवा-र्थनिरपेक्षत्वे सति समुदायार्थोपस्थापकत्वमिति लक्षणकरूढशब्दत्वेन संसर्गमर्यादाशब्द आकाङ्क्षायां रूढः। प्रयोज्यत्वन्तृतीयार्थः, प्रयोज्यत्वञ्च स्वविषयकज्ञानजन्यज्ञाननिरूपितत्वात्मकं ज्ञेयम्। भास-धात्वर्थो विषयता, तदर्थ आश्रयत्वम्, एवञ्च एकपदार्थनिष्ठानुयोगितानिरूपकस्सन्नपरपदार्थनिष्ठप्रति-योगितानिरूपकश्च सञ्छाब्दबोधनिरूपितविषयताश्रयो यस्संसर्गस्स आकाङ्क्षानिरूपितप्रयोज्यतानिरू-पिताश्रयतावान् भवतीति ध्येयम्।

त्ताऽप्राप्तविवेकन्यायेनैकपदार्थनिष्ठानुयोगितानिरूपकाऽपरपदार्थनिष्ठप्रतियोगितानिरूपक-संसर्गवृत्तिशाब्दबोधत्वव्यापकविषयतात्वम्। एवञ्च विषयतामुद्दिश्याकाङ्क्षाप्रयोज्यत्वविधानेनानुमितिस्थलीयसंयोगसंसर्गस्य तादृशविषयतावत्त्वाऽभावान्नाकाङ्क्षाभास्यत्वम्। किञ्च शाब्दबोध इत्यत्र वृत्तित्वं सप्तम्यर्थः, तथाच एकपदार्थानुयोगिकोऽपरपदार्थप्रतियोगिकश्शाब्दवृत्तिस्संसर्गस्तु आकाङ्क्षाप्रयोज्यशाब्दबुद्धित्वव्यापकविषयताश्रय इ.त नानुमित्यादिस्थले दोष इति। ननु एकत्वत्वेनैकत्वस्य अपरत्वत्वेनापरत्वस्य सामान्यरूपेण भाने तदुपादानवैयर्थ्यम्, तच्छब्दप्रवेशात् तत्तदेकत्वत्वेनैकत्वस्य तत्तदेकत्ववद्भेदवत्त्वेनापरत्वस्य प्रवेशेऽननुगमापातः। अयम्भावः, अपरपदस्यार्थो भेदो भेदाश्रयश्च, सोऽपि समभिव्याहृतपदार्थस्यैव। सच समभिव्याहृतपदार्थत्वावच्छिन्नप्रतियोगिताक आहोस्वित् समभिव्याहृतयत्किञ्चित्पदार्थनिष्ठप्रतियोगिताकः। नाद्यः, तथासत्यप्रसिद्धेः। तथाहि नीलो घट इत्यादावेकपदार्थो घटस्तदनुयोगिकाऽभेदसंसर्गो ज्ञातः परन्तु पदार्थत्वावच्छिन्नप्रतियोगिताकभेदाश्रयो नास्ति सर्वे पदार्था एकपदार्थपदेन ग्राह्या भवन्ति इतिनीलेऽपि एकपदार्थत्वस्य सत्त्वादेकपदार्थत्वावच्छिन्नप्रतियोगिताकभेदवन्नीलपदार्थो न ज्ञात इति तत्प्रतियोगिकत्वं संसर्गे न गतमिति तत्रोद्देश्यतावच्छेदकव्यापकत्वं हेतोरनुपपन्नं स्यात्। नान्त्यः, तथासत्यननुगतस्स्यात्। तथाहि नीलो घट इत्यादौ एकपदार्थो घटस्तन्निष्ठानुयोगितानिरूपकापरपदार्थप्रतियोगितानिरूपकभेदाश्रयो नीलपदार्थस्तत्प्रतियोगिकोऽप्यभेदसंसर्गो ज्ञातः परन्तु राजपुरुष इत्यादावेकपदार्थपदेन राजपदार्थस्य ग्रहणन्न स्यात्। एकपदार्थस्तु नीलो घट इत्यादावेकपदार्थपदेन घटं संगृह्य नष्टः सकृदुच्चरितश्शब्दस्सकृदर्थं गमयतीति नियमात्।

ननु एकञ्च तत्पदमेकपदम् तस्यार्थ एकपदार्थः अपरञ्च तत्पदमपरपदन्तस्यार्थोऽपरपदार्थ इति विगृह्यानुगतत्वाऽभावो वारयितुं शक्यस्तथासत्यपि यदि एकपदत्वावच्छिन्नप्रतियोगिताकभेदवद् यत् पदन्तदर्थनिष्ठप्रतियोगिताकसंसर्गश्चेत्तदाऽप्रसिद्धिर्दुर्वारा सर्वत्रैकपदत्वस्य सत्त्वात्। नच एकपदनिष्ठप्रतियोगिताकभेदवद् यत्पदन्तदर्थप्रतियोगिक इति, तथासत्यननुगतनिरुक्तदोषस्य दुर्वारत्वात्। तथाचाननुगतनिरुक्तदोषवारणाय पदार्थविशिष्टस्संसर्ग आकाङ्क्षाभास्यः, पदार्थवैशिष्ट्यन्तु संसर्गे स्वनिष्ठानुयोगितानिरूपकत्व-स्वेतरपदार्थनिष्ठप्रतियोगितानिरूपकत्वोभयसम्बन्धेन। तथाच न कुत्राऽप्यननुगतत्वदोष इति तात्पर्यात्। नच नीलो घट इत्यादावेवाऽभेदसंसर्गस्य शाब्दबोधे भानन्न स्यात्? तथाहि—शाब्दबोधे एकपदार्थो घटस्तदनुयोगिकत्वस्याभेदे सत्त्वेऽपि अपरपदार्थप्रतियोगिकत्वन्नास्ति अभेदप्रतीत्या नीलपदवाच्यघटपदवाच्ययोरैक्यात् घटपदार्थापेक्षयाऽपरपदार्थपदेन नीलपदार्थस्य धर्तुमशक्यत्वात् इति वाच्यम्, पदविशिष्टस्संसर्ग आकाङ्क्षाभास्य इति परिष्कारात्। वैशि० स्वार्थनिष्ठानुयोगितानिरूपकत्व-स्वेतरपदार्थनिष्ठप्रतियोगितानिरूपकत्वोभयसम्बन्धेन। स्वं घटपदन्तदर्थनिष्ठायाऽनुयोगिता तन्निरूपकत्वमभेदस्यास्ति, स्वेतरपदन्नीलपदन्तदर्थो नीलपदार्थस्तन्निष्ठा

या प्रतियोगिता तन्निरूपकत्वमभेदस्येतिसमन्वयः। ननु पचधातुसमभिव्याहारे विक्लित्तिव्यापारयोर्जन्यजनकयोस्सम्बन्धयोराकाङ्क्षाभास्यत्वन्न स्यात्। तथाहि–पचधातोर्विक्लित्तित्वावच्छिन्ने व्यापारत्वावच्छिन्ने च खण्डशश्शक्तिस्तथा च तण्डुलम्पचति चैत्र इत्यादौ विक्लित्तेर्जनकत्वसम्बन्धेन व्यापारेऽन्वयः, तथाच तण्डुलनिष्ठविक्लित्तिजनकव्यापाराश्रयश्चैत्रस्तत्र जनकत्वसम्बन्धस्य स्वार्थनिष्ठानुयोगितानिरूपकत्वेऽपि स्वेतरपदाऽभावादाकाङ्क्षाभास्यत्वन्न स्यात। एवम्पच्यते चैत्रेण तण्डुल इत्यादौ व्यापारस्य विक्लित्तौ जन्यत्वसम्बन्धेनान्वयः, चैत्रवृत्तिव्यापारजन्यविक्लित्त्याश्रयस्तण्डुलस्तत्राऽप्युक्तयुक्त्या जनकत्वसम्बन्धस्याकाङ्क्षाभास्यत्वन्न स्यात्। नच पचधातोस्समुदाये एव शक्तिरस्तु नतु खण्डशश्शक्तिः फलावच्छिन्नव्यापार एव शक्य इति न दोष इति वाच्यम्? नैयायिकमते प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोध इतिनियमात्तण्डुलम्पचतीत्यादौ तादृशबोधे सिद्धेऽपि कर्मप्रत्ययसमभिव्याहारे विक्लित्त्यनुकूलव्यापारस्य जन्यत्वसम्बन्धेन विक्लित्तावन्वये तादृशबोधो न स्यादिति दोषात्। नच समुदाय एव शक्तिरस्तु कर्मप्रत्यये तु विक्लित्त्यनुकूलव्यापारस्य जन्यत्वसम्बन्धेन विक्लित्तावन्वयेन तण्डुलनिष्ठविक्लित्त्यनुकूलव्यापारजन्यविक्लित्त्याश्रयस्तण्डुल इति प्रथमान्तार्थमुख्यविशेष्यको बोधस्स्यादेवेति वाच्यम्, शाब्दबोधे विक्लित्तेर्द्विधा भानाऽपत्तेः। व्यापारस्य विक्लित्तावन्वये पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति न्यायविरोधाच्च। नच व्यापारजन्यविक्लित्तावेव शक्तिरस्तु इति वाच्यम्, कर्तृप्रत्ययसमभिव्याहारे विक्लित्तेर्द्विधा भानादेकदेशान्वयदोषाच्च। न च विक्लित्तिजनकव्यापारे एवास्तु शक्तिरिति वाच्यम्? कर्मप्रत्ययसमभिव्याहारे पूर्वोक्तदोषस्य जागरूकत्वात्। किञ्चैवम्परिष्कारे राम राम कृष्ण कृष्ण "काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः। प्राप्ते वसन्तसमये काकः काकः पिकः पिक" इत्यादावभेदसंसर्गग्रहणन्न स्यात्। एकपदाख्यातार्थकालकृत्योराधेयत्वसम्बन्धस्याकाङ्क्षाभास्यस्य च संग्रहो न स्यात्पदद्वयार्थाभावात्। किञ्च एवशब्दस्य यद्यन्ययोगव्यवच्छेदे शक्तिस्तदा पार्थ एव धनुर्द्धर इत्यादौ इतरस्य योगस्सम्बन्धस्तस्य व्यवच्छेदो निवृत्तिरेवञ्च पार्थेतरस्मिन् धनुर्द्धरत्वाऽभावेऽपि इतरपदेन तत्प्राणिनां ग्रहणाऽपत्तौ तन्निवृत्तिर्नास्तीतिदोषात्। खण्डशश्शक्तिरन्ययोगे व्यवच्छेदे च तत्रान्ययोगपदार्थस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन व्यवच्छेदपदार्थेऽन्वयस्स आकाङ्क्षाभास्यो न स्यात् स्वेतरपदाऽभावात् इति वाच्यम्, पदार्थविशिष्टस्संसर्ग आकाङ्क्षाभास्य इति कल्पनात्। वै० स्वनिष्ठानुयोगितानिरूपकत्व-स्वेतरनिष्ठप्रतियोगितानिरूपकत्वोभयसम्बन्धेन। तथाच विक्लि-

---

विशेषतया—वाक्यं द्विविधं भवति उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयपरम् उद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयपरम्। यथा शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनमित्यत्र विष्णुसम्बन्धिशङ्खत्वावच्छेदेन विधेयान्वये हार्दम्। नीरूपं स्पर्शवन्मनोऽत्र रूपशून्यत्वविशिष्टस्पर्शवत्वसामानधिकरण्येनान्वये तात्पर्यम्।

त्तिपदार्थव्यापारपदार्थयोर्भिन्नत्वात् अन्ययोगपदार्थव्यवच्छेदपदार्थयोर्भिन्नत्वात् प्रत्युच्चारणं शब्दो भिद्यत इतिन्यायेन कृष्ण कृष्ण इत्यादावपि द्वयोर्भिन्नत्वात्। नच नीलो घट इत्यादावभेदसम्बन्धेन प्रतियोगिन एवानुयोगित्वेन भेदाऽभावः, शक्तिभास्यपदार्थपदार्थतावच्छेदकसंसर्गाणामपि पदार्थविशिष्टत्वापत्तौ व्यापकत्वभङ्गश्चेति वाच्यम्, पदार्थतावच्छेदकविशिष्टस्संसर्ग आकाङ्क्षाभास्य इति तात्पर्यात्। वै० स्वावच्छिन्नानुयोगितानिरूपकत्व-स्वेतरधर्मावच्छिन्नप्रतियोगितानिरूपकत्वैतदुभयसम्बन्धेन। एवञ्च पचधातुसमभिव्याहारे कर्तृप्रत्ययस्थले स्वं व्यापारत्वन्तदितरो धर्मो विक्लित्तित्वन्तन्निष्ठप्रतियोगितानिरूपकत्वसत्त्वात्। एवन्नीलत्वघटत्वयोर्भिन्नत्वात्, एवपदस्थले अन्ययोगत्वव्यवच्छेदत्वयोर्भिन्नत्वात्, एवन्तदुच्चारणीभूतकृष्णत्वतदुच्चारणीभूतकृष्णत्वयोर्भिन्नत्वाद्दोषपुञ्जाऽभावात्। नच सम्पन्नो व्रीहिरित्यादौ व्रीहित्वानुयोगिकैकत्वप्रतियोगिकस्वाश्रयत्वसंसर्गस्य आकाङ्क्षाभास्यत्वन्न स्यात् इति वाच्यम्, स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वेन स्वाश्रयव्रीहित्ववत्त्वेन व्रीहावेवान्वयस्वीकारात्। न च राज्ञो राजेत्यादावसमस्तस्थले स्वत्वसंसर्गस्याकाङ्क्षाभास्यत्वन्न स्यात् स्वत्वस्य राजपदार्थतावच्छेदकधर्मावच्छिन्नानुयोगितानिरूपकत्वेऽपि द्वितीयसम्बन्धो न गतः स्वम्पदार्थतावच्छेदकधर्मो राजत्वम् तदितरधर्मो राजत्वन्नास्ति, तथाच तदितरधर्मावच्छिन्नप्रतियोगितानिरूपकत्वरूपद्वितीयसम्बन्धानवगमात्स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितराजत्वावच्छिन्नविशेष्यताकबोधो न स्यादिति वाच्यम्? प्रकारतावादिगदाधरमते स्वत्वप्रकारकबोधस्यैवाङ्गीकारात्। एवञ्च स्वत्वं षष्ठ्यर्थः तत्र राजपदार्थस्य निरूपितत्वसम्बन्धेनान्वयः, स्वत्वषष्ठ्यर्थपदार्थस्य स्वरूपसम्बन्धेन अग्रिमराजपदार्थेऽन्वयः, तथाच निरूपितत्वसम्बन्धावच्छिन्नराजत्वाच्छिन्नप्रकारतानिरूपितस्वत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितराजत्वावच्छिन्नविशेष्यताक इति। राजराज इतिसमासस्थले तु राजपदस्य राजस्वामिनि लक्षणयाऽभेदसंसर्गको बोध इति तत्र राजस्वामित्वराजत्वयोर्भिन्नत्वात् इति। परीक्षालेखप्रकारः।

## अथ शास्त्रार्थप्रकारः

नच जातिमान् घट इत्यादौ पदार्थतावच्छेदकैक्यादभेदान्वयबोधो न स्यात् इति वाच्यम्, तत्रापि पदार्थतावच्छेदकावच्छेदकभेदस्य सत्त्वात् जातिमत्पदार्थतावच्छेदकावच्छेदकस्य जातित्वस्य घटत्वस्य च भेद प्रसिद्धेः।

नच चैत्रस्य गुरुकुलमित्यादौ चैत्रपदार्थस्य निरूपितत्वसम्बन्धेन गुरुत्वेऽन्व-

---

उद्देश्यत्वञ्च—विधेयतानिरूपितत्वम्। विषयताविशेषत्वं वा। सम्बन्धविशेषत्वं वा।

विधेयत्वञ्च—विशेष्यतावच्छेदकताभिन्नमुख्यविशेष्यतानिरूपितप्रकारत्वम्। विषयताविशेषत्वं वा। सम्बन्धविशेषत्वं वा।

चैत्रस्य गुरुकुलमिति—इह चैत्रपदार्थस्य निरूपितत्वसम्बन्धेन गुरुत्वेऽन्वयः, एवञ्च चैत्रनिरूपितं यद् गुरुत्वन्तादृशगुरुत्ववत्कुलमिति बोधः। गुरुत्वगुरुसमवायो गुरुपदार्थः। तत्र गुरुपदार्थे

यस्तस्याकाङ्क्षाभास्यत्वन्न स्यात् गुरुत्वनिष्ठनिरवच्छिन्नानुयोगितायाः पदार्थतावच्छेदकावच्छिन्नत्वाऽभावादिति वाच्यम्, गुरुत्वस्य जात्यखण्डोपाध्यतिरिक्तत्वेन जात्यखण्डोपाध्यतिरिक्तपदार्थस्य किञ्चिद्धर्मपुरस्कारेणैव भानमिति नियममनुसृत्य गुरुत्वस्य गुरुत्वत्वेनोपस्थितिरिति तयोर्भिन्नत्वेनादोषात् । नच लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वनियमात्कम्बुग्रीवादिमान्नास्तीत्यादौ स्ववृत्तिकम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वसंसर्गस्याकाङ्क्षाभास्यत्वन्न स्यादिति वाच्यम्, कम्बुग्रीवादिमत्त्वस्याऽप्यखण्डोपाध्यतिरिक्तत्वेन कम्बुग्रीवादिमत्त्वेन भानात्तत्र स्वावच्छिन्नप्रतियोगिताकत्वस्यैवाकाङ्क्षाभास्यत्वेन दोषाभावात् । नच घटो नास्तीत्यादौ घटत्वस्य जातित्वेन स्वरूपतो भानन्नतु घटत्वत्वेन, घटत्वमहञ्जानामीतिसर्वसिद्धानुव्यवसायदर्शनेन घटत्वपदार्थस्य स्वावच्छिन्नप्रतियोगिताकत्वेनैवान्वय इष्टः । स्ववृत्तिघटत्वावच्छिन्नप्रतियोगितानिरूपकत्वेन वाऽन्वयस्तथाचैतस्याकाङ्क्षाभास्यत्वन्न स्यादिति वाच्यम् ? पदार्थतावच्छेदकविशिष्टसंसर्ग आकाङ्क्षाभास्यः वै० च स्वविशिष्टानुयोगिताकत्वस्वभिन्नपदार्थतावच्छेदकविशिष्टप्रतियोगिताकत्वोभयसम्बन्धेन । उभयत्र वैशिष्ट्यञ्च स्वावच्छिन्नत्व-स्ववृत्तित्वान्यतरसम्बन्धेनेति पूर्वोक्तसर्वस्थले दोषाऽभावात् ।

नच पशुपदं लोमवल्लाङ्गूलावच्छिन्ने शक्तमिति लोमलाङ्गूलयोस्संयोगसम्बन्धस्तस्याऽप्याकाङ्क्षाभास्यत्वमनिष्टमापद्येत । नच शक्तिभास्योऽपि कश्चित्सम्बन्ध आकाङ्क्षाभास्योऽपि स्यात्को विरोधः । नच सम्बन्धशक्तिस्वीकारो व्यर्थइशङ्क्यः, आकाङ्क्षायोग्यकालिकादिसम्बन्धनिरासाय तत्तत्संसर्गविशेषनियामकशक्तेरेव स्वीकारात्, एवञ्च न व्यापकत्वभङ्ग इति वाच्यम् ? लोमलाङ्गूलयोर्यस्संयोगस्स नाकाङ्क्षाभास्य इति प्रसिद्धव्यवहारप्रतीतिर्विरोधात् । आकाङ्क्षाभास्याऽभेदादिसंसर्गवत्तात्पर्यव्यवहारासवाक्यादेव विशेषसंसर्गज्ञाने सिद्धे संसर्गांशे शक्तिस्वीकारवैयर्थ्यापत्तेश्च ।

---

कदेशे गुरुत्वे चैत्रस्यान्वयः, चैत्रस्य गुरुरित्यत्रापि तथा दोषापादनसम्भवे कुलमित्युक्तमेव, चैत्रनिरूपितं यद् गुरुत्वन्तादृशगुरुत्ववान् गुरुरिति प्रकारात् । नच तथा सति गुरुपदार्थे एव चैत्रस्यान्वयश्शक्यते कर्तुं न गुरुत्व इति वाच्यम्, चैत्रपुत्रादावप्यापत्तेः । चैत्रपुत्रस्य यत्किञ्चिदपेक्षया गुरुत्वात् चैत्रसम्बन्धित्वाच्च ।

शाब्दिकास्तु सापेक्षत्वेऽपि समाससिद्धये ( सिद्धिप्रदर्शनाय ) कुलसहितम्प्रयुञ्जते ।

लघुधर्मेति—यो धर्मो यस्यावच्छेदको भवति स तद्धर्मावच्छिन्न इति नियमः । एवञ्च घटाभाव इत्यत्र घटः ( यस्याभावस्स ) प्रतियोगी, प्रतियोगिता घटनिष्ठा, तस्याः प्रतियोगिताया अवच्छेदकः (अन्यूनानतिप्रसक्तधर्मः) घटत्वम् इति स एव प्रतियोगितावच्छेदक इति । तथा चैतदर्थमभिमतेन "सम्भवति लघौ धर्मे (प्रतियोगितावच्छेदकत्वे) गुरौ तदभावात्" इत्यनेन घटत्वमात्रम् प्रतियोगितावच्छेदकम् । परन्तु "कम्बुग्रीवादिमान्नास्तीतिप्रतीतिबलाद् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः" इति सिद्धान्तानुसारेण क्वचिन्नियम एव न प्रवर्त्तते गुरुधर्मस्यापि च प्रतियोगितावच्छेदकत्वमिष्यते। विचारश्चायम्प्रतियोगितावच्छेदकमात्रविषये नतु साध्यतावच्छेदकत्वादाविति बोध्यम् ।

नच शक्त्यभास्यस्संसर्गं आकाङ्क्षाभास्य इतिग्रहणेन लोमलाङ्गूलयोस्संयोगस्य नाकाङ्क्षाभास्यत्वमिति वाच्यम्, ईश्वरेच्छात्मकशक्तेर्व्यापकत्वेन सार्वत्रिकत्वात्तादृशसंसर्गस्याऽप्यप्रसिद्धत्वापत्तेः। नच अनुयोगिवाचकपदनिष्ठशक्त्यभास्यस्संसर्गं आकाङ्क्षाभास्य इत्येव ग्रन्थकृत्तात्पर्यमिति नाऽप्रसिद्धिस्संसर्गस्येति वाच्यम्, तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासितधर्मावच्छिन्ने शक्तत्वाद् यत्रानुयोगिवाचकत्वन्तच्छब्दस्य तत्रत्यसंसर्गग्रहणानापत्तेः।

ननु अनुयोगिवाचकपदनिष्ठशक्तिसम्बन्धिबोधविषयत्वनिष्ठविशेष्यताभिन्नबोधविषयत्वनिष्ठविशेष्यतानिरूपितप्रकारताश्रयप्रतियोगिकस्संसर्गं आकाङ्क्षाभास्य इत्येवं ग्रन्थकृतामाशयेन एवशब्दादिस्थले न दोषः पदार्थविवेकिनामिति चेन्न, एक एव समवाय इति मते एकत्वप्रतियोगिकसमवायः घटत्वप्रतियोगिकसमवायादभिन्न एव। तथाच घटत्वप्रतियोगिकसमवायस्याऽप्याकाङ्क्षाभास्यत्वमापद्येत। तथाहि घटपदनिष्ठशक्तिसम्बन्धिबोधविषयत्वनिष्ठविशेष्यताभिन्नमेकवचनपदनिष्ठशक्तिसम्बन्धिबोधविषयत्वनिष्ठविशेष्यतानिरूपितप्रकारताश्रयैकत्वप्रतियोगित्वमिति तादृशैकत्वप्रतियोगिकत्वेन घटत्वप्रतियोगिकसमवायस्य ग्रहणमनिष्टं स्यादिति विचारात्। नच घटत्वप्रतियोगिकसमवायस्य नाकाङ्क्षाभास्यत्वम् "जात्याकृतिव्यक्तयः पदार्थ" इति गौतमसूत्राच्छक्तिभास्यत्वम्प्रसिद्धमेवेति वाच्यम्, वृक्षः कपिसंयोगी एतद्वृक्षत्वात् इत्यत्र मूलावच्छेदेन कपिसंयोगसत्त्वेऽपि शाखावच्छेदेन कपिसंयोगो नास्तीतिप्रतीतिवत् एकत्वप्रतियोगिकत्वावच्छेदेन समवायस्याकाङ्क्षाभास्यत्ववतो घटत्वप्रतियोगिकत्वावच्छेदेन समवायाद् भिन्नत्वेन तस्याऽप्याकाङ्क्षाभास्यत्वापत्तेर्दुरुद्धरत्वात्। नच उपस्थितीयविशेष्यताविशिष्टस्संसर्गं आकाङ्क्षाभास्यः वैशि० स्वप्रयोज्यशाब्दबोधीयविषयतानिरूपकत्वस्वनिरूपितत्वाऽभाववदुपस्थितीयविषयताप्रयोज्यशाब्दबोधीयविषयतानिरूपकत्वमित्युभयसम्बन्धेन, तथाच न पूर्वोक्ता दोषा इति वाच्यम्? संयोगेन समवायेन वा अभावो नास्तीत्यादौ अभावपदार्थस्य स्वावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेनान्वयस्तस्याऽप्याकाङ्क्षाभास्यत्वन्न स्यात्। अभावपदवाच्यनञ्पदवाच्ययोरेकत्वात् द्वितीयसम्बन्धाऽसंघटनात् इति।

नच उपस्थितीयविशेष्यताविशिष्टस्संसर्गं आकाङ्क्षाभास्य इति, वै० स्वप्रयोज्यशाब्दबोधीयविषयतानिरूपकत्वस्वाऽभाववदुपस्थितीयविषयताप्रयोज्यशाब्दबोधीयविषयतानिरूपकत्वमित्युभयसम्बन्धेन, स्वाभाववत्त्वं केन सम्बन्धेन ग्राह्यम्? स्वनिरूपितत्वस्वप्रयोजकपदप्रयोज्यत्वैतदुभयसम्बन्धेन, एवञ्च पदभेदप्रयुक्तोऽभावः अभावनञ्पदयोर्भिन्नत्वात् इति वाच्यम्? अवच्छेदकभेदेनैव विषयताभेदो भवति। अत एव घटत्वपटत्वरूपावच्छेदकभेदान्नैकविषयता। तथाच नञ्पदाऽभावपदयोरभावत्वमेवावच्छेदकमिति तयोरभेदादुक्तसंसर्गाऽसंघटनेनापत्तेस्तादवस्थ्यात्। नच पदार्थविशिष्टस्संसर्गं आकाङ्क्षाभास्य इति वैशिष्ट्यञ्च स्वप्रयोज्यशाब्दबोधीयविषयतानिरूपकत्व-स्वनिरूपि-

तत्वाऽभाववदुपस्थितीयविषयताप्रयोज्यत्वैतदुभयसम्बन्धेन, अभाववत्त्वं केन सम्बन्धेन ग्राह्यमिति ? स्वप्रयोजकपदभिन्नपदप्रयोज्योपस्थितीयविषयताप्रयोज्यत्वस्वविशिष्टशाब्द-बोधीयविषयतानिरूपकत्वमित्युभयसम्बन्धेन, एवञ्चाभावस्योभयपदप्रयोज्यत्वेनापत्त्य-भावात् इति वाच्यम्, घटघटत्वयोस्समवायस्याऽप्याकाङ्क्षाभास्यत्वापत्तेः । एकत्व-प्रतियोगिकघटानुयोगिकसमवायस्य यथाऽकाङ्क्षाभास्यत्वम् तथा घटघटत्वयोस्समवाय-स्याऽप्याकांक्षाभास्यत्वसौष्ठवात् ।

अत्र सिद्धान्तः—

उपस्थितीयविषयताविशिष्टा या संसर्गता सा आकाङ्क्षाप्रयोज्या—वैशिष्ट्यञ्च स्वप्रयोज्यशाब्दबोधीयविषयतानिरूपितत्व-स्वनिरूपितत्वाभाववदुपस्थितीयविषयतानिरू-पितत्वैतदुभयसम्बन्धेन । समवायस्यैकत्वात् घटघटत्वयोस्समवाये संसर्गतैव-नास्तीति न दोषः ।

किञ्च—

शास्त्रे पदार्थान्तरत्वव्यवहारश्च पदभेदप्रयुक्तो वृत्तिभेदप्रयुक्तश्च दृश्यते । तथाचाऽ-परपदार्थत्वमत्रोभयसाधारणं विवक्षणीयम् । एवञ्च संसर्गताविशिष्टा संसर्गता आका-ङ्क्षाप्रयोज्येतिव्याख्यानम् । वैशिष्ट्यञ्च स्वतादात्म्य-स्वनिरूपितप्रकारताविशिष्टविशे-ष्यताकत्वमित्युभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वप्रयोजकपदभिन्नपदप्रयोज्यत्व-स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाऽप्रयोज्यत्वान्यतरसम्बन्धेन । अभा-वो नास्तीत्यत्र पदद्वयभेदः अभावपदार्थाऽभावत्वनिष्ठप्रकारताविशिष्टत्वस्य नञ्पदार्था-ऽभावनिष्ठविशेष्यतायां विद्यमानत्वात्, शब्दस्तावच्छाब्दबोधे भासत इतिसिद्धान्ताच्च ।

नचैवमपि घटो नास्ति कलशो नास्तीतिसमूहालम्बनज्ञानोत्तरकाले घटकलशोभ-यवृत्तिज्ञानजन्यघटोपस्थितेर्घटविषयकशाब्दबोधे घटत्वनिष्ठप्रकारत्वघटनिष्ठविशेष्यत-योर्विनिगमनावैकल्येन पदयोः प्रयोजकत्वात्तत्रत्यतन्निरूपितसंसर्गतासंग्रहापत्तिरिति वाच्यम् ? प्रथमसंसर्गस्थाने स्वप्रयोजकपदनिष्ठाकाङ्क्षाज्ञानीयविषयतानिरूपितसांसर्गि-कविषयतानिरूपितपदनिष्ठविषयताप्रयोज्यत्वस्य दानेन घटकलशपदनिष्ठविषयतयो-र्निरूप्यनिरूपकभावाऽभावात् । अभावनञ्पदनिष्ठविषयतयोस्तु परस्परमाकाङ्क्षाज्ञाने निरूप्यनिरूपकभावसत्त्वाच्च ।

केचित्तु—

शक्त्यप्रयोज्यस्संसर्ग आकाङ्क्षाभास्य इति तन्न ? नीलो घट इत्यादावभेदस्या-काङ्क्षाभास्यत्वन्न स्यात् अभेदोऽस्तीत्यादावभेदरूपार्थस्य शक्तिप्रयोज्यत्वात् । नच शक्त्यप्रयोज्या या संसर्गता सा आकाङ्क्षाभास्येति न दोष इति वाच्यम्, नीलाऽ-भिन्नो घट इति तात्पर्येण स इति तच्छब्दः प्रयुज्यते तत्राऽभेदश्शक्तिप्रयोज्य एवेति तत्राऽभेदस्याकाङ्क्षाभास्यत्वन्न स्यात् ।

श्रीगुरुचरणास्तु—

उपस्थितीयविषयताविशिष्टा संसर्गता आकाङ्क्षाप्रयोज्येति। वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यतानिरूपितत्वस्वप्रयोजकवृत्तिज्ञानीयविषयत्वाऽनिरूपितवृत्तिज्ञानीयविषयताप्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपितत्वोभयसम्बन्धेन। घटघटत्वयोस्समवायस्य नाकाङ्क्षाभास्यत्वम् एकत्वनिष्ठप्रकारतानिरूपिता संसर्गता भिन्ना घटत्वनिष्ठप्रकारतानिरूपिता संसर्गता भिन्नेति वर्णनेन दोषाऽभावात्। नन्वेतत्प्रकरणात्प्रागाकाङ्क्षाज्ञानं शाब्दबोधे कारणमिति निश्चयाऽभावात्कथं संसर्गतावैशिष्ट्यमिति वाच्यम्? घटः कर्मत्वम् आनयनं कृतिरिति परस्परनिराकाङ्क्षवाक्याच्छाब्दबोधाभावायाकाङ्क्षाज्ञानस्य शाब्दबोधप्रयोजकत्वमिति पूर्वप्रकरणे निर्द्धारितत्वाद् विवेकसौष्ठवे क्षतिविरहात्।

केचिन्मान्यास्तु—उपस्थितीयविषयत्वाऽप्रयोज्या या शाब्दबोधीया संसर्गता सा आकाङ्क्षाप्रयोज्या। अथवा वृत्तिज्ञानीयविषयत्वाऽप्रयोज्या या संसर्गता सा आकाङ्क्षाप्रयोज्येति सर्वत्राऽदोष इति।

अत्रास्मद्गुरवः

नीलो घटः पीतो घट इत्यादौ अभेदसम्बन्ध आकाङ्क्षाभास्यो वृत्तिभास्यो वेति विचिकित्सायां वृत्तिभास्य इति मीमांसकाः, आकाङ्क्षाभास्य इति नैयायिकाः। मतभेदान्निश्चयाऽभावेन वृत्त्यभास्यत्वस्याकाङ्क्षाभास्यत्वोद्देश्यतावच्छेदके प्रवेशाऽभावेनानिष्टाऽपत्तेरित्यलम्। विधेयांशेऽधिकावगाहिशाब्दानुभवस्वीकर्तृनवीनमते घटो नीलघट इत्यादौ घटत्वे घटत्वभेदाभावः। जातित्वविशिष्टजातिमत्परकसर्वनामघटितजातिमान् घट इत्यर्थक 'स घट' इत्यादौ घटत्वे घटत्वभेदाभावः। चैत्रस्य गुरुकुलमित्यत्र निरूपितत्वसंसर्गे पदार्थतावच्छेदककुलत्वावच्छिन्नानुयोगिकत्वाभावः, धान्याद् धनमित्यत्र विभक्तिस्साधुत्वार्थिका प्रयोज्यत्वसंसर्ग आकाङ्क्षाभास्यः, धान्यप्रयोज्यन्धनमिति बोधोऽभीष्टः। तत्र प्रयोज्यत्वसंसर्गस्य आकाङ्क्षया भानन्न स्यात्, पदार्थतावच्छेदके धान्यत्वे पदार्थतावच्छेदकधान्यत्वभेदाभावः। कुलात् कुलमित्यत्र देहाद् देहोऽभिजायत इत्यत्र च कुलत्वे पदार्थतावच्छेदके कुलत्वपदार्थतावच्छेदकभेदाभावः, देहत्वे पदार्थतावच्छेदके देहत्वपदार्थतावच्छेदकभेदाभाव इति जन्यत्वसंसर्गस्य भानन्नस्यात्।

केचित्तु कुशाग्रधियः, समवायस्यैकत्वपक्षे घटघटत्वयोः वृत्तिभास्यस्यापि समवायस्य आकाङ्क्षाभास्यत्वापत्तिवारणाय पूर्वोक्तसर्वदोषपरिहाराय च एकपदार्थे इत्यत्र सप्तमी विशेष्यत्वार्थिका अपरपदार्थस्येत्यत्र षष्ठी प्रकारत्वार्थिका न तु अनुयोगित्वे विभक्ति-

---

अभावो नास्तीत्यत्र "न न" इत्यपि दोष इति केचित्। न चोभयोर्द्योतकत्वात् समासाभावेन रूपसिद्धिरिति वाच्यम्? केवलद्योतकयोरप्यव्यययोः पाणिनीयशास्त्रेषु "विपराभ्यां जेः" "अपपरी वर्जने" "अनुपराभ्यां कृञः" "नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च" इत्यादिषु समासदर्शनात्।

वाक्ये। प्रकारताविशेष्यतयोश्च निरूपितत्वसम्बन्धेन लक्षणया संसर्गविषयताया-मन्वयः, तथा च पदजन्यप्रतिपत्तीयविषयताविशिष्टसांसर्गिकविषयत्वाकाङ्क्षाप्रयोज्यशाब्दबोधनिरूपितविषयत्वाभिन्न इत्यर्थः। वै० स्वनिष्ठनिरूपकतानिरूपितनिरूप्यतावत्त्व-स्वविशिष्टविषयतानिष्ठनिरूपकतानिरूपितनिरूप्यतावत्त्वोभयसम्बन्धेन। सम्बन्धघटक-वै० स्वभिन्नत्व-स्वनिरूपितपदसाकाङ्क्षपदनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावत्त्वोभयसम्बन्धेन। स्वं विषयता। एवञ्च विषयभेदाद् विषयताभेदस्य मान्यत्वेन एकत्वप्रतियोगिकसमवायाद् भिन्नो हि घटत्वप्रतियोगिकसमवाय इति नापत्तिः। प्रकारतानिरूपितत्वम् सांसर्गिकविषयतायां ये नोपगच्छन्ति ते तु संयोगेन पर्वते वह्निरवृत्तिरिति बुद्धिम्प्रति समवायेन पर्वतो वह्निमानिति निश्चयस्यापि प्रतिबन्धकत्वापत्तिभिया पराहताः। विशेष्यतानिरूपितत्वमपि सांसर्गिकविषयतायामावश्यकमेवान्यथा संयोगेन वह्न्यभाववानिति बुद्धिम्प्रति यथा संयोगेन वह्निमानिति निश्चयस्य प्रतिबन्धकत्वन्तथा स्वसंयोगिसंयोगसम्बन्धेन वह्निमान् पर्वत इत्यस्यापि प्रतिबन्धकत्वापत्तेः। न च स दोषस्तु संयोगत्वमात्रावच्छिन्नत्वस्य संसर्गत्वे निवेशेनैव परिहर्तुं शक्यत इति वाच्यम्? तथा सति चत्वरीयसंयोगेन वह्निमान् पर्वत इतिज्ञानस्य प्रतिबन्धकत्वानुपपत्तेरिति वदन्ति।

अत्रैव प्रसङ्गाद्विषयत्वं विचार्य्यते—

प्रतीयमानतया भोगसाधनत्वं विषयत्वम्। भोगत्वमनुभवविशेषत्वम्। सुखदुःखान्यतरसाक्षात्कारत्वमिति यावत्। अत्र साधनता चाभेदसम्बन्धावच्छिन्ना गृह्यते।

---

ननु

गच्छ गच्छसि चेत्कान्त पन्थानस्सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥

इत्यत्र तव गमने मम मरणमवश्यम्भावि नात्र शक्तिलक्षणयोस्सम्भवस्तद्वाचकपदाऽभावात्। किञ्च निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो, नेत्रे दूरमनञ्जने पुलकिता तन्वी यथेयन्तनुः। मिथ्यावादिनि दूति बान्धवजनस्याऽज्ञातपीडागमे, वापीं स्नातुमितो गतासि न पुनस्तस्याऽधमस्याऽन्तिकम्॥

इत्यत्र दूतीसम्भोगस्य च वाचकलक्षकपदयोरभावात्तयोर्बोधानापत्त्या च व्यञ्जनाख्यवृत्तिः कर्तव्यैवेति कथङ्कार्यंकारणभावद्वयमेवेति चेन्न? तत्र तत्रानुमित्यात्मबोधस्य मानसोदीच्यबोधस्य वा स्वीकारेणैवोपपत्तौ पृथग्वृत्तेरनावश्यकत्वात्। ननु बोधद्वयस्वीकारे गौरवमिति चेन्न? भवन्मतेऽपि शक्त्या जन्मादिपदाच्छाब्दबोधानन्तरं व्यञ्जनावृत्तिज्ञानात्तत्तदर्थोपस्थित्या व्यङ्ग्यार्थबोधेन बोधद्वयस्यावश्यकत्वात्। नन्वेवमपि बोधकतैवास्तु वृत्तित्रिलक्षणसङ्केतलक्षणयोश्च वृत्तित्वन्न स्वीकार्यमिति चेन्न? गङ्गापदन्न तीरवाचकङ्किन्तु तीरसम्बन्धिनीरवाचकमिति गङ्गायां घोष इति वाक्याद् बोधे आयुर्वै घृतमिति वाक्याच्च घृतपदन्न घृतकर्मकभक्षणवाचकमिति बोधे च तीरनिरूपिताऽऽधेयतावान्घोष इति बोधस्य घृतकर्मकभक्षणमायुर्जनकमिति बोधस्य चानुभवसिद्धत्वेन लक्षणावृत्तेरावश्यकत्वात्। शक्तिभ्रमेण गाछ माछ गगरीत्याद्यपभ्रंशानां वृक्षमत्स्यघटादिबोधकत्वेन वृक्षमत्स्यघटादिवाचकत्वापत्तेस्सङ्केतस्य वृत्तित्वस्वीकारात् इति।

साधनपदेन जनकताश्रयो गृह्यते। जनकत्वञ्च क्वचित् साक्षात्सम्बन्धेन क्वचिच्च परम्परया। एवञ्च विषयतासम्बन्धावच्छिन्नभोगनिष्ठजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजनकतावत्त्वं विषयत्वमिति फलितम्। विशेषस्पष्टीकरणन्तु तादात्म्यसम्बन्धावच्छिन्नभोगनिष्ठजन्यतानिरूपितविषयित्व - स्वप्रयोज्यनिरूपितविषयित्वान्यतरसम्बन्धावच्छिन्नजनकतावत्त्वं विषयत्वमिति। स्वप्रयोज्यत्वञ्च स्वजन्यस्वजन्यजन्यादिरूपम्। परम्पराजनकतायामवयविनिष्ठत्वोपादानेन नित्यपदार्थानां व्यावृत्तिः। "आपाततः प्रतीतस्सन्दिग्धार्थो विषय" इति जैमिनिः।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति शास्त्रेऽस्मिन्पञ्चाधिकरणं स्मृतम्॥

इति मीमांसा।

विशब्दो हि विशेषार्थस्सिनोतिर्बन्धनार्थकः।

आरोपाश्रयो विषयो गौर्वाहीक इत्यादौ वाहीको विषय इत्यालङ्कारिकाः। इन्द्रियजन्यज्ञानं विषयः, शब्दस्पर्शरूपरसगन्धा विषयाः।

विषयाशामहापाशाद्यो विमुक्तस्सुदुस्त्यजात्।
स एव कल्प्यते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि॥

इति पौराणिकाः। शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वं विषयत्वमिति नैयायिकाः। विषयो द्विविधः परोक्षः अपरोक्षश्च। अनुमानगम्यः प्रथमः, प्रत्यक्षविषयो द्वितीयः। इतोऽधिकमस्मत्कृतपरिष्कारदर्पणे द्रष्टव्यमिति।

## घटोऽस्ति—

"जात्याकृतिव्यक्तयः पदार्थ" इति सूत्रानुरोधेन घटपदस्य घट-घटत्व-समवायेषु शक्तिस्तथा च घटे घटत्वं समवायेन भासत इति सिद्धान्तः। ननु घटे घटत्वं समवायेन भासत इत्यस्य कोऽर्थः? निरूपितत्वं सप्तम्यर्थमादाय किं घटनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वं घटत्वेऽयमर्थः अथवा समवायसम्बन्धावच्छिन्नघटत्वनिरूपिताधिकरणत्वं घटेऽयमर्थः। उभयथापि वृत्तित्वाधिकरणत्वयोरभेदसम्बन्धे घटघटत्वयोरेव भाने पर्यवसानम्। भेदसम्बन्धस्वीकारेऽभीष्टबोधो न स्यादेवञ्चास्मिन्सन्देहे किमुत्तरमिति शङ्काः?

## घटवद् भूतलमिति—

घटवद्भूतलमित्यादौ संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताक इति बोधे विलक्षणो विचारप्रकारः। संयोगेन भूतले घटावगाहनमिति फलितार्थे संयोगेन भूतले घटावगाहित्वमित्यस्य कोऽर्थः? किं संयोगेन घटाधिकरणत्वम् अथवा भूतलनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्ववत्त्वम्। किञ्च ताहशाधिकरणत्ववृत्तित्वयोर्भूतलघटाभ्यां कीदृक् सम्बन्धः। तयोस्ताभ्याममभेदसम्बन्ध-

**स च क्वचिद्भेदः । क्वचिच्च तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः ।**

स्तर्हि सर्वसिद्धो भेदो विरुद्धस्स्यात् । वृत्तित्वाधिकरणत्वयोरपि वृत्तित्वेन अधिकरणत्वेन वाऽन्यसम्बन्धेन वा स्वीकारे वृत्तित्वाधिकरणत्वयोस्सम्बन्धविशेषजिज्ञासायां सम्बन्धविशेषावच्छिन्नत्वनिवेशे तयोरपि भेदेन अभेदेन वाऽन्वय इति प्रश्नजिज्ञासाग्रामनवस्थाप्रसङ्गः । कुत्रचिद् गत्वा सम्बन्धानङ्गीकारेण वाक्यार्थस्वीकृतिरिति चेत् ? तर्हि पूर्वमेव सम्बन्धानङ्गीकारो न्याय्यः किं शिरोवेष्टननासिकास्पर्शन्यायानुसरणेन । तस्माद्घटवद्भूतलमित्यादौ सम्बन्धरहित एव मानसः कश्चन बोध इतोऽधिकमुत्तरम्मृग्यमिति शुक्लाः ।

### स च क्वचिद्भेद इति—

भेदसम्बन्धोऽभेदान्यसम्बन्धेषु पारिभाषिकः । शाब्दबोधो द्विविधः भेदाऽभेदान्वयविषयकत्वात् भेदलक्षणसम्बन्धानां प्रतियोगित्वानुयोगित्वादीनामनन्तत्वेन पूर्वमभेदमेवाह स चेति । भेदसम्बन्धानपि दर्शयति-आधाराऽधेयेति । घटवद् भूतलम् भूतले घटः इत्यादिषु आधाराऽऽधेयभावः । वस्तुतो भूतले घट इत्यादौ सप्तम्यर्थयोर्वृत्तित्वाधेयत्वयोः प्रतीत्या न संसर्गमर्यादया भानन्तथाऽपि ग्रामं गच्छतीत्यादौ कर्मत्वं द्वितीयार्थस्तत्र ग्रामादेराधेयत्वेनान्वयस्तत्राधेयत्वस्य संसर्गतया भानम् । चैत्रस्य धनमित्यादावाश्रयत्वार्थकाधारत्वस्य च संसर्गमर्यादया भानमिति सिद्धान्तः । घटो नास्ति भूतले इत्यादौ प्रतियोग्यनुयोगिभावस्सम्बन्धः । घटे ज्ञानम् मोक्षे इच्छास्ति घटविषयकमोक्षविषयकेच्छायाः प्रतीयमानत्वेन विषयविषयिभावः । घटो विषयः ज्ञानम् विषयि ।

---

आधाराधेयभावेति—प्रकारोऽयं पुरातनः । प्राञ्च एव शाब्दिकादयः द्विष्ठत्वात्मकत्वेन विशिष्टसंसर्गमङ्गीकुर्वते तद्दर्शनायैव आधाराधेयभावादिरिति विस्पष्टम् । आधारतानिरूपितमाधेयत्वमिति रीत्या वा । भावादिरित्यत्र भावशब्दस्य प्रत्येकमन्वयः द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणपदम्प्रत्येकमभिसम्बध्यत इति नियमात् । ज्ञापकश्च नियमेऽत्र प्रत्यंशं क्रमेण "अधिशीङ्स्थासाङ्कर्म" इत्यत्र अधिशब्दस्यादिमस्य "आङ्क्षिविधिणत्वेपूपसर्गत्वप्रतिषेधो वक्तव्यः" अत्र विधिशब्दस्य मध्यश्रुतस्य "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" अत्र मात्रशब्दस्यान्तश्रुतस्य प्रत्येकं सम्बन्धः ।

अत्र समेषां सम्बन्धानामुदाहरणानि न रोचन्तेऽस्मभ्यम् । यतो हि "प्रतिपिपित्सितमर्थम्प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम् अप्रतिपित्सितञ्च प्रतिपादयन्नायं लौकिको नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येते"ति पण्डितवरश्रीवाचस्पतिमिश्रवचनानुसारेण इह प्रतिपित्स्यमानं संसर्गमर्यादया भासमानस्य संसर्गस्य निरूपणं तत्र प्रथमस्य आधाराधेयभावस्योदाहरणं वदन्ति टीकान्तरकृतः भूतले घट इति तत्र वृत्तित्वम् ( आधेयत्वम् ) एवं सप्तम्यर्थस्स च प्रकारतया भासते न तु संसर्गतया । एवं विषयविषयिभावस्यापि दृष्टान्तः प्रतिपादितो घटज्ञानमित्याद्यो नार्हणीयः तत्रापि विषयित्वादेः षष्ठ्यर्थतया प्रकारत्वेन भासमानत्वात् । किन्तु आधारतासम्बन्धस्योदाहरणं घटन्नाशयति विषयविषयिभावस्य च पुत्रीयति चैत्रो ग्रामं जिगमिषतीत्यादि । प्रतियोग्यनुयोगिभावस्य तु घटो नास्तीति प्रसिद्धमेवेति संक्षेपः ।

आधाराऽधेय इति विशिष्टस्य सम्बन्धत्वन्तु वैयाकरणमतेन "सम्बन्धो हि सम्बन्धिभ्यामिभन्नो द्विष्ठो विशिष्टबुद्धिनियामकश्चेति" भाष्यबलेन प्रतियोग्यनुयोगिनिष्ठस्यैव सम्बन्धत्वम्। न्यायमते तु अनुयोगिवृत्तिधर्मस्यैव सम्बन्धत्वम्। भूतले घट इत्यादौ घटस्य भूतले आधारतासम्बन्धः, भूतलस्य घटे आधेयतासम्बन्धः, भूतलस्य घटे प्रतियोगिता, घटस्य भूतलेऽनुयोगितासम्बन्धः। किन्तु घटो नास्तीत्यादौ घटत्वावच्छिन्नप्रतियोगितानिरूपकत्वस्य संसर्गत्वेऽपि घटत्वमवच्छिन्नत्वं प्रतियोगित्वञ्चेति प्रत्येकन्त्रिषु सम्बन्धत्वं यथा तथैवाधारतानिरूपिताधेयत्वस्य विशिष्टस्य सम्बन्धत्वेऽपि प्रत्येकमाधारत्वादेस्सम्बन्धत्वे बाधकाऽभाव इत्याशय इति।

केचित्तु—

स्वरूपसम्बन्धेनाऽऽधेयत्वस्याऽधेयपदार्थेऽन्वयो निरूपकत्वसम्बन्धेनाधारेऽन्वय इत्येवन्द्विष्ठत्वोपपत्तावपि निरूपकत्वसम्बन्धस्य वृत्त्यनियामकत्वेन तत्त्वाऽसिद्धेरिति। भूतले घट इत्यत्र घटस्य भूतले संयोगसम्बन्धो घटसंयोगस्समवायेन भूतलेऽस्ति समवायश्च स्वरूपसम्बन्धेनाऽस्ति इति वदन्ति। न च अभेदसम्बन्धस्य द्विष्ठत्वाऽभावेन वैयाकरणमते कथमभेदस्य सम्बन्धत्वमिति। किञ्च व्याकरणमहाभाष्यप्रमाणसत्त्वे तद्विरोधो न्यायमते कथं व्याकरणप्रणेतॄणां साक्षादवतारभूतत्वादिति वाच्यम्? न विद्यते भेदो भेदसंसर्गो यत्र विशेष्यविशेषणभावे सोऽभेद इति विशेष्यविशेषणभावरूपार्थकोऽभेदशब्द इति सूक्ष्मतत्त्ववेत्तृवैयाकरणाः। किञ्च विशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवत्। यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतानिरूपिका विशिष्टबुद्धिस्सम्बन्धावगाहिनी विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमानेनाऽप्यभेदसम्बन्धसिद्धिः।

न चाऽभेदसम्बन्धसत्त्वे नीलो घट इत्यादौ "षष्ठी शेष" इत्यनेन षष्ठ्यापत्तिरिति वाच्यम्? राज्ञः पुरुष इत्यादौ भेदमूलकसम्बन्ध एव "द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदका"दितिवाक्यपदीयबलेन षष्ठीविधानेनात्रानुपपत्तेरधिकन्त्वस्मत्कृतकौमुदीकल्पलतिकायां वैयाकरणसिद्धान्तकौमुदीटीकायान्द्रष्टव्यम्।

वस्तुतस्तु "जात्याकृतिव्यक्तयः पदार्थः" इति न्यायसूत्रे वार्तिककारेणोक्तविशेषणविशेष्यभावस्यैकविषयत्वाद् विना सम्बन्धं विशेष्यविशेषणभावस्यैकविषयत्वात्। यद्यभेदसम्बन्धस्स्यात्तर्हि विना सम्बन्धमितिवार्तिककारकथनन्निरर्थकं स्यात्तस्मान्नास्त्यभेद सम्बन्ध इति शाब्दिकम्मन्याः।

न च राहोश्शिरः शिलापुत्रकस्य शरीरम् इत्यादावौपाधिकभेदमादाय षष्ठ्युपपादनं व्यपदेशिवद्भावेन भेदमादायेति तत्त्वम्, संसर्गस्य द्विष्ठत्वनियमात् नाऽभेदसंसर्ग इति वाच्यम्? तादृशभाष्येणाऽभेदस्य षष्ठीप्रयोजकत्वन्नेति कल्पनेनाऽविरोधात्। किञ्च वैयाकरणीयसम्बन्धलक्षणे द्विष्ठत्वन्न द्वयोः पदार्थयोस्तिष्ठतीति द्विष्ठस्तस्य भावो द्विष्ठत्वं वर्णनीयं किन्तु विरोधपरिहाराय द्वित्वविशिष्टत्वं द्विष्ठत्वम्। वैशिष्ट्यञ्च

अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्त्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते यथा नीलो घटो नीलघटमानयेत्यादौ घटादौ नीलादेः न तु विरुद्धविभक्तिमत्पदार्थस्य। नीलस्य घट इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात्। स्वसमानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम्।

---

स्वाश्रयवृत्तित्व—स्वाश्रयाश्रयवृत्तित्वान्यतरसम्बन्धेन। संसर्गतावादिमते राज्ञो राजेत्यादौ यत्र प्रकारतावच्छेदकविशेष्यतावच्छेदकयोरैक्यन्तत्सम्बन्धस्य स्वत्वादेर्द्विष्ठत्वसिद्धिरेव प्रथमसम्बन्धनिवेशफलम्।

अभेदस्य द्विष्ठत्वासिद्धिपूर्वकसम्बन्धत्वसिद्धये द्वितीयसम्बन्धनिवेशः। भूतले घट इत्यादौ तु सुतरान्द्विष्ठत्वसिद्धया सम्बन्धत्वम् इत्यपि परस्परविरोधपरिहारोपायः।

वस्तुतस्तु—

"नहि कस्यचिद् ग्रन्थकृतो विपरीतलिखनं युक्तिबलाद्वस्तुसिद्धौ बाधकमिति" मूलसिद्धान्तेन व्याकरणभाष्यकृता ह्यौपाधिकभेदेन राहोश्शिर इत्यादौ षष्ठीसाधितत्वेऽपि सर्वव्यवहारलोकशास्त्राबालवृद्धसाधारणप्रसिद्धस्याभेदस्य सम्बन्धस्य सत्त्वे क्षतिविरहः। किञ्च अथ व्याकरणमित्यस्य कः पदार्थस्सूत्रमिति व्याख्यानेन व्यपदेशिवदेकस्मिन्निति परिभाषोत्पत्तये औपाधिकभेदपूर्वकषष्ठीप्रदर्शनमर्थात् कालपुरुषाद्युपाधिभेदेन राहुशिरः पदार्थयोर्भेद इति। तथा च परिभाषाप्रकाशे भाष्यकृतः परिश्रम इत्यभेदसम्बन्धसत्त्वे न किञ्चिद् बाधकमिति शुक्लाः।

सूचीकटाहन्यायेनोद्देशक्रमेण चाऽभेदस्य संसर्गतया भानस्थलमाह—अभेदश्च प्रातिपदिकार्थे इति। अनुयोगित्वं सप्तम्यर्थः, उपस्थापितस्येत्यत्र षष्ठ्यर्थः प्रतियोगित्वं पदार्थस्येति शेषः। समन्वयश्च नीलो घट इत्यादौ प्रातिपदिकार्थे स्वसमानविभक्तिकेन घटादिलक्षणानुयोगिवाचकघटपदादिसमानविभक्तिकेन नीलपदेनोपस्थापितस्य नीलपदार्थस्याऽभेदस्संसर्गमर्यादया आकाङ्क्षया भासते। नीलपदोत्तरविभक्तेस्साधुत्वमात्रार्थकत्वात् नीलस्य घट इत्यादौ विभक्तया व्यवधानम्। विरुद्धविभक्तिमत्पदार्थस्याऽभेदो न भासत इति तत्त्वम्। ननु वेदाः प्रमाणमित्यादौ वेदपदप्रमाणपदयोस्समानविभक्तिकत्वाऽभावेऽपि वेदप्रमाणादिपदार्थयोरभेदो भासत एवेति तात्पर्येण समानविभक्तिकत्वन्निर्वक्ति—स्वसमानेति। अत्र स्वपदेनानुयोगिवाचकं पदं गृह्यते वेदाः प्रमाणमित्यत्र अनुयोगिवाचकम्वेदपदन्तत्प्रकृतिका विभक्तिर्जस्विभक्तिस्तत्सजातीयत्वम्प्रमाणपदेऽप्यस्त्येव। तस्याऽपि प्रमाणपदस्याऽपि, प्रथमान्तत्वात्। तथा च नाऽभेदान्वयहानिः। ननु वेदपदोत्तरं जस्विभक्तिः प्रमाणपदोत्तरञ्च सुविभक्तिः कथं साजात्यमिति तदेव परिष्करोति—साजात्यञ्चेति। आनुपूर्वीलक्षणमत्र साजात्यन्न ग्राह्यं किन्तु प्रथमात्वाद्यन्यतमधर्मेणैव। एवञ्च सुसुजसोरुभयोरपि प्रथमात्वेन

साजात्यं च विभक्तिविभाजकप्रथमात्वादिना न तु समानानुपूर्वीकत्वं साजात्यम् ।

---

साजात्यमस्त्येवेति समानविभक्तिकत्वेनाऽभेदान्वयः । प्रमीयतेऽनेनेति प्रमाणम्, प्रमितिकरणं प्रमाणम् । तथा च प्रमितिकरणतावन्तो वेदा इति शाब्दबोधः ।

साजात्यञ्च विभक्तिविभाजकेति—

स्वनिष्ठो यो विभक्तिविभाजकः प्रथमात्वाद्यन्यतमो धर्मस्तद्वत्त्वम् ।

समानानुपूर्वीकत्वन्नाम—स्ववृत्त्यानुपूर्वीसजातीयानुपूर्वीकत्वम् ।

आनुपूर्वीत्वञ्च—

वर्णानाम्पूर्वापरीभावरूपम् । यथा घट इत्यादौ घकारोत्तराकाराकारोत्तरटकारटकारोत्तराकार इति । पूर्वस्य योग्यमनुपूर्वम् अनुपूर्वमेवानुपूर्वी स्वार्थिकः "प्रज्ञादिभ्योऽणि"त्यण् तदन्तत्वान्ङीप् । कम्बुग्रीवादिमद्व्यक्त्यवच्छिन्नशक्तघटपदसमानानुपूर्वीकत्वं घश्च टश्चानयोस्समाहारो घटमित्यादौ ।

तत्समानानुपूर्वीकत्वन्तस्मिन्निति तत्तद्वर्णोत्तरतद्वर्णवत्त्वन्तत्समानानुपूर्वीकत्वम् इति सामान्यलक्षणम्, न चैवं लक्षणे घकारोत्तराकाराकारोत्तरटकारटकारोत्तराकाराकारोत्तरत्वस्य नीलघटेति समुदायेऽपि सत्त्वात् घटपदसमानानुपूर्वीकत्वं नीलघटेति समुदायस्याऽप्यापद्येतेति वाच्यम् ? तत्पदविशिष्टतत्पदत्वन्तत्समानानुपूर्वीकत्वम् । वैशिष्ट्यञ्च स्वघटकतानवच्छेदकावच्छिन्नाघटितत्व - स्वघटकताऽनवच्छेदकावच्छिन्नाऽघटितत्वसम्बन्धावच्छिन्नस्ववृत्तित्वोभयसम्बन्धेन । तथा च घटपदसमानानुपूर्वीकत्वन्न नीलघटे, घटपदघटकतानवच्छिन्ननीलत्वावच्छिन्नघटितत्वेन लक्षणेऽव्यभिचारात् ।

ननु पदत्वस्य पाणिनीयसङ्केतसम्बन्धेन पदत्ववत्परत्वेनानुगतत्वेऽपि सरो रसः नदी दीनः राज-जरा ताल-लता इत्यादिशब्दानां समानानुपूर्वीकत्वमापद्येतेति वाच्यम् ? स्वार्थबोधप्रयोजकतावच्छेदकधर्मवत्त्वमिति तृतीयसम्बन्धनिवेशात् । लतातालादिशब्दार्थयोर्भेदेन तत्तत्प्रयोजकधर्माणाम्भिन्नत्वेनाऽक्षतेः ।

न च तृतीयसम्बन्धनिवेशे "निपातस्याऽनर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति" वार्त्तिकोदाहरणे केवलपादपूरणमात्रार्थकत्वेन च वै तु हि इत्यादावर्थप्रयोजकत्वाऽभावेन तयोस्समानानुपूर्वीकत्वन्न स्यादिति वाच्यम् ? तत्तत्समानानुपूर्वीकत्वन्तत्तत्पद एव । तथा हि घटपदसमानानुपूर्वीकत्वं घटपद एव न तु नीलघटे स्वनिष्ठघत्वावच्छिन्नविषयतानिरूपितात्वावच्छिन्नविषयतानिरूपितटत्वावच्छिन्नविषयतानिरूपितात्वावच्छिन्नविषयत्वावच्छिन्नभेदप्रतियोगितावच्छेदकविषयतात्वसमनियतज्ञानविषयतापर्याप्त्यवच्छेदकधर्मवत्त्वं घटे घटपदसमानानुपूर्वीकत्वम् । पटादिसमानानुपूर्वीकत्वम्पटादिषु बोध्यमिति निर्विवादः प्रकारः ।

साजात्यञ्च विभक्तिविभाजकेति—

तत्साजात्यन्नाम—तद्वृत्तिधर्मवत्त्वम् । अत्र शब्दो धर्मपरः, एवञ्च वेदाः प्रमाण-

मित्यादिस्थले प्रथमात्वद्वितीयात्वाद्यन्यतमधर्मेणैव गृह्यते ।

ननु प्रथमात्वाद्यन्यतमधर्मेणैव साजात्यग्रहणे प्रथमात्वन्नाम प्रथमसंख्यापूरकत्वम्, द्वितीयात्वन्नाम द्वितीयसंख्यापूरकत्वम्, तृतीयात्वन्नाम तृतीयसंख्यापूरकत्वमित्येवाभिप्रायो वक्तुं शक्यते । एवञ्च घटानान्नीला इत्यादावपि नीलपदोत्तरजस्विभक्तिगतबहुत्वपूरकत्वं घटपदोत्तरविभक्तेरपि बहुत्वसंख्यापूरकत्वेन साजात्यात्तत्प्रकृत्युपस्थाप्यघटादेरपि अभेदान्वयापत्तिरित्यत आह विभक्तिविभाजकेति । विभक्तिविभाजकेस्यस्य विभक्तित्वव्याप्येत्यर्थः । तथा च समुदायार्थो विभक्तित्वव्याप्यप्रथमात्वाद्यन्यतमधर्मेणेत्यर्थः । द्वित्वादिसंख्यापूरकत्वस्य तु विभक्तित्वव्याप्यत्वाऽभावात् । किन्तु सङ्केतसम्बन्धेन प्रथमापदवत्त्वादेरेव तद्व्याप्यत्वात् ।

ननु विभक्तिविभाजकेन येन केनाऽपि धर्मेण साजात्यमुच्यताङ्किमितिप्रथमात्वादिनैवेति चेन्न ? "सुडनपुंसकस्ये"ति सूत्रबलेन स्वादिपञ्चानां सर्वनामस्थानसंज्ञा अन्येषां शसादीनान्न । एवञ्च विभक्तिविभाजकसर्वनामस्थानसंज्ञकत्वेन साजात्यापत्तौ घटो नीलमित्यादौ घटपदोत्तरसुविभक्तिगतसर्वनामस्थानत्वस्य नीलपदोत्तराम्विभक्तावपि सत्त्वेन साजात्यापत्तौ अभेदान्वयापत्तेस्तस्माद् ग्रन्थोक्तस्सम्यगेवेति ।

ननु,

या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
प्रायस्ता एव कर्त्तव्यास्समानार्थे विशेषणे ॥

इति भर्तृहरिपद्ये प्रायःपदोपादानेन शिष्टप्रयोगे चिरन्तनमर्यादासंरक्षणाय क्वचित्सामानलिङ्गकत्वाद्यभावेऽपि न विरोधः ।

ननु वेदाः प्रमाणमिति वत् नीलत्वगतैकत्वविवक्षया घटा नील इत्यपि प्रयोगः कुतो न ? न च नीलो घट इत्यादौ गुणिपरन्नीलपदं गुणवाचकत्वेन त्वप्रत्ययार्थोऽपि गुणः वाचकमाहात्म्यात् । तथा च गुणत्वाज्जात्यतिरिक्तत्वेन नीलत्वत्वेनोपस्थितिस्तथा च कथन्नीलत्वान्वयतात्पर्येणैकत्वव्यवस्थेति वाच्यम् ? नीलं रूपमित्यादौ गुणिपरत्वाऽभावेन जात्यतिरिक्तत्वाऽभावेनार्थाज्जातित्वेन नीलत्वस्यैवोपस्थित्या तत्र नीलत्व एकत्वान्वयतात्पर्येण तादृशः प्रयोगः कुतो नेति तात्पर्यात् । किञ्च प्रथमात्वेन साजात्याश्रयणमनुभवसिद्धम् । तथा च नीलो घटौ नीलो घटाः इत्येवम्प्रयोगः कुतो नेति चेन्न ? इष्टाऽपत्तेः । अत एव चैत्रो मैत्रश्च सुन्दरावित्यादीनि रूपाणि सङ्गच्छन्ते । तत्र तु चैत्रपदार्थे एकत्वस्य द्वित्वविशिष्टसुन्दरस्य चान्वयः, एकत्र द्वयमिति न्यायानुसन्धानात् । एवं

शुम्भो निशुम्भश्चैवान्यौ उत्पत्स्येते महासुरौ ।
ब्रूहि शुम्भं निशुम्भञ्च दानवावतिगर्व्वितौ ॥

चैत्रो मैत्रश्च गच्छतः,

वेदाः प्रमाणं शतं ब्राह्मणा इत्यादावन्वयबोधानुपपत्तेः। ननु "विंशत्याद्याः सदैकत्वे" इत्यनुशासनात् शतं ब्राह्मणा इत्यादेः साधुत्वेऽपि वेदाः प्रमाणमित्यादयः कथं प्रयोगाः, विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमात्। अन्यथा घटा नील इत्यादेरपि साधुताप्रसङ्गात्।

---

चन्द्रे कलङ्कस्सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला।
मुखाऽप्रसादस्सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम्॥

इत्यादिष्वेकैव रीतिः "श्यालास्स्युर्भ्रातरः पत्न्यास्स्वामिनो देवृदेवरा"वित्यत्राऽपि भ्रातर इत्यस्य बहुवचनान्तत्वेऽपि द्वित्वविवक्षया देवृदेवराविति द्विवचनं सुगतम्। देवृदेवरपदयोस्स्वस्ववाच्ये लक्षणा। अत एव लक्ष्यतावच्छेदकयोर्देवृदेवरयोर्द्वित्वान्वयः। अत एव पदार्थतावच्छेदकभेदाद् द्वन्द्वोऽपि समीचीन इति विशिष्टो विचारः।

किञ्च—

सिद्धस्य गतिश्चिन्तनीयेति न्यायेन लोके नीलो घटा इति प्रयोगः कैरपि न प्रयुज्यते तस्माक्लिष्टकल्पनया न तादृशः प्रयोग इत्यपि शुक्लाः।

नीलपदस्य नीलगुणविशिष्टे लक्षणया लक्ष्यतावच्छेदकनीलस्यानन्तत्वात्सजातीयरहितत्वात्मकैकत्वस्याऽभावेन नीलो घटा इत्यादेरयुक्तत्वात्। प्रकृत्यर्थतावच्छेदकतावच्छेदकैकत्वान्वयस्य सर्वानुभवविरुद्धत्वात्।

किञ्च—

क्रियतामवच्छेदकतावच्छेदक एकत्वान्वयः परन्तु विशेषणतावच्छेदके विशेषणतावच्छेदकतावच्छेदके वा यद्येकत्वान्वयस्य किञ्चिदपि प्रयोजनं लभेत। न च वेदाः प्रमाणमित्यत्र किम्प्रयोजनमिति वाच्यम्? तत्रैकत्वविवक्षाप्रयोजनन्तु चार्वाकाद्यागमानाम्प्रमाणत्वनिराकरणरूपम्। अत्र नीलत्वे एकत्वान्वयस्य न किमपि फलम्प्रयोजनं वाऽपि श्रूयते। तथा च नीलो घट इत्येव प्रयोगो न तु नीलो घटा इत्यादीति।

ननु नीलपदार्थगुणस्य कथं घटेऽन्वयोऽभेदेनेति चेन्न? नीलशब्दात् "तदस्याऽस्त्यस्मिन्निति मतुवि"ति सूत्रेणास्त्यर्थे मतुपि "गुणवचनेभ्यो मतुपो लुगिष्ट" इति वार्त्ति-

---

गुणवचनेभ्य इति—गुणास्समवायेन द्रव्यवर्त्तिनः गुणवाचकेभ्यश्शब्देभ्यो द्रव्यबोधनाय जातानाम्मतुपां लुगनेन वार्तिकेन विधीयते। शुक्लो घट इत्यादि।

ननु तार्किका हि गुणपदार्थव्याख्यानावसरे रूपादीन् चतुर्विंशतिसङ्ख्याकान् व्याचक्षते। तथा च उष्णस्पर्शवत्तेज इत्यादौ वार्त्तिकेनैतेन मतुपो लुक् कुतो नेति चेन्न? "रसादिभ्यश्च"इति पृथङ्मतुब्विधायकारम्भसामर्थ्याद् "गुणवचनेभ्य"इति वार्त्तिके गुणत्वव्याप्यव्याप्यशुक्लत्वादिधर्मावच्छिन्नानामेव सप्तानां ग्रहणबोधनात्। अत एव "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति कोशस्वरसोऽपि सङ्गच्छते। रूपिणी कन्या रसिको नट इत्यादौ क्रमशो रूपरसशब्दयोस्सौन्दर्यभावार्थे-

केन मतुपो लुग्विधानेन अस्यापत्यम् इः इयानितिवत् "यद्विशिष्यते स लुप्यमानार्था-मिधायी"ति न्यायेनाऽस्त्यर्थसत्ताया घटादौ विद्यमानत्वादभेदान्वये क्षतिविरहादिति शुक्काः ।

ननु प्रकृते विभाजकलक्षणस्यानुपयोगेऽपि नवधा द्रव्याणि विभजत इत्यादौ स्व-समभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकज्ञानानुकूलव्यापारो वि-भजतेरर्थः । एवं विपूर्वको भज् तत्समभिव्याहृतपदार्थो द्रव्यपदार्थः पदार्थतावच्छेदकं द्रव्यत्वं तद्व्याप्यमिथोविरुद्धयावद्धर्मः क्षितित्वादिकमर्थात् अप्त्वं तेजस्त्वं वायु-त्वम् आकाशत्वमित्यादिकन्तत्प्रकारकज्ञानानुकूलव्यापारः क्षितित्वं वायुत्वम् आकाश-त्वम् अप्त्वम् इत्येवंरूपस्तथा च क्षित्यादिनव घटञ्चादाय दशधा द्रव्याणीति प्राप्नोति । घटत्वस्य क्षितित्वेन प्रसिद्धत्वाऽभावेऽपि तेषाञ्जस्त्वादिनानाविरुद्धधर्मसत्त्वादिति चेन्न ? "संख्यायाः प्रकारे धे"ति व्याकरणवार्त्तिकस्यायमर्थः स्वसमभिव्याहृतपदार्थतावच्छे-दकविशिष्टा या संख्या तद्वाचकाद् धाप्रत्ययो भवति तत्संख्यावान् धर्मस्य विभाजको भवतीत्यर्थः, पदार्थतावच्छेदकवैशिष्ट्यञ्च संख्यायां स्वव्याप्यभिन्नाऽवृत्तित्व-स्वव्या-प्यविशिष्टत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्ववृत्तित्व-स्वव्याप्याऽवृत्तित्वो-भयसम्बन्धेन । तथा च घटमादाय दशत्वसंख्यायास्स्वव्याप्यं घटत्वं तद्वृत्तित्वेन स्व-व्याप्याऽवृत्तित्वसम्बन्धघटकसम्बन्धविरहाद् दशत्वसंख्यावाचकाद्धाप्रत्ययाऽप्राप्तेः । ननु घटमादाय दशत्वसंख्यायामपि स्वव्याप्यं तेजस्त्वं तद्व्याप्यसुवर्णत्वादावृत्तित्वेन द्वितीयसम्बन्धघटकस्य द्वितीयसम्बन्धस्य गमनाद् दशधा द्रव्याणीति रूपं स्यादेवेति चेन्न ? मुख्यद्वितीयसम्बन्धस्थाने स्वव्याप्यविशिष्टभिन्नत्वरूपस्सम्बन्धो देयः । व्या-प्यवैशिष्ट्यञ्च स्ववृत्तित्व स्वव्याप्यवृत्तित्वोभयसम्बन्धेन । तथा च स्वव्याप्यं क्षितित्वं तद्व्याप्यघटत्वे वृत्तित्वेन स्वव्याप्यवृत्तित्वरूपद्वितीयसम्बन्धघटकद्वितीयसम्बन्धस्य

---

कत्वाद् 'रसादिभ्यश्चे"त्यत्र च गुणवाचकरसादिग्रहणेन कथमिहेन्प्रत्ययो मतुपा भाव्यमित्या-शङ्का परास्ता । न च गुणवाचकरसादिग्रहणे मानाभावेन तथा व्याख्यानमयुक्तम् ? सूत्रीय "गुणात्" इति गणवार्तिकेन तथा कल्पात् ।

विभजत इति—स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकबोधानुकूलो व्यापारो विपूर्वकभजधात्वर्थः ।

प्रकृते द्रव्याणि विभजत इत्यत्र एवं विपूर्वकभजधातुः तत्समभिव्याहृतम्पदं द्रव्यपदन्तदर्थताव-च्छेदकं द्रव्यत्वन्तद्व्याप्या मिथोविरुद्धा यावन्तो धर्माः क्षितित्वादयो नवसङ्ख्याकास्तत्प्रकारकबोधा-नुकूलव्यापारः क्षितिः आप इत्यादिशब्दप्रयोगात्मकः । स्वसमभिव्याहृतत्वञ्च स्वविशिष्टत्वम् वै० स्वाव्यवहितपूर्वत्व स्वाव्यवहितोत्तरत्वान्यतरसम्बन्धेन ।

धात्वर्थकुक्षौ व्याप्येत्यंशानुपादाने द्रव्याणि विभजते इति प्रतिज्ञाय कर्म तेज आकाशमित्यादि-शब्दप्रयोगस्यापि विभागत्वप्रमात्वापत्तेः । एवं क्षितिः पट इत्यादिशब्दमात्रस्यापि विभागत्वापत्ति-वारणाय मिथोविरुद्धम् । केवलं व्याप्यमात्रमुपादाय क्षितिः आपस्तेजांसि इत्यादिप्रयोगस्यापि तत्त्व-वारणाय यावत्त्वमुपादेयमिति ।

च सत्वेन उभयसम्बन्धेन स्वव्याप्यविशिष्टत्वसत्त्वेन तद्भिन्नत्वस्य वक्तुमशक्यत्वेन द्वितीयसम्बन्धेन वैशिष्ट्यविरहादुक्तस्थले दशधेति प्रयोगाऽभाव इति । गुणादिमादाय दशधा द्रव्याणीत्यपि न प्रयोगस्तथा हि दशत्वसंख्यायास्स्वव्याप्यं क्षितित्वम् अप्त्वम् इत्यादि तद्व्याप्यं गुणत्वं तद्वृत्तित्वेन स्वव्याप्यभिन्नाऽवृत्तित्वविरहेण प्रथमसम्बन्धस्यानागमनादुक्तानिष्टप्रयोगाऽभावात् ।

अथ सप्तधा पदार्थ इत्यत्र स्वव्याप्यो द्रव्यत्वगुणत्वादिः तद्भिन्नत्वस्याऽप्रसिद्धया स्वव्याप्यभिन्नवृत्तित्वस्य सुतरामप्रसिद्धेः प्रथमसम्बन्धेन वैशिष्ट्यविरहात् सप्तधा पदार्थो न स्यादिति चेत्सत्यम् ? तत्सम्बन्धस्थाने स्वव्याप्यभिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाऽभाववत्त्वरूपस्सम्बन्धो गृह्यते । एवञ्चाऽप्रसिद्धत्वादेव तत्सम्बन्धे तदभाववत्त्वस्य सप्तत्वसंख्यायां सत्त्वात् ।

अथ क्षितिं विहाय घटमादाय नवधा द्रव्याणीतिप्रयोगः कस्मान्न भवति तत्रोभयमुख्यसम्बन्धस्य सत्त्वात् । अथवा घटं विहाय अष्टधा द्रव्याणीति वाक्यङ्कुतो नेति चेदत्र कुशाग्रबुद्धयः, स्वव्याप्यवृत्तिर्यस्स्वाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्तत्प्रतियोगित्वमिति तृतीयसम्बन्धदानेन न दोषस्तथा हि स्वव्याप्यं क्षितित्वं तद्वृत्तिर्या स्वाश्रयत्वसम्बन्धेन क्षितिं विहाय घटमानयेति नवत्वसंख्या नास्तीत्याकारकाऽभावीया प्रतियोगिता तत्प्रतियोगिताकत्वस्य अथ चोक्तरीत्या अष्टत्वसंख्या नास्तीत्याकारकाऽभावस्तत्प्रतियोगिताकत्वस्य च सत्त्वेन तादृशाऽभावाऽप्रतियोगित्वविरहेण निरुक्तरीत्या नवत्वसंख्यायामष्टसंख्यायाञ्च वैशिष्ट्यविरहान्नोक्तप्रयोग इति वदन्ति । तन्न ? तथा सम्बन्धस्वीकारे क्षित्यादिनवाऽदाय इष्टस्थलेऽपि नवधा द्रव्याणीति प्रयोगे नवत्वसंख्यायान्तृतीयसम्बन्धेन वैशिष्ट्यस्याऽप्रसिद्धयापत्तेः । यतो हि स्वव्याप्ये घटत्वे निरुक्तसम्बन्धेन योऽभावस्तत्प्रतियोगित्वस्यैव नवत्वसंख्यायां सत्त्वात् । तस्माद्वक्ष्यमाणसम्बन्ध एव ज्यायान् । तथा हि—स्वाश्रयवृत्तिर्यस्स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्तत्प्रतियोगित्वरूपस्य निवेशः । स्वं द्रव्यत्वं तदाश्रयो द्रव्यं तत्र द्रव्ये स्वन्नवत्वसंख्या तदाश्रयः क्षितित्वं तदाश्रया क्षितिः तद्रूपे घटरूपे च द्रव्ये नवत्वसंख्यासत्त्वे निरुक्तसंसर्गेण नवत्वसंख्याप्रतियोगिकाऽभावविरहेण निरुक्तसंख्यायां स्वप्रतियोगित्वासिद्धेः । अष्टधा द्रव्याणीत्यस्य वारणन्तु भवत्येव । यतो हि स्वाश्रयक्षित्यां निरुक्तसम्बन्धेनाष्टत्वसंख्याप्रतियोगिकाऽभा-

---

गुणत्वमिति—सामान्यमेतद् गुणत्वं जातिरुपाधिश्च "सामान्यं द्विविधं जातिरुपाधिश्चे"ति वर्द्धमानोपाध्यायसिद्धान्तात् ।

गुणत्वजातेस्सिद्धिस्त्वनुमानविषया, तथा हि–द्रव्यकर्मभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वादिति अन्यूनानतिप्रसक्तधर्मस्यावच्छेदकतासिद्धान्ताद् गुणत्वावच्छिन्नत्वसिद्धया "गुणत्वं जातिः जातिबाधकप्रमाणशून्यत्वाद् घटत्वादिवदि"त्यनुमानेन जातित्वप्रतिपादने व्याघाताभावात् ।

परमाणुसाधारण्याय गुणपदशक्यतावच्छेदकविषया वा गुणत्वजातिसिद्धेरिति ।

वसत्त्वेन निरुक्ताष्टत्वसंख्यायाः प्रतियोगित्वस्यैव सत्त्वेन तृतीयसम्बन्धेन वैशिष्ट्य-विरहान्न दोषः। तथा च स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मविशिष्टसंख्यावत्त्वं विभा-जकत्वम्। वैशिष्ट्यञ्च स्वव्याप्यभिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाऽभा-ववत्त्व स्वव्याप्यविशिष्टभिन्नत्व स्वाश्रयवृत्तिर्यस्स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रति-योगिकाऽभावस्तत्प्रतियोगित्वैतत्त्रितयसम्बन्धेन। इदमपि बोध्यम्, क्षितिं विहायघटरूप-पृथिवीमादाय नवधा द्रव्याणीत्यपि न? घटरूपपृथिव्यां निरुक्तसम्बन्धेन योऽभावस्त-त्प्रतियोगित्वस्यैव नवत्वसंख्यायाम्भासमानत्वाद् इत्यलम्।

विभक्तिविभाजकसुब्विभाजकधर्मनिर्वचनापेक्षयाऽत्रैव लाघवम्।

अत्रायम्प्रकारः

ननु विभक्तिविभाजकत्वन्नाम किमिति प्रश्नः। न च विभक्तित्वविशिष्टत्वं विभक्ति-विभाजकत्वम्, वैशिष्ट्यं च स्वव्याप्यत्व-स्वव्याप्याऽव्याप्यत्वमित्युभयसम्बन्धेन। स्वाऽभाववदवृत्तित्वं व्याप्यत्वं स्वं विभक्तित्वन्तद्व्याप्यत्वम्प्रथमात्वे इति प्रथम-सम्बन्धः। स्वं विभक्तित्वं तद्व्याप्यत्वम्प्रथमात्वे तद्व्याप्यं सुत्वादि तदवृत्तित्वेन अर्थात् सुत्वमात्रावृत्तित्वेन स्वव्याप्याऽव्याप्यत्वरूपद्वितीयसम्बन्धसंघटनेन तत्त्वसिद्धि-रिति वाच्यम्? विभक्तित्वधर्मव्याप्यं सुप्त्वन्तद्व्याप्यम्प्रथमात्वाद्यन्यतमधर्म इति द्वितीयसम्बन्धाऽसंघटनेन प्रथमात्वादेर्विभक्तिविभाजकत्वानापत्तेः। न च विभक्तित्वविशिष्ट-त्वं विभक्तिविभाजकत्वम्। विभक्तित्वविशिष्टत्वञ्च विभक्तित्वव्याप्यत्वमेवेति लक्ष-णेन विभक्तित्वधर्मापेक्षया प्रथमात्वस्य व्याप्यत्वेन विभक्तिविभाजकत्वं सिद्धमेवेति वाच्यम्? सु औ जस् इत्यन्यतमस्याऽपि विभक्तित्वधर्मव्याप्यत्वेन सुत्वौत्वादीना-मपि विभक्तिविभाजकत्वापत्तेः। न च "विभक्तिश्चे"ति विभक्तिसंज्ञाविधायकं सूत्रमत्र विभक्तिपदेन सुप एव ग्रहणम्। विभक्तिविभाजकेत्यस्य सुब्विभाजकधर्मेणेत्यर्थः। सुप्त्वविशिष्टत्वं सुब्विभाजकत्वम्। वैशिष्ट्यञ्च स्वव्याप्यत्व-स्वव्याप्याऽव्याप्यत्वोभयस-म्बन्धेन। स्वं सुप्त्वन्तद्व्याप्यता प्रथमात्वेऽस्तीति प्रथमात्वव्याप्यं सुत्वादि तद्रहित-त्वेन सुप्त्वव्याप्याऽव्याप्यत्वज्ञातमेवेति न दोष इति वाच्यम् "सुडनपुंसकस्ये"ति सूत्रेण पाणिनिना सङ्केतितं सर्वनामस्थानपदं स्वादिपञ्चप्रत्ययबोधकन्तथा च स्वं सुप्त्व-न्तद्व्याप्यं सर्वनामस्थानत्वं तद्व्याप्यता प्रथमात्व इति प्रथमसम्बन्धस्य कदाचि-त्संघटनेऽपि द्वितीयसम्बन्धाऽसंघटनादव्याप्तेर्दुर्वारत्वात्। नच अनपुंसकस्येति पर्युदा-से नपुंसके सर्वनामस्थानसंज्ञा न भवति तत्र प्रथमात्वस्य स्वव्याप्याऽव्याप्यत्वेन नाऽपत्तिरिति वाच्यम्? "अनाऽप्यक" इति सूत्रे आविति टा इत्यारम्य सुपः पकारेण

---

अन्यतमधर्म इति—अन्यशब्दात् "वा बहूनां जातिपरिप्रश्ने डतमच्" इति सूत्रीयो डतमच्-प्रत्ययः। अत एव बहूनां मध्ये एकोऽन्यतम इति लोकानान्निश्चयः।

तत्त्वञ्च—तद्भिन्नभिन्नत्वम्। यथा घटान्यतमत्वन्नाम घटभिन्नभिन्नत्वं घटे एवेति स्वस्वान्यतमो भवतीति फलितार्थः।

एवम् अन्ततस्त्वमपि व्याख्येयम्।

प्रत्याहारस्तथा च स्वं सुप्त्वन्तद्व्याप्यता आप्त्वे तद्व्याप्यतैव प्रथमात्व इति द्वितीयसम्बन्धाऽसंघटनेन दोषस्य दुर्वारत्वात्। किञ्च व्याप्यत्वस्य प्रकृते न्यूनवृत्तित्वलक्षणाक्रान्तत्वान्निर्वाहेऽपि सुअम्गतान्यतरत्वस्याऽखण्डोपाधिरूपस्याऽपि सुप्त्वविशिष्टत्वेन तेन धर्मेणाऽपि साजात्यापत्तौ नीलं घट इति वाक्यस्याऽपि प्रामाण्यापत्तेश्च। न च सुअम् जस् एतदन्यतमनिष्ठो धर्मोऽन्यतमत्वन्तद्व्याप्यताऽन्यतरत्वेऽस्ति। अर्थात्सुप्त्वव्याप्यस्तु अम् जस् गतान्यतमत्वं तद्व्याप्योऽन्यतरत्वमिति स्वव्याप्याऽव्याप्यत्वञ्च जातमित्यन्यतरत्वेन साजात्यञ्च भविष्यतीति न दोष इति वाच्यम्? स्वव्याप्यत्वाख्यप्रथमसम्बन्धम्परित्यज्य तत्स्थाने स्वव्याप्यभेदाऽघटितत्व-स्वव्याप्याऽव्याप्यत्वमित्युभयसम्बन्धेन। तथा च अन्यतरत्वस्य भेदाघटितत्वेन तेन साजात्याऽभावान्न काप्यापत्तिरिति वर्णनात्। न च भ्याम्विभक्तेस्तृतीयाचतुर्थीपञ्चमीपर्याप्तत्वात् भ्याम्विभक्तिगतभ्याम्त्वस्याऽपि सुप्त्वविशिष्टत्वेन भ्याम्वत्त्वेनापि विभक्तिविभाजकत्वेन साजात्यापत्तौ तृतीयाचतुर्थीद्विवचनान्तघटितस्य नीलाभ्यां घटाभ्यामित्यादिवाक्यस्याऽपि प्रामाण्यापत्तिरिति वाच्यम्? स्वव्याप्यभेदाऽघटितश्रावणप्रत्यक्षविषयताऽनवच्छेदकत्व-स्वव्याप्याऽव्याप्यत्वमित्युभयसम्बन्धेन। तथा च भ्याम्त्वस्य श्रावणप्रत्यक्षविषयतावच्छेदकत्वेन तस्य विभक्तिविभाजकत्वाऽभावेन तेन साजात्यानाश्रयणेन दोषाऽभावात्। न च सुडिति प्रत्याहार"स्सुडनपुंसकस्ये"त्यत्र सुट्त्वन्नाम पाणिनीयसङ्केतसम्बन्धेन सुट्पदवत्त्वमेव तस्यापि सुप्त्वविशिष्टत्वेन सुट्त्वेन विभक्तिविभाजकेन साजात्यापत्तौ नीलं घट इति पूर्वोक्तापत्तिस्तदवस्थैव अन्यतमत्वेतिप्रसङ्गश्चेति वाच्यम्? सुप्त्वविशिष्टजातित्वं विभक्तिविभाजकत्वं तेन धर्मणैव साजात्यम्, प्रकृते सुट्त्वस्य सुटपदवत्त्वरूपत्वेन जातित्वाऽभावः, अन्यतरत्वमन्यतमत्वञ्चाखण्डोपाधिरेव न तु जातिः। जात्यखण्डोपाध्यतिरिक्तपदार्थस्य किञ्चिद्धर्मपुरस्कारेणैव भानमितिन्यायनियमेऽखण्डोपाधेः पार्थक्येनोपादानाद् भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वाच्चान्यतरत्वादेर्जातित्वाऽभाव इति न नीलं घट इत्यादिवाक्यानाम्प्रामाण्यमिति विशिष्टव्याख्यानात्।

न च सुट्त्वादिवत् प्रथमात्वद्वितीयात्वतृतीयात्वादेरपि प्राचीनसङ्केतसम्बन्धेन प्रथमापदत्वरूपत्वेन तेषामपि जातित्वन्नास्ति "ङेप्रथमयोरम्" "प्रथमायाश्च द्विवचने भाषायामि"त्यादौ प्राचीनसङ्केतितसंज्ञानां व्यवहारविषयत्वमिति प्रथमात्वादेर्जातित्वाऽभावेन विभक्तिविभाजकत्वाऽभावेन सर्वस्वभङ्ग इति वाच्यम्? सुब्वृत्तिः संख्याऽनिरूपितशक्ततावच्छेदको धर्म एव सुब्विभक्तिविभाजकः। संख्याऽनिरूपितेत्यस्य संख्यानिष्ठनिरूपकतानिरूपितनिरूप्यत्वाऽभाववच्छक्ततावच्छेदकधर्म इत्यर्थः, एवंविधशक्ततावच्छेदकधर्मेणैव साजात्यम्। सुप्त्वस्य सुट्त्वस्य च शक्तताऽनवच्छेदकत्वान्न तेन साजात्यम्। सुत्वस्य एकवचनत्वस्य च संख्यानिरूपितशक्ततावच्छेदकत्वेन अनिरूपितत्वाऽभावेन तेनाऽपि साजात्यानाश्रयणम्। प्रथमात्वद्वितीयात्वादेस्तु सम्बोधनकर्म-

समानलिङ्गकस्थले तथा नियमोपगमेन वेदाः प्रमाणमित्यादेः साधुत्वोपपादनेऽपि इति हेतुस्तदुद्भवे इति कारिकायाः ।

---

त्वकर्तृत्वसम्प्रदानत्वापादानत्वसम्बन्धाधिकरणत्वनिरूपितत्तत्तावच्छेदकत्वेन तेनैव धर्मेण साजात्याश्रयणेन काऽपि दोषो नास्तीति सिद्धान्तभूतो राजकीयपरीक्षालेखप्रकारः ।

अस्मद्गुरवस्तु—

सुप्त्वविशिष्टसंख्यावत्त्वं सुब्विभाजकत्वन्तेनैव साजात्यम्, सख्यायां सुप्त्ववैशिष्टयञ्च स्वव्यापकत्वस्वव्याप्यवृत्तित्वस्वाऽव्याप्याऽवृत्तित्वस्वव्याप्यविशिष्टभिन्नत्वमिति चतुष्टयसम्बन्धेन । चतुर्थसम्बन्धघटकवैशिष्टयञ्च स्ववृत्तित्व-स्वेतरस्वसमानाधिकरणवृत्तित्वोभयसम्बन्धेन । स्वं सुप्त्वं तद्व्यापकत्वं सप्तत्वसंख्यायान्तद्वत्त्वम्प्रथमात्वादिषु सर्वत्र यत्र३स्वरूपसम्बन्धेन सुप्त्वन्तत्र२स्वाश्रयाश्रयत्वसम्बन्धेन सप्तत्वं प्रथमात्वादिगतम् । व्याप्यतावच्छेदकसम्बन्धश्चात्र स्वरूपसम्बन्धः व्यापकतावच्छेदकश्चात्र स्वाश्रयाश्रयत्वसम्बन्धः । सुप्त्वव्यापकता सप्तत्वसंख्यायान्तस्य व्याप्यं प्रथमात्वादि तद्वृत्तित्वमिति द्वितीयसम्बन्धः । सुप्त्वाऽव्याप्यं घटत्वादि तदवृत्तित्वमपि इति तृतीयसम्बन्धसङ्घटनप्रकारः । तस्य सुप्त्वस्य स्वपदबोध्यस्य व्याप्यम्प्रथमात्वादि तद्वैशिष्ट्यन्तु नास्त्येव । तथा हि स्ववृत्तित्वरूपाद्यसम्बन्धसत्त्वेऽपि स्वेतरसमानाधिकरणेति द्वितीयसम्बन्धो नास्तीति तद्विशिष्टभिन्नत्वं सप्तत्वसंख्यायामिति तद्वत्त्वेन प्रथमात्वद्वितीयात्वादिना साजात्येन क्षतिविरहादित्याहुः ।

समानलिङ्गकस्थले इति—

समानलिङ्गकत्वञ्च स्ववृत्तिपुंल्लिङ्गत्वाद्यन्यतमवत्त्वम् । पुंल्लिङ्गत्वादिकञ्च पाणिनीयलिङ्गानुशासनप्रकरणानुसारेण चेतना-चेतनोभयविषयीभूतपरिभाषितत्वमत एव दारशब्दस्य पुंल्लिङ्गत्वम् । खट्वाशब्दस्य "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषस्स्मृतः । उभयोरन्तरं यत्र तदभावे नपुंसकमि"ति संघटनाऽभावेऽपि स्त्रीत्वं सङ्गच्छते । तस्माल्लिङ्गनिर्णायकं लिङ्गानुशासनमेव । उपचयविवक्षायां पुंस्त्वमपचयविवक्षायां स्त्रीत्वमुपचयापचययोस्सामान्यविवक्षायां क्लीवत्वमिति तु शाब्दिकनये । नैयायिकमते तु गुणत्रयानङ्गीकारात् । "विंशत्याद्यास्सदैकत्वे सर्वास्संख्येयसंख्ययो"रित्यनुशासनाच्छतम्ब्राह्मणा इत्यादीनां साधुत्वमिति तात्पर्य्यम् ।

शक्तिर्निपुणतेति—

शक्तिः कवित्वबीजभूतसंस्कारविशेषः "बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा । प्रज्ञान्नवनवोन्मेषशालिनीम्प्रतिभाम्विदु"रिति शिष्टोक्तया प्रतिभाव्यपदेश्यः लोककाव्यशास्त्राद्यवेक्षणप्रयुक्तनिपुणता व्युत्पत्तिविशेषः । काव्यज्ञशिक्षयाऽभ्यास इत्यस्य काव्यज्ञशिक्षाप्रयुक्तोऽभ्यास इति करणे योजने चेति त्रितयमेवेति शब्देन परामृश्यते ।

इति त्रयः समुदिता हेतुरिति काव्यप्रकाशव्याख्याया असंगतिर्दुर्वारैव। एवमसमानलिङ्गकस्थले विशेष्यवाचकपदासमानवचनस्यापि विशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनमेव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितमिति 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" पितरो देवता इत्यादेरनुपपत्तिः। मैवम्,

यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः। अत एव पुरूरवोमाद्रवसौ विश्वेदेवा इत्यादौ द्वित्वविशिष्टयोः पुरूरवोमाद्रवःप्रभृत्योर्विशेषणतया विवक्षितत्वात्तद्वाचकस्य पदस्य द्विवचनान्तता।

---

त्रयस्समुदिता हेतुरिति—

अत्र हेतुपदस्य प्रयोजकतावच्छेदकसमुदायत्वावच्छिन्ने लक्षणा। न च हेतुपदस्य हेतुत्वेऽपि शक्तिरस्ति हेतुरव एवैकत्वान्वयस्तेनैव निर्वाहस्समुदायत्वे लक्षणा समुदायैकत्वान्वयश्च निरर्थक इति वाच्यम्। अत्र समुदायत्वन्नामैकविशिष्टाऽपरत्वरूपमेवञ्च पार्थक्येन त्रयाणां हेतुत्वे विशेष्यविशेषणभावे विनिगमनावैकल्येन गुरुधर्मावच्छिन्नकारणत्वाधिक्यापत्तौ पृथगेव शक्तित्वेन शक्तेर्निपुणतात्वेन निपुणतायाः अभ्यासत्वेनाभ्यासस्य च कारणत्वस्वीकारात्। न चैकैकस्याऽपि पार्थक्येन कार्योत्पादकत्वाऽपत्तौ प्रतीतिविरोधस्समुदिता इति वैयर्थ्यापत्तिश्चेति वाच्यम्? घटपटादिकार्य्यम्प्रति दण्डचक्रतुरीवेमादीनाम्पार्थक्येन परस्परसहकारित्वप्रसिद्धिवदिहाऽपि परस्परसहकारित्वे क्षतिविरहात्। तथा च लक्षणाश्रयणम्मूलोक्तं सयुक्तिकम्प्रयोजकता च शक्तिनिपुणताऽभ्यासात्मके समुदाये काव्योत्पत्तिसमानाधिकरणाऽभावाऽप्रतियोगित्वरूपेति।

यत्र विशेष्यवाचकेति—

यथा नीलो घट इत्यत्र विशेष्यवाचकं घटपदन्तदुत्तरवर्तिविभक्तिस्सुविभक्तिस्तत्तात्पर्यविषयीभूता संख्या एकत्वसंख्या तद्विरुद्धा संख्या द्वित्वबहुत्वे तयोरविवक्षितत्वान्नीलपदोत्तरमपि सुविभक्तिरेव युक्तेति समानवचनकत्वम्। एवं "प्रत्यक्षानुमाने"ति सूत्रेऽपि विशेष्यवाचकं शब्दपदन्तदुत्तरवर्तिजस्विभक्तिस्तत्तात्पर्यविषयीभूता संख्या बहुत्वसंख्या तद्विरुद्धैकत्वादिसंख्याया विशेषणवाचकप्रमाणपदेऽविवक्षितत्वात्समानवचनकत्वम्। वेदाः प्रमाणमित्यत्र तु विशेष्यवाचकम्पदं वेदपदन्तदुत्तरवर्त्तिजसविभक्तिस्तत्तात्पर्यविषयीभूता संख्या बहुत्वसंख्या तद्विरुद्धाया एकत्वसंख्याया विशेषणवाचकप्रमाणपदे विवक्षितत्वान्न समानवचनकत्वम्। एवम्मैथिली तस्य दारा इत्यत्र विशेष्यवाचकम्पदम्मैथिलीपदन्तदुत्तरवर्त्तिविभक्तिस्सुविभक्तिस्तत्तात्पर्यविषयीभूता संख्या एकत्वसंख्या तद्विरुद्धाया एव विशेषणवाचकदारपदोत्तरजस्विभक्तितात्पर्यविषयीभूताया बहुत्वसङ्ख्याया विवक्षितत्वान्न समानवचनकत्वमिति सङ्घटनप्रकारः।

यद्वाक्यघटकविशेष्यवाचकपदोत्तरत्वेनाभिप्रीयमाणविभक्तिजन्यबोधविषयत्वनिष्ठप्रकारता-निरूपितेच्छीयविशेष्यतावच्छेदकसङ्ख्यात्वव्याप्यधर्मावच्छिन्नभिन्नसंख्यानिष्ठविषयताक-बोधजनकत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यत्वाऽभाववद्विभक्तिकं विशेषणवाचकपदं तद्वाक्यघटकविशेष्यविशेषणवाचकपदव्यापकं समानवचनत्वमित्यभिप्रायः। ननूद्देश्यतावच्छेकव्यापकत्वं विधेये यत्र न भासते तत्रैव समानवचनत्वनियमो ना-न्यत्रेत्येवन्नियमेनैव निर्वाहे यत्र विशेष्यवाचकपदोत्तरेति गुरुभूतनियमाश्रयणङ्किमर्थमिति चेन्न ? घटाः प्रमेय इतिरूपापत्तेरनिवार्यत्वात्। न च विधेयपदेनात्र केवलान्वयिभिन्न-विधेयस्य ग्रहणमिति न पूर्वोक्तापत्तिरिति वाच्यम् ? जातिमान् घटा इत्याद्यापत्ते-स्तौष्ठवात्। यच्छब्देनात्र विशेष्यविशेषणवाचकपदघटितं वाक्यमेव, वाचकपदस्य बोधक इत्यर्थः। अत एव लाक्षणिकस्याऽपि विशेष्यपदस्य ग्रहणम्। उत्तरपदेनोत्तर-त्वेनानुसन्धीयमानेत्यर्थोऽतएवेदन्दधीत्यादौ विशेष्यवाचकपदोत्तरं विभक्तेरश्रवणेऽपि न क्षतिः। विभक्तितात्पर्यविषयेत्यस्य विभक्तिजन्यबोधविषयत्वेन तात्पर्यविषयेत्यर्थः। यथा नीला घटा इत्यत्र विशेष्यवाचकम्पदं घटपदन्तदुत्तरवर्तिविभक्तिर्जस्विभक्तिस्त-त्तात्पर्यविषयीभूता संख्या बहुत्वसंख्या तद्विरुद्धसंख्याया अविवक्षितत्वाद् नीलपदोत्तर-मपि जसेव युक्तमिति समानवचनकत्वम्। एवं पितरो देवता इत्यादिष्वपि बोध्यम्। न च समानलिङ्गकस्थले समानवचनकत्वनियमेन "त्रयस्समुदिता हेतु" रित्यत्रानुपपत्ति-सम्भवेऽपि असमानलिङ्गकस्थले न किञ्चिन्नियतन्निमित्तमिति कथम्प्रमाणानीत्यत्र बहु-वचनानुपपत्तिश्शङ्कितेति वाच्यम् ? बहुवचनप्रयोगे हि क्वचिन्नियमो नियामकः। यथा नीला घटा इत्यत्र समानलिङ्गकेषु समानवचनकत्वरूपः। क्वचिच्च बहुत्वसंख्याबोधो घटानितिवत्। "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"त्यत्र तूभयविधहेत्वभावा-त्प्रथमोपस्थितत्वाच्चैकवचनस्यैव भावाख्यातवत्साधुत्वात्। विशेषणपदोत्तरवचनेष्वनु-गतन्निमित्तमाह-यत्र विशेष्यवाचकेति। घटा नीला इत्यादौ संख्यारूपो विभक्त्यर्थः। नीला वर्णा इत्यादौ तु गुणे गुणानङ्गीकारादपेक्षाबुद्धिविशेषविषयत्वरूप एव विभक्त्य-र्थो न तु संख्यारूप इति शक्यलक्ष्यसाधारण्येनाह—यत्र विशेष्यवाचकेति। अत्र समान-वचनत्वस्य न स्वरूपसत्कारणता किन्तु यादृशशाब्दबोधे विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषयसंख्याभिन्नसंख्याया विशेषणेन भानन्तादृशशाब्दबोध एव विशेष्यविशे-षणवाचकपदयोस्समानवचनत्वज्ञानङ्कारणमित्येव नियमोऽत एव घटा नीला इत्यत्र विशेष्यवाचकघटपदोत्तरविभक्तौ सुत्वभ्रमेण घटविषयकनीलविषयकशाब्दबोधात्पूर्वं स्व-रूपसत्समानवचनपदाऽभावेऽपि न दोषः। विभक्तितात्पर्यविषयेत्यस्य विभक्तिजन्यबोध-विषयत्वेन तात्पर्यविषयेत्याशयः। यत्र विशेष्यवाचकपदोत्तरसुप्तात्पर्यविषयसंख्याविरु-द्धसंख्याया अविवक्षितत्वमिति निवेशे स्तोकम्पचत इत्यादिदोषवारके विभक्तिग्रहण-स्य चचैंव नास्तीति किं स्पष्टार्थत्वेनेत्यलम्। अत्र विभक्तिपदं स्पष्टार्थमेव न तु सुन्दरन्द-

---

अव्यवहितोत्तरेति—अव्यवहितोत्तरत्वन्तु स्वोत्तरत्वेन रूपेणानुसन्धीयमानं यत्तदुत्तरत्वेनानु-सन्धीयमानत्वं स्वोत्तरत्वेनानुसन्धीयमानत्वमित्युभयसम्बन्धेन स्वविशिष्टत्वम्।

धि बहवो गुणा इत्यादौ सौन्दर्य्यं एकत्वविवक्षया बहुशब्दतात्पर्यविषयबहुत्वविरुद्धैकत्वसत्त्वात्समानवचनत्वानुपपत्तिपरिहारः फलम्। अविवक्षितत्वन्तु समानवचनत्वव्याप्यमेव व्याप्येन व्यापकानुमानम्। धूमेन वह्निः नहि व्याप्यधूमाऽभावो वह्न्यभावस्याऽपि प्रवर्त्तकः। अयोगोलके तप्तायः पिण्डे धूमाऽभावेऽपि वह्निसत्ताऽस्त्येव। समानवचनत्वं समानविभक्तिकत्वञ्चात्र प्रवेशनीयमत एव सुन्दरो घटमित्यादौ नाऽभेदान्वयापत्तिः। समानवचनत्वञ्च समानानुपूर्वीकत्वमेव। न च घटो द्रव्यमित्यादौ सोरमादेशे समानानुपूर्वीकत्वाऽभावात्कथमभेदान्वय इति वाच्यम्? स्थानिवत्सूत्रबलेन स्थानिवृत्त्यानुपूर्वीमादाय समानवचनत्वसौष्ठवात्।

किञ्च—विभक्तिविशिष्टविभक्तिकत्वं वा समानविभक्तिकत्वम्।

वैशिष्ट्यञ्च – स्ववृत्तिसुत्वौत्वजस्त्वाद्यन्यतमवत्त्वसम्बन्धेनेति केचित्। ननु विरुद्धत्वञ्च स्वाधिकरणाऽवृत्तित्वमेव तच्च न संघटते बहुत्वाधिकरणेऽपि वेदे स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन एकत्वसत्त्वाद् इति चेन्न? स्वप्रकारकज्ञानप्रतिबन्धकज्ञानप्रकारत्वमेव विरुद्धत्वम्। तत्सम्बन्धावच्छिन्नैकसंख्यात्वव्याप्यधर्मावच्छिन्नप्रकारताकबहुत्ववानित्यादिबुद्धिम्प्रति तत्सम्बन्धावच्छिन्नाऽपरसंख्यात्वव्याप्यधर्मावच्छिन्नप्रकारताकैकत्ववानित्यादिबुद्धेः प्रतिबन्धकत्वादेव संख्ययोर्विरुद्धत्वसिद्धेः। ननु संख्यायां विरुद्धान्तविशेषणङ्किमर्थमिति प्रश्नः। यत्र विशेषणवाचकपदोत्तरविभक्त्या संख्याया अविवक्षितत्वन्तत्र समानवचनकत्वमेवेत्युक्तौ चिन्तामणिकारमतानुसारेण प्राचीननैयायिकमते विशेषणवाचकपदोत्तरविभक्त्याऽपि सर्वत्र संख्याप्रतीतिर्भवतीति तद्रीत्या नीलो घट इत्यादावपि समानवचनकत्वानुपपत्तेः। न च नव्यनैयायिकमते विशेषणवाचकपदोत्तरविभक्तिस्साधुत्वार्थैव तथा चैतन्मते किमुत्तरमिति वाच्यम्? विशेषणतावच्छेदके नीलत्वादौ यत्रैकत्वान्वयतात्पर्य्यन्तत्र समानवचनकत्वसिद्ध्यर्थन्तदुपादानात्। किञ्च एकत्वसंख्याया वेदत्वान्वयतात्पर्येण एकत्वसंख्यायाः प्रमाणत्वान्वयतात्पर्येण वेदः प्रमाणमिति विशेष्यविशेषणवाचके द्वे पदे एकवचनान्ते एव तत्र समानवचनत्वन्न स्याद् विशेषणवाचकपदोत्तरविभक्त्याऽपि संख्याया विवक्षितत्वात्। विरुद्धान्तनिवेशे तु विशिष्टाऽभावसत्त्वेन तत्राऽदोषात्।

अत्र नियमे विभक्त्यर्थेति त्यक्त्वा विभक्तितात्पर्यविषयेत्युपादानङ्किमर्थमिति चेन्न? विभक्त्यर्थेत्येतावन्मात्रकथने नीलो घटो नीला घटा इत्यादिष्वपि समानवचनकत्वन्न स्यात्। वेदे सुपां स्थाने ऋजवस्सन्तु पन्था इतिवत् "सुपां सुलुगि"ति पाणिनिसूत्रेण स्वादेशे बहुत्वप्रतीतिः। "छन्दसि पुनर्वस्वोः" "विशाखयोश्चे"ति सूत्राभ्यामेकवचनस्य द्वित्वार्थबोधकत्वम्। "जात्याख्यायामेकस्मिन्निति" "अस्मदो द्वयोश्चे"ति सूत्राभ्यां बहुवचनस्यैकत्वद्वित्वार्थकत्वेन "फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे"तिष्यपुनर्वस्वोर्नक्षत्र-

३ न्यु०

द्वन्द्वे''इत्यादिसूत्रैर्द्विवचनस्यापि बहुत्वार्थकत्वेन घटरूपविशेष्यवाचकपदोत्तरसुजसाद्यर्थ-संख्याविरुद्धसंख्याया अप्रसिद्ध्या तत्र समानवचनकत्वाऽसिद्धेः। अत्र नियमे संख्येत्युपलक्षणम् संख्यापदेन अपेक्षाबुद्धिविशेषविषयत्वादिरूपविभक्तिलब्धस्याऽपि। अन्यथा नीला वर्णा इत्यादौ गुणे गुणानङ्गीकारात्समानवचनकत्वन्न स्यात्। नीला घटा इत्यादौ तु संख्याया एव प्रतीतिरत एव नियमाकारे संख्यात्वेनापेक्षाबुद्धिविशेषविषयत्वेन च न संख्यायाः प्रवेशोऽपि तु विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयत्वेनैवेति फलितार्थः। अत्र नियमे विरुद्धत्वन्नाम स्वाधिकरणाऽवृत्तित्वार्थकत्वम्। अत्र पर्याप्तिसम्बन्धावच्छिन्नाया एव संख्यानिष्ठाधेयतानिरूपिताधिकरणताया ग्रहणन्तथा च बहुत्वनिष्ठाधेयतानिरूपिताधिकरणता बहुष्वेव एकत्वनिष्ठाधेयतानिरूपिताधिकरणता एकत्रैवेत्यादि। अत एव नीलो गुणाविति वाक्यस्य न प्रामाण्यम्। भिन्नपदोपादाने तु विशिष्टसत्ताशुद्धसत्तानतिरिक्तत्ववत् संख्याया भिन्नत्वाद् नीलो गुणौ नीलो गुणा इत्यनिष्टमापद्येतैव। अतो भिन्नपदन्त्यक्त्वा विरुद्धमिति कथितम्। अस्मिन्नियमे वाचकपदेन बोधकस्यैव ग्रहणमन्यथा लाक्षणिकविशेष्यवाचकस्याऽग्रहणाऽपत्तेः। वेदाः प्रमाणमित्यत्र जस्विभक्तेरेकत्वे लक्षणया जसर्थं एकत्वं तद्विरुद्धायास्संख्यायाः प्रमाणपदेऽभावादेतन्नियमाऽप्रवृत्तौ समानवचनत्वापत्तिदोषभिया तात्पर्यपदनिवेशो नियमे बोध्यः। इति परीक्षालेखप्रकारः।

पुरूरवोमाद्रवसाविति—

नैमित्तिके कालकामौ काम्ये च धूरिलोचनौ।
पुरूरवामाद्रवाश्च पार्वणे समुदाहृतौ॥

क्रतुदक्षसत्यवसुकालकामधूरिलोचनपुरूरवोमाद्रवस इति विश्वेदेवपदवाच्याः। इष्टिश्राद्धादौ द्वयोर्द्वयोरेव प्रधानतया पूजनं विहितम्। तत्र पुरूरवोमाद्रवसौ विश्वेदेवा इति तात्पर्य्यम्। तत्र विशेष्यवाचकं विश्वेदेवपदन्तदुत्तरवर्त्तिविभक्तिर्जस्विभक्तिस्तत्तात्पर्यविषयसंख्या बहुत्वसंख्या तद्विरुद्धाया द्वित्वसंख्याया एव विवक्षितत्वाद् न समा-

---

गुणे गुणानङ्गीकारादिति—घटादिगतनीलादिकम्प्रति कपालादिगतनीलादिकमेव हेतुः प्रतीयत इति गुणकार्यम्प्रति गुणस्यापि कारणत्वापत्तिरिति स्वाभीष्टसंसिद्धये ''समवायेन कार्यम्प्रति तादात्म्येन द्रव्यङ्कारणमि''ति नियममङ्गीकुर्वते तार्किकाः। तथा च समवायेन गुणम्प्रति द्रव्यस्यैव कारणता नतु गुणस्येति फलितार्थः।

न चैको गन्धो रसात् पृथगित्यादिप्रतीत्या पृथक्त्वगुणस्य एकत्वसंख्यायाश्च गुण एव प्रतीयमानतया नियमविरोध इति वाच्यम्? एकार्थसमवायसम्बन्धेन तादृशी प्रतीतिर्नतु समवायेनेति व्याख्यानेन नियमाविरोधात्। एकस्मिन्नर्थे (अधिकरणे) यस्समवायस्स एवैकार्थसमवायस्संसर्गः। यथा नीलो गुणो द्रव्ये वर्त्तते तथा एकत्वमपीति परम्परासम्बन्धेन तथा प्रतीतेः।

वस्तुतस्तु स्वाश्रयसमवेतद्रव्यत्वसम्बन्धेन कपालादिगतनीलादेः घटादिगतनीलादिकम्प्रति हेतुत्वस्यावश्यवक्तव्यतया तादृशनियमो नाङ्गीकार्य एव।

नवचनत्त्वम्, अपि तु द्वित्वसंख्यायाश्शिष्टैर्विवक्षितत्वाद् द्विवचनान्तत्वमेव युक्तम्।

वस्तुतस्तु—पुरूरवस्शब्दवपदसकारान्तमेवेति विशिष्टाः।

नन्वेवन्नियमे स्तोकम्पचत इत्यादौ पचधातुरूपविशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयीभूतसंख्या च द्वित्वसंख्या तद्विरुद्धैकत्वसंख्यायाः क्रियाविशेषणवाचकस्तोकादिपदेऽविवक्षितत्वात्समानवचनकत्वं स्यादिति चेन्न? उक्तनियमघटकविभक्तिपदेन विशेष्यवाचकपदाऽव्यवहितोत्तरा विभक्तिर्गृह्यते। प्रकृते तु विशेष्यवाचकम्पदम्पच् इति शपा व्यवधानेनाव्यवहितोत्तरविभक्त्यभावेनाक्षतेः। न च अदादौ शपो लुकि स्तोकमत्त इत्यादौ व्यवधानाऽभावादद्धातुरूपविशेष्यवाचकपदाव्यवहितोत्तरतिङ्विभक्तितात्पर्यविषयद्वित्वसंख्याविरुद्धैकत्वसंख्याया अविवक्षितत्वेन समानवचनकत्वापत्तिर्दुर्वारैवेति वाच्यम्? पूर्वोक्ताव्यवहितोत्तरत्वानिवेशलाघवेन विभक्तिपदेन सुब्विभक्तेरेव ग्रहणात्। न च स्तोकम्पाकावित्यादौ स्तोकादेर्धात्वर्थविशेषणत्वेऽपि समानवचनकत्वापत्तिरिति वाच्यम्? विशेष्यवाचकपदाऽव्यवहितोत्तरसुब्विभक्तिग्रहणेन प्रकृते विशेष्यवाचकपचपदम् तदव्यहितोत्तरत्वन्न विभक्तेर्घञा व्यवधानात्। न च पच्धातोः क्विपि स्तोकम्पचावित्यादौ व्यवधानाऽभावेन समानवचनकत्वं स्यादेवेति वाच्यम्? अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासमानाधिकरणाया विशेष्यवाचकपदाऽव्यवहितोत्तरविभक्तितात्पर्य्यविषयसंख्याया ग्रहणेनात्र विभक्त्यर्थसंख्यायाः कर्तृवृतित्वेनाऽदोषात्। किञ्च विभक्तिश्च विशेष्यविशिष्टा गृह्यते विभक्तौ विशेष्यवैशिष्ट्यञ्च स्वनिष्ठविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्व—स्ववाचकपदोत्तरत्वोभयसम्बन्धेन। यथा नीलो घट इत्यत्र घटनिष्ठविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं स्ववाचकपदोत्तरत्वमपि विभक्तेरस्तीति लक्षणसमन्वयात्समानवचनकत्वम्। स्तोकम्पचावित्यादौ विभक्त्यर्थसंख्यायाः क्विबर्थकर्त्तर्य्यन्वयो न तु पच्धात्वर्थव्यापारे विशेष्यस्तु अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावानेव गृह्यते। एवञ्च विशेष्यः पचधात्वर्थ एव परन्तु तन्निष्ठविशेष्यतानिरूपितसंख्यानिष्ठप्रकारतैव नास्ति। एवञ्च द्वितीयसम्बन्धसत्त्वेऽपि उभयसम्बन्धेन वैशिष्ट्याऽभावाल्लक्षणसमन्वयस्याऽभावेन नात्र समानवचनत्वमित्याश्रयणात्। अत्र यद्यपि विभक्तौ क्विबर्थरूपवैशिष्ट्यमस्ति परन्तूक्तविशेष्याभावात्। इति परीक्षालेखप्रकारः।

अथ शास्त्रार्थप्रकारः।

नन्वेवं स्तोकं सुन्दरौ पचावित्यत्र सुन्दरावित्यस्य क्विबर्थकर्त्रा सहाऽभेदान्वयस्तथा च अभेदसम्बन्धावच्छिन्नसुन्दरनिष्ठप्रकारतानिरूपितविशेष्यताश्रयरूपक्विबर्थकर्त्ताऽस्त्येव। एवञ्च स्वविशेष्यः क्विबर्थकर्त्ता तन्निष्ठविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वम् स्वप्रयोजकस्तोकपदेऽपि स्यादिति चेन्न? प्रत्यासत्तिन्यायेन ययोर्विशेषणविशेष्यवाचकपदयोस्समानवचनकत्वमिष्टन्तादृशविशेषणवाचकपदप्रयोज्याऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासमानाधिकरणाया विशेष्यवाचकपदाऽव्यवहितोत्तर-

विभक्तितात्पर्यविषयसंख्याया ग्रहणमुदासीनाभेदसम्बन्धावच्छिन्नप्रकारताया आश्रयणेन दोषदानस्यानुचितत्वात् ।

किञ्च—स्वविशेष्यताविशिष्टं यद्विशेषणवाचकम्पदन्तद्विशेष्यताप्रयोजकसमानवचनम् । पदे विशेष्यतावैशिष्ट्यञ्च स्वनिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्व-स्वविशिष्टविभक्तितात्पर्य्यविषयसंख्याविरुद्धसंख्याविषयकत्रोधजनकत्वेन तात्पर्यविषयीभूतविभक्तिप्रकृतित्वाऽभाववत्त्वोभयसम्बन्धेन । विभक्तौ स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्व- स्वप्रयोजकपदोत्तरत्वोभयसम्बन्धेन । यथाऽत्रैव क्विबर्थनिष्ठविशेष्यताविशिष्टं सुन्दरपदं जातमेव । तथा हि प्रथमसम्बन्धस्तु सुतरां सुन्दरपदे जातः, औविभक्त्यर्थनिष्ठद्वित्वसंख्यायाःक्विबर्थकर्त्तर्य्येवान्वयः । एवञ्च स्वं कर्तृविशेष्यता तदवच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमस्ति एवं स्वप्रयोजकपदोत्तरत्वमपि विभक्तावस्तीत्युभयसम्बन्धेन स्वविशिष्टविभक्तितात्पर्येत्यादि सर्वं सुन्दरपदेऽस्तीति समानपदत्वञ्जातम्परन्तु स्तोकपदे तु स्तोकपदार्थनिरूपितविशेष्यः पचधात्वर्थस्तन्निष्ठविशेष्यताया उक्तोभयसम्बन्धेन विभक्तौ वैशिष्ट्यन्नास्ति । औविभक्त्यर्थद्वित्वसंख्याया धात्वर्थेऽन्वयाभावाद् धात्वर्थनिष्ठविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतैव नास्ति । अतस्तत्प्रयोजकत्वमप्रसिद्धमेवञ्च द्वितीयसम्बन्धगमनेऽपि, उभयसम्बन्धेन विभक्तेस्स्वविशिष्टाया अप्रसिद्धेः । विशेषणवाचकस्तोकपदे प्रथमसम्बन्धगमनेऽपि उभयसम्बन्धेन विशेष्यतावैशिष्ट्यं स्तोकपदे नास्तीति न समानवचनत्वम् । ननु यत्र भावे क्विप् बाहुलकात् "सम्पदादिभ्यः क्विब्वा वक्तव्य" इति वार्तिकाच्च तत्र क्विप्प्रत्ययेनाऽपि व्यापार एवोच्यते विभक्त्यर्थद्वित्वसंख्यायाश्च व्यापार एवान्वयः । एवञ्च स्तोकं सम्पदावित्यत्रोभयसम्बन्धेन विशेष्यताविशिष्टविभक्तेस्सत्त्वेन तत्तात्पर्येत्यादिसर्वस्य द्वितीयसम्बन्धस्य स्तोकपदे सत्त्वात् समानवचनत्वम्प्राप्तम् । अत्र यद्यपि साध्यतावच्छेदकरूपेण धातुतो व्यापारोपस्थितिः पृथगेव, क्विप्प्रत्ययेन तु लिङ्गसंख्यान्वयितावच्छेदकरूपेण सिद्धावस्थापन्नव्यापारोपस्थितिः पृथगेव, तत्र क्रियाविशेषणानां कर्मत्वमिति न्यायसूत्रन्तु साध्यावस्थापन्नव्यापार एव स्तोकादीनामन्वये कर्मत्वं विदधाति, सिद्धावस्थापन्नव्यापारेऽन्वये तु स्तोका सम्पत् स्तोकः पाक इत्येव । एवञ्चोभयव्यापारोऽत्र सिद्धः तत्र विभक्त्यर्थसंख्यायाः क्विबर्थव्यापार एवान्वयः । एवञ्चोक्तोभयसम्बन्धेन स्वविशिष्टविभक्तेरभावाद् धात्वर्थनिष्ठविशेष्यताया वैशिष्ट्यं स्तोकपदे न गतं क्विबर्थप्राप्तम् । निष्ठविशेष्यताया वैशिष्ट्यं च प्रथमसम्बन्धेन न गतमिति सर्वथा समानवचनत्वन्न तथापि विशेष्यतावच्छेदकं सम्पत्तित्वमपि तदवच्छिन्ना क्विबर्थनिष्ठविशेष्यताऽप्यस्त्येवेति तन्निरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं विभक्तावस्त्येवेति । स्ववि-

शिष्टविभक्तितात्पर्य्येत्यादि सर्वं स्तोकपदेऽस्त्येवेति समानवचनत्वन्दुर्वारमेवेति । किञ्च नियमे विभक्तिपदेन सुप एव ग्रहणं क्विपोऽनुसंधानेन विशेष्यवाचकपदाऽव्यवहितोत्तरसुपोऽभावेन दोषाऽभावात् क्विबनुसन्धानेनैवोपपत्तौ नान्योऽपि निवेशस्तत्रेति यावद् इति चेन्न ? स्वविशिष्टा या विभक्तिरिति स्वरूपम्, तत्र वैशिष्ट्यञ्च पूर्वसम्बन्धंविहाय स्वानवच्छेदकधर्मानवच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं स्वप्रयोजकपदोत्तरत्वम्, एवञ्च स्वानवच्छेदकसिद्धत्वधर्मावच्छिन्नैव, अन्त्याया विशेष्यतायास्तु स्वानवच्छेदकधर्मावच्छिन्ना धात्वर्थनिष्ठा विशेष्यता तन्निरूपितसंख्यानिष्ठप्रकारतैव नास्तीति विभक्तौ वैशिष्ट्याऽभावेन स्तोकपदेऽपि वैशिष्ट्यमप्रसिद्धमिति समानवचनत्वमप्रसिद्धमिति तात्पर्यात् । सम्प्रति ग्रन्थस्थलक्षण एव दोषस्तथा हि सुन्दरा दारा शोभना रामदाराः इत्यत्र दारपदोत्तरजसूविभक्तेः पदसाधुत्वमात्रेण प्रयोगो न तु बहुत्वसंख्याप्रयोजकत्वेन एकव्यक्तिमात्रबोधनतात्पर्येणैव तत्र जसः प्रयोगात् । न तु बहुत्वसंख्याप्रयोजकत्वेन "दाराः पुंसि च भूम्न्येवे"ति कोशस्वरसात् एकस्त्रीतात्पर्येणापि साधुत्वमात्रार्थकजसः प्रयोगः । एवञ्च विशेष्यवाचकपदं दारपदन्तदुत्तरविभक्तितात्पर्यसंख्यैव नास्ति इति समानवचनत्वलक्षणसमन्वयाऽभावात्कदाचित् सुन्दरो दारा इति स्यान्न तु सुन्दरा दारा इति चेन्न ? विशेष्यताविशिष्टम्पदं स्वसमानवचनम् । पदे विशेष्यतावैशिष्ट्यञ्च स्वप्रयोजकपदोत्तरविभक्त्यभाववत्त्वसम्बन्धेन । विभक्तेरभावीयप्रतियोगितावच्छेदकसम्बन्धश्च स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतसंख्याविरुद्धसंख्याविषयकबोधजनकत्वेन तात्पर्यविषयीभूतविभक्तिप्रकृतित्वरूपः । एवञ्च स्वं दारपदोत्तरविभक्तिर्जस् तज्जन्यबोधविषयत्वेन तात्पर्यविषयीभूतसंख्यैव नास्ति तथा च सर्वमप्रसिद्धमेवेत्युभयसम्बन्धेन स्वाऽभाववत्त्वस्य सुन्दरपदे विद्यमानतया समानवचनत्वं जातमितिवर्णनात् । नन्वेवं स्तोकम्पचावित्यत्र धात्वर्थनिष्ठविशेष्यताविशिष्टं स्तोकपदमस्त्येवेति समानवचनत्वं स्यादेव । तथा हि विशेष्यताप्रयोजकविभक्तिरौविभक्तिस्तज्जन्यबोधविषयत्वेन तात्पर्यविषयीभूतसंख्या द्वित्वम् तद्विरुद्धैकत्वसंख्याबोधजनकत्वेन तात्पर्यविषयीभूता द्वितीयैकवचनाम्विभक्तिर्नास्ति इति तत्प्रकृतिकत्वं स्तोकपदस्याऽप्रसिद्धमिति । एवञ्चोक्तसम्बन्धेन स्वाभाववत्त्वात्स्तोकपदस्य समानवचनत्वं स्यादिति चेन्न ? पदे विशेष्यतावैशिष्ट्यनियामकस्सम्बन्ध एकश्चोक्त एव, द्वितीयश्च स्वनिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वरूपः, तृतीयस्तु स्वविशिष्टविभक्तिसजातीयविभक्तिप्रकृतित्वरूपः । तृतीयसम्बन्धे विभक्तौ स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वस्वप्रयोजकपदोत्तरत्वोभयसम्बन्धेन । एवञ्च स्तोकं सम्पदावित्यत्र स्तोकपदे आद्योभयसम्बन्धगमनेऽपि उभयसम्बन्धेन स्वविशिष्टविभक्तेरभावात्तृतीयसम्बन्धस्य स्तोकपदेऽनागमनात्तृतीयसम्बन्धे विशेष्यताविशिष्टस्याऽसत्त्वात् न स्तोकपदस्य समानवचनत्वमित्याशयात् ।

वस्तुतस्तु —

यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयीभूतसंख्याविरुद्धसंख्यायाः क्रियाविशेषणवाचकपदातिरिक्तविशेषणवाचकपदेऽविवक्षितत्वन्तत्रैव समानवचनकत्वमिति नियमाकारः। क्रियाविशेषणवाचकातिरिक्तत्वन्तु क्रियानिष्ठविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारताप्रयोजकभिन्नत्वन्तेन स्तोकं पचतः स्तोकं सम्पदौ स्तोकं पचावित्यादिषु क्रियाविशेषणवाचकपदसत्त्वात् न दोष इति तदर्थन्न परिष्कारधाराधृतिरिति सूक्ष्मवेत्तारः।

नन्वेवं सुन्दरा दारा इत्यत्रैव समानवचनत्वन्न स्यात्तथा हि, तृतीयसम्बन्धघटकप्रथमसम्बन्धेन वैशिष्ट्याऽभावात् तत्र दारनिष्ठा या विशेष्यता तदवच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारतावत्प्रयोजकत्वं जस्विभक्तेर्नास्तीति चेत्सत्यम्? विभक्तौ स्ववैशिष्ट्यनियामकसम्बन्धमपहाय तत्स्थाने स्वाऽभाववत्त्वं गृह्यते, अभावीयप्रतियोगितावच्छेदकसम्बन्धश्च स्वानवच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वरूपः, एवञ्च स्वानवच्छेदकः पटत्वादिधर्मस्तदवच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारतैव नास्तीति तत्प्रयोजकत्वञ्च विभक्तेरप्रसिद्धमिति एतत्सम्बन्धेन दारपदोत्तरजस्विभक्तेस्स्वाऽभाववत्तया तत्सजातीयविभक्तिप्रकृतित्वात्सुन्दरपदे समानवचनत्वं सिद्धम्। विभक्तिसाजात्यञ्चेदानीं सुप्त्वेन बोध्यम्। वेदाः प्रमाणमित्यत्र तु प्रथमसम्बन्ध एव न गतस्तेन तत्र समानवचनत्वनियमो नेति तत्त्वम्। तथाहि, प्रमाणपदोत्तरसुविभक्त्यर्थैकत्वसंख्या विवक्षिता ततश्च वेदपदोत्तरजस्विभक्तिजन्यबोधविषयत्वेन तात्पर्यविषयीभूतसंख्या बहुत्वमिति तद्विरुद्धैकत्वसंख्याविषयकबोधकजनकत्वेन तात्पर्यविषयीभूतसुविभक्तिप्रकृतित्वसम्बन्धसत्त्वे तत्सम्बन्धेन प्रमाणपदे स्वाऽभाववत्त्वस्य वक्तुमशक्यत्वात्। ननु मिथिलादेशोद्भवत्वविशिष्टजनकापत्यत्वप्रवृत्तिनिमित्तेन प्रतीयमानाया मैथिल्या विशेषणत्वस्यैव न्याय्यत्वेन मैथिल्यो दारा इत्येवंविधप्रयोगस्यैव ज्यायस्तरत्वेन महानाटके "त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दारा" इति कथम् दारपदे तृतीयसम्बन्धेन मैथिलीनिष्ठविशेष्यतावैशिष्ट्यसत्त्वात् समानवचनत्वं स्यादिति चेन्न? तृतीयसम्बन्धस्याग्रे साधुत्ववत्त्वन्निवेश्यते तथा च तृतीयसम्बन्धाऽकारः स्वविशिष्टविभक्तिसजातीयविभक्त्यव्यवहितपूर्वत्वसमानाधिकरणसाधुत्ववत्त्वेऽपि विभक्तिसाजात्यञ्चात्र सुप्त्वादिनैव बोध्यम्। तथा च फलितस्सम्बन्धः स्वविशिष्टविभक्तिवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसमानाधिकरणसाधुत्ववत्त्वम। एवञ्च स्वविशिष्टाविभक्तिर्मैथिलीपदोत्तरसुविभक्तिस्तत्सजातीयसुविभक्त्यव्यवहितपूर्वत्वसमानाधिकरणसाधुत्ववत्त्वं दारपदे नास्तीति तस्य बहुवचन एव प्रयोगादिति लक्षणसमन्वयाऽभावान्न समानवचनत्वमिति भावः। नन्वेवं सति नीला घटा इत्यत्र यद्यपि विशेष्यताप्रयोजकघटपदोत्तरजस्विभक्तिसजातीयजस्विभक्त्यव-

हितपूर्वत्वसमानाधिकरणसाधुत्ववत्त्वं जसन्तनीलपदस्यास्ति तथापि नीलो घटा इत्यत्रैतस्य प्रथमान्तनीलपदस्य जसूविभक्त्यव्यवहितपूर्वत्वसमानाधिकरणसाधुत्वव-त्त्वाऽभावान्नीलघटपदस्यापि समानवचनत्वन्न स्यादिति चेन्न ? साधुत्ववत्त्वसमानाधि-करणानुपूर्वीमत्त्वस्य निवेशेनाऽदोषात् । तथा हि, तादृशोक्तपूर्वकसाधुत्ववत्त्वम् जसन्त-नीलपदस्याऽस्तीति तद्वृत्तिनीलत्वानुपूर्वीमत्त्वं नीलो घटा अत्रत्यघटपदस्याऽप्यस्तीति न दोषः । ननु स्वविशिष्टा या मैथिलीपदोत्तरसुविभक्तिस्तत्सजातीयसुविभक्त्यव्यवहि-तपूर्वत्वसमानाधिकरणसाधुत्ववत्त्वन्दारयतीत्यर्थकक्रियावाचकदारशब्दस्यास्तीति तथा च तद्वृत्त्यानुपूर्वीमत्त्वं मैथिलीदारा अत्रत्यदारपदस्याऽस्तीति लक्षणसमन्वयात्समानवच-नत्वं मैथिली तस्य दारा इत्यत्र स्यादिति चेत्सत्यम् ? तृतीयसम्बन्धमपहाय तत्स्था-ने स्वविशिष्टवृत्त्यानुपूर्वीमत्त्वरूपस्सम्बन्धो गृह्यते । स्ववैशिष्ट्यञ्च स्वविशिष्टवि-भक्तिसजातीयविभक्तयव्यवहितपूर्वत्वसमानाधिकरणसाधुत्ववत्त्वमिति पूर्ववदेव। विभक्तौ स्ववैशिष्ट्यञ्च पूर्वोक्तोभयसम्बन्धेन । द्वितीयश्च स्वनिरूपिताऽभेदसम्बन्धावच्छिन्नप्र-कारतावच्छेदकत्वेन तात्पर्यविषयीभूतधर्मावच्छिन्नमुख्यविशेष्यताकबोधजनकत्वेन तात्प-र्यविषयत्वोभयसम्बन्धेन । एवञ्च यद्यपि स्वन्तक्रियावाचकदारपदे प्रथमसम्बन्धो गतः परन्तु द्वितीयसम्बन्धो न गतस्तथा हि स्वनिरूपिताऽभेदसम्बन्धावच्छिन्ना प्रकारता जसन्तदारपदनिष्ठा तदवच्छेदकत्वेन तात्पर्यविषयीभूतधर्मो दारत्वन्तदवच्छिन्नमुख्यवि-शेष्यताकबोधजनकत्वेन तात्पर्यविषयीभूतत्वं जसन्तदारपदस्यैव न तु क्रियावाचकदारप-स्येति उभयसम्बन्धेन स्वविशिष्टः क्रियावाचकदारशब्दो जातः । जसन्तदारपदे तु प्रथ-मसम्बन्ध एव न गत एवञ्चोभयसम्बन्धेन स्वविशिष्टस्त्रीशब्दो जातस्तद्वृत्तिस्त्रीत्वरू-पानुपूर्वीमत्त्वं जसन्तदारपदस्य नास्तीति लक्षणसमन्वयाऽभावान्न दारमैथिलीपदयोस्स-मानवचनत्वम् । स्त्रीशब्दस्योभयसम्बन्धेन स्वविशिष्टत्वन्तु तस्याः स्त्रिया दारपदवाच्यस्य चैक्यात्स्त्रीत्वनिष्ठप्रकारतावच्छेदकं दारत्वमपीत्याशयात् ।

वस्तुतस्तु-विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया असति बाधके यत्र विशेषणवाचकपदे अविवक्षितत्वन्तत्रैव समानवचनकत्वमिति नियमकरणे मैथिली तस्यदा रा इत्यादिषु न दोषः । "दाराः पुंसि च भूम्न्येवेति" कोशस्य बाधक-त्वेन क्लृप्तत्वादिति कुशाग्रबुद्धयः । नन्वेवमपि पुरुषपदात् पुरुषत्वजातिगतैकत्वविवक्षया एकवचने त्रयः पुरुष इति वाक्यस्याऽप्यनिष्टस्य प्रामाण्यमापद्येत त्रिशब्दोत्तरजसूविभक्तेः

---

विशेषणत्वञ्च—विद्यमानत्वे सतीतरव्यावर्त्तकत्वम् । नचैवं नीलोत्पलमित्यादिस्थले विशेष्यीभू-तोत्पलादेरपि विद्यमानत्वे सति घटपटादीतरव्यावर्त्तकतया विशेषणत्वापत्त्या कदाचिद् उत्पलनीलादे-रपि साधुत्वमापद्येतेति वाच्यम् ? एवमापत्तिर्भीतैरेव "जातितद्भिन्नप्रवृत्तिनिमित्तकानां शब्दानांमध्ये जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचकम्" इति नियमस्य स्वीकृतत्वेन दोषाभावात् । तथाहि चतु-

पदसाधुत्वमात्रेण प्रयोगो न तु संख्यान्वयतात्पर्येण, एवञ्च विशेष्यतावैशिष्ट्यं विशेषणवाचकत्रिपदे न जातम् प्रथमसम्बन्धेन, द्वितीयसम्बन्धेन वैशिष्ट्यं गतमपि परन्तु स्वविशिष्टवृत्त्यानुपूर्वीमत्त्वरूपस्तृतीयसम्बन्धस्तद्घटकोभयसम्बन्धमध्ये प्रथमसम्बन्धो न गतस्तथा हि स्वविशिष्टविभक्तिः पुरुषपदोत्तरजसविभक्तिस्तत्सजातीयविभक्त्यव्यवहितपूर्वत्वसमानाधिकरणसाधुत्ववत्त्वं त्रिशब्दस्य नास्तीति उभयसम्बन्धेन स्वविशिष्टः त्रिशब्दो न जातः किन्तूदासीनः कोऽप्यस्ति तद्वृत्त्यानुपूर्वीमत्त्वं नास्तीति त्रितयसम्बन्धेन स्वविशिष्टत्वं त्रिपदे नास्तीति त्रिपदपुरुषपदयोस्समानवचनत्वन्न स्यात्, एवञ्च त्रयः पुरुष इत्यनिष्टः कुतो नेति चेन्न ? यद्यप्यत्रापत्तिवारणायोक्तोभयसम्बन्धेन स्वविशिष्टवृत्त्यानुपूर्व्यभाववत्त्वरूपस्तृतीयस्सम्बन्ध उच्यते एवञ्चोक्तसम्बन्धेन स्वविशिष्ट उदासीनस्तद्वृत्त्यानुपूर्व्यभाववत्त्वस्य त्रिशब्दे विद्यमानतया लक्षणसमन्वयात् त्रिशब्दपुरुषशब्दयोस्समानवचनकत्वसिद्ध्या त्रयः पुरुषा इत्युभयत्र जसन्तत्वं विद्यताम् परन्तु मैथिली तस्य दारा इत्यत्राऽपि स्वविशिष्टं स्त्रीपदन्तद्वृत्त्यानुपूर्व्यभाववत्त्वं दारपदेऽपि मैथिलीपदसमानवचनत्व स्यादतस्तद्वारणाय तृतीयसम्बन्धघटकप्रथमसम्बन्धे साधुत्वस्य स्थाने साधुत्वाऽभाववत्त्वन्निवेश्यते। सम्बन्धाकारस्तु स्वविशिष्टविभक्तिसजातीयविभक्त्यव्यवहितपूर्वत्वसमानाधिकरणसाधुत्वाऽभाववत्त्वरूपः। एवञ्च जसन्तदारपदेऽपि साधुत्वाऽभावपर्यन्तः प्रथमसम्बन्धो गतस्तथा चोभयसम्बन्धेन स्वविशिष्टं जसन्तदारपदन्तद्वृत्ति दारत्वानुपूर्वीमत्त्वमेव मैथिली दारा अत्रत्यदारपदस्यास्ति न तु स्वविशिष्टदारत्वानुपूर्व्या अभाववत्त्वमिति लक्षणसमन्वयाऽभावान्न मैथिलीदारपदयोस्समानवचनत्वम्। नन्वेवं सति त्रयः पुरुषा इत्यत्रापि साधुत्वाऽभावपर्यन्तः प्रथमसम्बन्धो गत एवास्ति। उभयसम्बन्धेन स्वविशिष्टं त्रिपदं तद्वृत्त्यानुपूर्व्या अभावत्वं दारपदे नास्तीति दार इति वदताऽपि समानवचनं न स्यादिति चेन्न ? वक्ष्यमाणरीत्या स्वविशिष्टमेव त्रिपदन्न जातं किन्तूदासीनं तद्वृत्त्यानुपूर्व्या अभाववत्त्वं त्रिपदेऽस्त्येवेति समानवचनं सिद्धम्। तथाहि तृतीयसम्बन्धे प्रथमसम्बन्धाकारस्तूक्त एव परन्तु स्वनिरूपिताभेदसम्बन्धेत्यादिद्वितीयसम्बन्धमपहाय स्वविशिष्टो यो धर्मस्तद्धर्मावच्छिन्नमुख्यविशेष्यकबोधजनकत्वेन तात्पर्यविषयत्वरूपधर्मे विशेष्यतावैशिष्ट्यञ्च स्वनिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकत्वेन तात्पर्यविषयत्व-स्वप्रयोजकपदोत्तरविभक्तिवाच्यसंख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वैतदुभयसम्बन्धेन। एवञ्च त्रयः पुरुष इत्यत्र प्रकारताव-

---

* त्रयी शब्दानाम्प्रवृत्तिः जातिगुणक्रियासंज्ञाभेदात्। केचिज्जातिप्रवृत्तिनिमित्तकाःकेचिद् गुणप्रवृत्तिनिमित्तकाः केचित् क्रियाप्रवृत्तिनिमित्तकाःकेचित् संज्ञाप्रवृत्तिनिमित्तकाश्शब्दा भवन्ति। क्रमशः ब्राह्मणः नीलः पाचकः देवदत्त इत्युदाहरणम्। तथा च आपाद्यमाने नीलादिपदस्य विशेषणत्वे बाधकाभावः। अत एव "कडाराः कर्मधारये" इति पाणिनीयञ्चरितार्थमन्यथा विशेष्यविशेषणभावस्य कामचारपक्षे वैयर्थ्यन्दुर्वारमेव स्यादिति।

च्छेदकत्रित्वधर्में अत्रत्यप्रथमसम्बन्धगमनेऽपि द्वितीयसम्बन्धो न गतस्तथा हि स्वम् पुरुषनिष्ठा विशेष्यता तत्प्रयोजकपदोत्तरविभक्तिः पुरुषदोत्तरसुविभक्तिस्तद्वाच्यैकत्व-संख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वन्नास्ति किन्तु बहुत्वसंख्यावच्छिन्ना-नुयोगिताकपर्याप्तिप्रतियोगित्वं त्रित्वेऽस्तीति उभयसम्बन्धेन स्वविशिष्टस्त्रिशब्दो न जातस्तथा चोभयसम्बन्धेन स्वविशिष्टधर्मावच्छिन्नमुख्यविशेष्यताकबोधजनकत्वेन ता-त्पर्य्यविषयस्त्रिशब्दो न जातः किन्तूदासीनोऽस्तीति तद्वृत्त्यानुपूर्व्यभाववत्त्वं त्रिशब्देऽ-स्तीति समानवचनत्वं सिद्धमित्याशयात् । मैथिली दारा इत्यत्र सुविभक्तिवाच्यैकत्व-संख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वन्दारत्वेऽस्त्येवेति यत्रैकस्त्रीविषयकबो-धजनकत्वेन एकत्वेनैव जसन्तदारपदस्य प्रयोगः तत्रोभयसम्बन्धेन स्वविशिष्टध-र्मो दारत्वन्तद्धर्मावच्छिन्नमुख्यविशेष्यताकबोधजनकत्वेन तात्पर्यविषयत्वस्य दार-पदे सत्त्वाद् द्वितीयसम्बन्धो गतः, स्वविशिष्टविभक्तिसजातीयेत्यादिप्रथमसम्ब-न्धोऽपि गतस्तथा च स्वविशिष्टं दारपदन्तद्वृत्त्यानुपूर्व्यभाववत्त्वं दारपदे नास्तीति लक्षणसमन्वयाऽभावान्न समानवचनत्वमिति भावः ।

वस्तुतस्तु—मैथिली दारा रुक्मिणीसत्यभामे कृष्णस्य दारा इत्यादौ दोषवारणाय विशेषणवाचकपदे नियतवचनकातिरिक्तत्वनिवेशेन दारशब्दस्य "दाराः पुंसि चभूम्न्येवे" ति कोशबलेन नियतवचनक तया न दोषः । योगरूढंवा पदमेतत् । नियतवचनत्वन्तु-एकवचनत्वद्विवचनत्वबहुवचनत्वान्यतमधर्मव्याप्यविषयताप्रयोजकत्वम् । कोषाद्यनु-रोधेनेत्यपि निवेश्यम् । अत एव सर्वे दोषाः परिहृता भवन्तीति तत्त्वम् ।

नन्वेवं सति त्रिबहुपुष्पवन्तादयश्शब्दा नियतवचना "एकयोक्त्या पुष्पवन्तौ दिवा-करनिशाकरा"विति लिङ्गात् पुष्पवन्तौ दिवाकराविति साधुः । तत्र स्वार्थैकत्वस्याविव-क्षया पुष्पवन्तौ देव इति प्राप्नोति धर्मे विशेष्यतानियामकवैशिष्ट्यस्य द्वितीयसम्बन्ध-स्याऽपि सत्त्वात्तथा हि स्वप्रयोजकपदोत्तरसुविभक्तिस्तद्वाच्यैकत्वसंख्यावच्छिन्नानुयोगि-त्वं चन्द्रत्वे सूर्यत्वे वास्ति एवन्द्वितीयसम्बन्धो गतः । तथा चोभयसम्बन्धेन स्ववि-शिष्टधर्मश्चन्द्रत्वं तद्धर्मावच्छिन्नमुख्यविशेष्यताकबोधजनकत्वेन तात्पर्यविषयपुष्पवन्त-शब्दः । स्वविशिष्टविभक्तीत्यादिप्रथमसम्बन्धविशिष्टोऽपि । एवञ्च तद्वृत्त्यानुपू-र्व्यभाववत्त्वन्नास्तीति लक्षणसमन्वयाऽभावान्न समानवचनत्वमिति पुष्पवन्तौ देव इत्या-पद्येतेति चेन्न ? तृतीयसम्बन्धश्च स्वविशिष्टवृत्त्यानुपूर्व्यभाववत्त्वरूपस्तत्र वैशिष्ट्यञ्च स्वविशिष्टविभक्तीत्यादिप्रथमसम्बन्ध उक्त एव । द्वितीयसम्बन्धस्तु उक्तोभयसम्ब-न्धेन स्वविशिष्टो यो धर्मस्तद्विशिष्टत्वरूपः । तत्र धर्मे वैशिष्ट्यञ्च स्वावच्छिन्नमुख्यवि-शेष्यताकबोधजनकत्वेन तात्पर्यविषयत्व-स्वपर्याप्तशक्यतावच्छेदकताकत्वोभयसम्बन्धेन । एवञ्चोक्तोभयसम्बन्धेन स्वविशिष्टो धर्मश्चन्द्रत्वन्तद्धर्मपर्याप्तशक्यतावच्छेदकताकत्वं पुष्पवन्तशब्दस्य नास्तीति स्वविशिष्टधर्मविशिष्टत्वरूपस्य तृतीयसम्बन्धघटकद्वितीय-

सम्बन्धस्य गमनम्पुष्पवन्तशब्दे न जातं किन्तूदासीन एव। एवञ्च स्वविशिष्टमुदासीनपदन्तद्वृत्त्यानुपूर्व्यभाववत्त्वं पुष्पवन्तपदेऽस्त्येवेति लक्षणसमन्वयात्पुष्पवन्तदेवपदयोस्समानवचनत्वसिद्धया न पुष्पवन्तौ देव इति वाक्यमपि तु पुष्पवन्तौ देवावित्येवेति। विशेषणवाचकपदे विंशत्यादिसंख्यावाचकातिरिक्तत्वस्य निवेशेन विंशतिर्ब्राह्मणाः द्वे-विंशती इत्यादीनामपि साधुत्वमित्यलम्।

किञ्च विशेष्यवाचकपदविशिष्टं यत्र विभक्तिप्रकृतित्ववद्विशेषणवाचकं पदन्तत्रैव समानवचनकत्वन्नान्यत्रेति। वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वप्रकारकवक्तृतात्पर्यविशेष्यत्व स्वाव्यवहितोत्तरसुविभक्ति विशिष्टत्वसम्बन्धाभ्याम्। अत्र वैशिष्ट्यञ्च स्वाऽभाववत्त्वस्वविशिष्टानुपूर्वीमत्त्वसम्बन्धाभ्याम्। अभावश्च स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयसंख्याविरुद्धसंख्यानिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यत्वसम्बन्धावच्छिन्नप्रतियोगिताक एव बोध्यः। सम्बन्धघटकवैशिष्ट्यञ्च स्वप्रकृतिप्रयोज्यविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यत्व-स्वविशिष्टभिन्नत्वसम्बन्धाभ्याम्। अत्र वैशि० स्वसमानानुपूर्वीकविभक्तिप्रकृतित्वसमानाधिकरणसाधुत्वाऽभाववत्त्वस्ववृत्तिसंख्यातात्पर्यकविभक्तित्वव्यापकत्वोभयसम्बन्धेन। अत्र व्यापकता च स्वीयप्रवृत्तिनिमित्तावच्छिन्नधर्मितानिरूपितप्रकारतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नप्रकारताप्रयोजकत्वसम्बन्धावच्छिन्ना ग्राह्या। आद्यसम्बन्धफलन्तु राज्ञः पुरुषावित्यादौ यत्र राजपदोत्तरविभक्तिरौत्सर्गिकी साधुत्वार्था तत्र समानवचनत्वपरिहारार्थमभेदसम्बन्धावच्छिन्नेत्यादिः। स्वाव्यवहितोत्तरत्वफलन्तु स्तोकम्पचत इति शपा व्यवधाने स्तोकमत्त इत्यत्र दोषवारणाय सुविति। स्तोकम्पचौ स्तोकं सम्पदावित्यादौ तु क्विपोऽनुसन्धानेन न दोषः। विभक्तिवैशिष्ट्यनियामकस्वाऽभाववत्त्वफलन्तु सुन्दरा दारा इत्यादावप्रसिद्धिनिराकरणम्। स्वविशिष्टवृत्तीत्यत्र स्वप्रकृतिप्रयोज्येत्यादिसम्बन्धफलन्तु मैथिली दारा इतिवत् घटा नील इत्यादिवारणमेव। स्वविशिष्टभिन्नत्वघटकप्रथमसम्बन्धफलञ्च मैथिलीदारा मैथिल्यौ दारा इत्यादीनामुपपत्तिरेव। द्वितीयस्य फलन्तु त्रयः पुरुषः बहवः पुरुषः पुष्पवन्तौ देवः नासत्यौ देव इत्यादिसमस्तवाक्ये न समानवचनकत्वापत्तिरित्येवमेवेति पूज्यमैथिलाः।

अथ कीदृशकार्यकारणभावमूलकोऽयं यत्र विशेष्यवाचकेतिनियम इति प्रश्नः। विशेष्यताविशिष्टप्रकारतासम्बन्धेन शाब्दबोधम्प्रति तादृशविशेष्यताप्रयोजकपदसमानवचनकपदजन्योपस्थितिर्विशेष्यतासम्बन्धेन कारणम्। विशेष्यतावैशिष्ट्यञ्च प्रकारतायां स्वनिरूपितत्वस्वप्रयोजकपदविशिष्टं यद्विभक्तिप्रकृतित्ववत्पदन्तत्प्रयोज्यत्वोभयसम्बन्धेन। पदे पदवैशिष्ट्यञ्च पूर्वोक्तरीत्या बोध्यम्।

वेदाः प्रमाणमित्यत्र च विशेषणपदोत्तरविभक्त्या बहुत्वविरुद्धमेकत्वं विवक्षितम्, तच्च

---

वस्तुतस्तु—वेदाः प्रमाणमित्यादौ जस्प्रत्ययान्तवेदपदसमभिव्याहृतस्वन्तप्रमाणपदसमभिव्याहाररूपाकाङ्क्षाज्ञानङ्कारणमिति। एवमभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाऽऽकाङ्क्षाज्ञानङ्कारणमिति। तथा च अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेनेतिवद् यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयेति नियमोऽपि पूर्वोक्तप्रकारेणाकाङ्क्षाज्ञानकार्यकारणभावमूलक एव। तथा चैतन्नियमस्फुटप्रतिपत्तये नाऽपूर्वः कार्यकारणभाव इति सूक्ष्मवेत्तारः।

ननु सुन्दराभ्यां घटाभ्यामित्यादौ सुन्दरपदोत्तरतृतीयाद्विवचनभ्याम्विभक्तिर्घटपदोत्तरं पञ्चमीविभक्तिर्भ्यामिति विरुद्धविभक्तिसत्त्वेऽभेदान्वयबोधः कुतो न? विशेष्यवाचकघटपदप्रकृतिकभ्याम्विभक्तिभिन्नैव विशेषणवाचकसुन्दरपदोत्तरभ्यांविभक्तिः। तृतीयाविभक्तौ चतुर्थीविभक्तौ पञ्चमीभ्याम्विभक्तौ च समानानुपूर्वीकत्वं समानमेव। तत्तत्प्रत्ययप्रकृतित्वमप्यस्त्येव शाब्दबोधस्वरूपयोग्यतायाः सर्वतोभावेन आकाङ्क्षाज्ञानस्याऽपि सत्त्वात् इति चेत्सत्यम्? सुन्दराभ्यां घटाभ्यामित्यादौ तृतीयार्थकरणत्वविशिष्टतात्पर्येण बोधनदशायां विशेष्यविशेषणयोस्समानविभक्त्यर्थविशिष्टसमानविभक्तिकत्वस्य कारणत्वात्। एवमेव चतुर्थीपञ्चम्योरुभयोरपि कारणत्वकल्पनम्। किञ्च गौरित्युक्ते सर्वे सन्देहा निवर्त्तन्ते नाश्वो न गर्दभ इति न्यायेन एकविषयकज्ञानेऽपरविषयो नास्तीति व्यवहारस्सार्वजनीनस्तथा च विशेष्यवाचकपदोत्तरविभक्त्यर्थकरणत्वरूपार्थविशेष्यवाचकपदोत्तरविभक्त्यर्थसम्प्रदानत्वरूपार्थम्प्रतिबध्नातीति। एवं विशेष्यवाचकपदोत्तरविभक्त्यर्थापादानत्वरूपार्थः विशेष्यवाचकपदोत्तरतृतीयाविभक्त्यर्थकरणत्वरूपार्थम्प्रतिबध्नातीति परस्परप्रतिबध्यप्रतिबन्धकभावकल्पनेन परस्परव्यभिचाराऽभावात् परस्परविरुद्धविभक्तिसत्त्वेऽपि नाऽभेदान्वयबोधस्सुन्दराभ्यां घटाभ्यामित्यादाविति तत्त्वमित्यलम्।

वेदाः प्रमाणमित्यत्र च विशेषणपदोत्तरेति—

विशेष्यवाचकं वेदपदन्तदुत्तरवर्त्तिविभक्तिर्जस्विभक्तिस्तत्तात्पर्यविषयसंख्या बहुत्वसंख्या तद्विरुद्धा एकत्वसंख्या तस्या एव विशेषणवाचकप्रमाणपदे विवक्षितत्वान्न समानवचनत्वमत एकवचनमेव तत्र प्रयुक्तम्। चतुर्षु वेदेषु यद्यप्येकत्वान्वयोऽनर्हस्तथापि प्रकृत्यर्थतावच्छेदके तदेकत्वान्वयः। प्रकृतिपदेन प्रमाणपदं बोध्यम्। प्रमीयतेऽनेनेति प्रमाणम् करणे ल्युट् प्रमितिकरणम्प्रमाणम् प्रमितिकरणतावन्तो वेदा इति फलितार्थः। प्रकृत्यर्थतावच्छेदकञ्च प्रमितिकरणत्वमेव तत्प्रमितिकरणत्वं सर्वेषु वेदेष्वे-

प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वेऽन्वेति ।

कमेव विवक्षितमस्ति । तथा च प्रमितिकरणत्व एवैकत्वान्वयो न तु प्रमितिकरणभूतेषु चतुर्षु वेदेषु । यथानेकेषु घटपटादिष्वेकमेव घटत्वम्पटत्वञ्चानुगमकन्तथाऽनेकेषु प्रमितिकरणेषु वेदेष्वेकमेव हि प्रमितिकरणत्वमनुगमकमिति तत्रैकत्वान्वये न हानिः।

प्रमितिकरणत्व इति ।

वस्तुतस्तु प्रमितिकरणत्वेऽन्वेतीत्यस्य प्रमितिकरणत्वघटकप्रमितित्व इत्यर्थः । वेदानां संसारनिदानमिथ्याज्ञानोन्मूलनक्षमे परमात्मविषयकानुभवे तात्पर्य्यम् सर्वे वेदा यत्पदमामनन्तीति श्रुतेः नत्वनेकवैजात्यविशिष्टानेकानुभव इति ।

ननु सकलवेदजन्यपरमात्मविषयकज्ञानस्य व्यासवामदेवादिभेदेन नानात्वात्कथन्तादृशैकत्वान्वययोग्यतेति प्रश्नः ? प्रमितित्वे एकत्वान्वयस्य निर्बाधत्वात् दशमस्त्वमसीति महावाक्यात्प्रत्यक्षप्रमाणवादिनाम्मतनिरासाय तत्सौष्ठवात् । ननु तत्तदर्थान्विततत्तदर्थविषयकशाब्दबोधत्वावच्छिन्नम्प्रति तत्तत्पदसाकाङ्क्षतत्तत्पदत्वेन कारणता शाब्दस्य । वह्निना सिञ्चतीत्यादावयोग्यासाधारणत्वेन व्यभिचरितत्वात्प्रमितिकरणताऽनवच्छेदकत्वात्कथं शब्दत्वावच्छिन्नप्रमितिकरणत्वम् । किञ्च शब्दत्वन्न किमपि शाब्दम्प्रति जनकतावच्छेदकमतिप्रसक्तत्वादिति चेन्न ? सकलवेदतात्पर्यार्थविषयकविजातीयप्रमितित्वावच्छिन्नम्प्रति स्वतन्त्रपुरुषोच्चरितशब्दत्वावच्छिन्नप्रमितिकरणत्वन्त्वेकमेवेत्यदोषात् । वेदत्वञ्च स्वतन्त्रपुरुषोच्चरितशब्दत्वम् शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वंवेति ।

अत्र यावच्छब्दपदेन प्रमाणभूतशिष्टसम्प्रदायानुकूलश्रुत्यनुकूलस्मृत्यादिप्रतिपादितशब्द एव गृह्यते "इतिहासपुराणानि पञ्चमो वेद उच्यते" इतिश्रीमद्भागवतोक्तेः । एवं त्रयस्समुदिता हेतुरित्यत्र शक्तिनिपुणताऽभ्याससमुदाये एकमेव हेतुत्वम्विवक्षितमिति तत्र समुदायनिष्ठहेतुत्व एवैकत्वान्वय इति न समानवचनकत्वमिति तत्त्वम् ।

ननु शब्दत्वावच्छिन्नकारणतानिरूपितकार्यताया वह्निना सिञ्चति घटे पृथिवी इत्यादिभ्रमज्ञान "जलेन सिञ्चति भूतले घट" इत्यादिप्रमाज्ञानोभयसाधारण्येनोभयत्र वाक्ये प्रामाण्यमापद्येतेति चेन्न ? शाब्दत्वावच्छिन्नप्रमावृत्तित्वविशिष्टकार्यतानिरूपितकारणत्वमित्येव शाब्दप्रमाकरणमितिवाक्यार्थस्तथाच लोकप्रयोगा-

---

अनुभवो द्विविधः यथार्थो ऽयथार्थश्च । तत्र तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सत्यनुभवत्वं यथार्थानुभवस्य लक्षणम् । रजतत्ववन्निष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताशालिरजते रजतमिति ।

एवम्—तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वविशिष्टानुभवत्वमयथार्थानुभवत्वम् । शुक्तौ इदं रजतमित्युदाहरणम् ।

शाब्दप्रमाकरणत्वं च शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमेकमेवेति नायोग्यता। न च पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोधः ?

---

नहं वह्निना सिञ्चतीत्यादौ प्रमाणत्वव्यवहार एव न भवतीति न कश्चिद्विरोधः। न च "स्वर्गकामो यजेत, अहरहस्सन्ध्यामुपासीते"त्यादिप्रतिवाक्यम्प्रमाकरणत्वम्भिन्नभिन्नमिति कथङ्कारं यावच्छब्दनिष्ठमेकमेवेति मूलग्रन्थसङ्गतिरिति वाच्यम्? शाब्दत्वजातेरेकत्वेनाऽदोषात्। न चैवं स्वीकारे घटः कर्म्मत्वम् आनयनम् कृतिरित्यादावपि शाब्दत्वजातिसत्त्वेन प्रामाण्यमापतेदिति वाच्यम्? शाब्दत्वजातिसत्वेऽपि शाब्दत्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणत्वाऽभावात् घटनिष्ठकर्मतानिरूपकानयनत्वावच्छिन्नम्प्रति द्वितीयान्तघटपदसमभिव्याहृत "आनये"ति क्रियापदसमभिव्याहारः कारणम् इति कार्यकारणभावात्।

न च शब्दत्वेन कारणत्वस्वीकारे सकलशाब्दबुद्धित्वावच्छिन्नम्प्रति यावच्छब्दनिष्ठमेकमेव कारणत्वमिति ग्रन्थाशयवर्णने घटः कर्मत्वम् आनयनं कृतिरित्यादिवाक्याप्रामाण्यं सुशकमेवेति वाच्यम्? परम्परया प्रमाणत्वसत्त्वेऽपि सम्प्रदायविरुद्धत्वेन शाब्दबोधाऽजनकत्वात्।

शब्दत्वावच्छिन्नं यावच्छब्देति।

अस्यायमाशयः, कार्याऽव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यभावाऽप्रतियोगित्वम् न सकलशब्देषु चालनीन्यायेन प्रतियोगित्वादतस्तादृशप्रतियोगिताऽनवच्छेदकशब्दत्वरूपधर्मवत्त्वमेव शाब्दधियम्प्रति कारणत्वम्वाच्यन्तच्च शब्दत्वमेवेत्याशयेनाह शब्दत्वावच्छिन्नेति।

यदि च शब्दत्वमेव कारणत्वन्तदा कारणताच्छेदकत्वं शब्दत्वे न सम्भवति अभेदेऽवच्छेद्यावच्छेदकभावानङ्गीकारात्। तथापि तादृशप्रतियोगितानवच्छेदकत्वविशिष्टशब्दत्वस्य कारणत्वं स्वरूपतश्शब्दत्वस्य कारणतावच्छेदकत्वस्वीकारान्न कश्चन विरोधः।

इति परीक्षालेखप्रकारः।

---

अथ शास्त्रार्थप्रकारः।

ननु प्रमितिकरणत्वस्य प्रमाणपदार्थैकदेशत्वेन तत्र कथमेकत्वान्वयः "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने"ति नियमविरोधात्। नियमफलन्तु घटत्वस्य नित्यत्वादभेदेनान्वयतात्पर्येण नित्यो घट इति वाक्यवारणमेव, तत्र घटत्वस्य पदार्थैकदेशत्वेनाऽभेदेनान्वयविरोधात्। ननु पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति अन्वयितावच्छेदकरूपेणोपस्थितिः कारणम्, अन्वयोऽस्त्यस्मिन्निति अन्वयी तस्य भावोऽन्वयिता पदार्थस्य नीलादेः पदार्थेन घटादिनैवा-

न्वयः । घटादिपदार्थस्य अन्वयितावच्छेदकघटत्वरूपेणोपस्थितिसत्त्वात् स्वरूपत एव घटत्वोपस्थितिसत्त्वात् जात्यखण्डोपाध्यतिरिक्तपदार्थस्यैव किञ्चिद्धर्मपुरस्कारेण भानमिति न्यायेन घटत्वस्य जातित्वात् । समवायभिन्नत्वे सति स्वरूपसम्बन्धेन वृत्तित्वे सति भावत्वमखण्डोपाधित्वम् अनिर्वचनीयधर्मविशेषत्वं वा । तथा च स्वरूपत उपस्थिते घटत्वे कथन्नित्यत्वान्वय इति चेन्न ? नित्यो जातिमान् घट इत्यादौ जातित्वविशिष्टजातिमद्बोधकतच्छब्दघटिते नित्यस्स इत्यादौ चाजातिपदार्थे पदार्थैकदेशेऽन्वयवारणाय पदार्थः पदार्थेनेति व्युत्पत्तिस्वीकारात् । किञ्च पशुपदं लोमवल्लाङ्गूलावच्छिन्ने शक्तम् "दीर्घो लोमादिमान् पशुः" तत्र लोम्नः पदार्थैकदेशत्वेनानिष्टस्य दीर्घत्वान्वयस्यापत्त्या दीर्घः पशुरिति वाक्यापत्तेश्च ।

न च पूर्वोक्तरीत्या नित्यो घट इत्यादौ घटत्वस्य कथम्पदार्थैकदेशत्वम् जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रेण घटत्वन्तु पदार्थ एव घटः घटत्वम् समवायश्चेति पदार्थ इति कथमापत्तिरिति वाच्यम् ? पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानङ्कारणमेवञ्च नीलो घट इत्यादौ पदार्थान्तरनीलनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति आश्रयत्वसम्बन्धेत्याद्युक्तप्रकारेण शक्तिज्ञानं कारणमिति प्राप्तमाश्रयत्वसम्बन्धेत्याद्युक्तरूपशक्तिज्ञानञ्च घटस्यैवास्ति न घटत्वादेरिति नीलपदार्थस्य घट एवान्वयो न तु घटत्वे । तथा च नित्यो घट इत्यादौ आश्रयत्वसम्बन्धेत्याद्युक्तरूपशक्तिज्ञानं सर्वसम्मतं घटस्यैव न तु घटत्वस्येति घटे एव नित्यत्वान्वयो न तु घटत्वे घटस्य चानित्यत्वात्तत्र नित्यत्वान्वयबाधान्नित्यो घट इति न भवति । अयम्फलितार्थः, यस्मिन् घटादिपदार्थे बोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यता आश्रयत्वसम्बन्धेन वर्त्तते तस्मिन्नेव पदार्थान्तरस्यान्वयो भवति नान्यत्रेति सिद्धान्तस्तथा च घटत्वान्वयतात्पर्येणोक्तापत्तेस्तादवस्थ्यात् नित्यो जातिमान् घटः नित्यस्स इति फलान्तराणामुक्तत्वाच्च । न च घटे नित्यत्वान्वयबाधेन तादृशतात्पर्येण तथा प्रयोगाऽभावेऽपि घटत्वपदार्थस्यैव नित्यपदार्थेऽन्वयोऽस्तु घटत्वान्वयतात्पर्येणाऽपि नित्यो घट इति कुतो नेति वाच्यम् ? एकत्र विशेणतया अन्वितस्य पदार्थस्य पदार्थान्तरे विशेषणतयाऽन्वयोऽव्युत्पन्न इति व्युत्पत्तिमूलकयत्किञ्चित्पदार्थनिष्ठविशेष्यतानिरूपिताऽपदार्थसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति यत्किञ्चित्पदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकपदनिष्ठशक्तिनिष्ठबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानङ्कारणम् । तथा च घटत्वस्याऽपि नित्यपदार्थेऽन्वय इति नित्यो घट इति प्रयोगस्याऽप्रामाणिकत्वात् । आकाङ्क्षाभा-

---

जात्यखण्डोपाधीति–भिन्नभिन्नघटादेरेकरूपेणानुगमाय नियमोऽयमभिमतः । तथासति घटत्वेनैकरूपेण घटत्वावच्छिन्नानां समेषामेकधाऽनुगमः । जात्यखण्डोपाध्योश्च स्वतोऽनुगतत्वेन नायं क्लेशोऽपेक्ष्यते तत्र नियमे स्वीकार्ये चेयमेव युक्तिस्साधीयसी ।

स्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति आकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकपदनिष्ठशक्तिनिष्ठबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानस्य कारणत्वात्फलतीयम्व्युत्पत्तिः पदार्थः पदार्थेनान्वेतीति। कार्यकारणभावीयाकाङ्क्षाभास्यसम्बन्धावच्छिन्ननिवेशफलन्तु लोमवल्लाङ्गूलावच्छिन्ने शक्तम्पशुपदमिति शक्तिज्ञानाकारे पशुपदार्थतावच्छेदकतावच्छेदकलोमनिष्ठप्रकारतया लाङ्गूले विशेष्यतासम्बन्धेन यत्रेष्यते शाब्दबोधस्तत्र व्यभिचारस्स्यादत आकाङ्क्षाभास्यसम्बन्धावच्छिन्नत्वनिवेशः। लोमनिष्ठप्रकारतावच्छेदकसंयोगसम्बन्धस्य शक्तिभास्यत्वात्।

## तद्विशिष्टे शक्तिरिति विचारः।

ननु पदशक्तिरूपपदार्थत्वस्येत्यस्य यदि पदनिरूपिता शक्तिः पदशक्तिः पदनिनिष्ठा वा शक्तिः पदशक्तिः शक्तिश्चेश्वरेच्छारूपैवेति मन्यते तर्हि पदनिरूपितत्वपदनिष्ठत्वयोरीश्वरेच्छायाम्बाधस्तथा च पदशक्तिरित्यस्य पदसम्बन्धिनी शक्तिरित्येवार्थः। सम्बन्धश्च स्वजन्यबोधनिरूपितत्वाख्य एव। सा शक्तिश्च स्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वसम्बन्धेन व्यक्तौ वर्त्तते। स्वनिष्ठविशेष्यतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नप्रकारतावत्त्वसम्बन्धेन जातौ वर्त्तते। स्वनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकसंसर्गघटकावच्छेदकतावच्छेदकत्वसम्बन्धेन समवाये वर्त्तत इति तात्पर्यम्। तथा च तद्धर्मतद्वैशिष्ट्यतदाश्रयेषु शक्त्या विशेषणपदस्यैकवचनान्तत्वमिति। अत एव सन्मात्रविषयिण्या ईश्वरेच्छायास्समूहालम्बने घटपदाद् घटो बोद्धव्य इत्याकारे बोधादावपि सत्त्वेऽपि न व्यभिचार इत्यलम्।

## सम्पन्नो व्रीहिरिति।

एकत्वस्य पदार्थतावच्छेदकेऽन्वयाद् व्रीहित्वजात्यवच्छिन्नः क्षेत्रस्थः सर्वोऽपि व्रीहिस्सम्पन्नः परिपक्व इत्याशयः। पदार्थः पदार्थेनेतिनियमे पदार्थः पदजन्यप्रतीतिविशेष्यः पदार्थेन पदजन्यप्रतीतिविशेष्येणान्वेति। तथा च फलितार्थः, एकपदार्थविशेष्यकाऽपरपदार्थप्रकारकशाब्दबोधम्प्रति समानविशेष्यताप्रत्यासत्त्या पदजन्यपदार्थोपस्थितिर्हेतुः। क्वचित्तु वेदाः प्रमाणमित्यादौ शिष्टानुभवानुरोधेन विशेष्य-

---

अपौरुषेयत्वविशिष्टवाक्यत्वं वेदस्य लक्षणमितिमीमांसकाः। नित्यत्वञ्च वेदानाम्मतेऽत्र। तार्किकास्तु—उत्पन्नःको विनष्टःक इति बुद्धेरनित्यता।

तस्मादनित्या एवेति वर्णास्सर्वे मतं हि नः॥ का०

इत्यादि प्रतिपादयन्तः अनित्यवर्णसमुदायवाक्यसमुदायरूपस्य वेदस्यानित्यत्वमेवेत्यभिदधति। तत्र च "वेदा अनित्या वाक्यसमूहत्वाद् भारतादिवत्"इत्यनुमानेन "तस्मात्ते पानात् त्रयो वेदा अजायन्त" इतिश्रुतिमपि चरितार्थयन्ते। न च स्मर्यमाणकर्तृत्वस्य साध्यव्याप्यत्वे सति साधना-

तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वात्। यदि च स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन प्रकृत्यर्थ एवैकत्वान्वयः व्रीहित्वजातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतयान्वयितावच्छेदकरूपेणानुपस्थितेस्तत्रपदार्थान्तरस्यान्वयानुपपत्तेरिति मन्यते, तदा प्रकृतेऽपोदृश्येव गतिः।

---

तया एकत्वादिपदार्थप्रकारकबोधे विशेषणतया प्रमाणादिपदजन्यपदार्थोपस्थितिः कारणम्। विशेषणतया प्रमाणादिपदजन्यपदार्थोपस्थित्यव्यवहितोत्तरजायमानैकत्वादिपदार्थप्रकारकबोधे विशेष्यतया प्रमाणादिपदजन्योपस्थितिर्हेतुरितिरीत्या व्यभिचारादिवारणम्।

### तादृशव्युत्पत्तिसङ्कोचस्येति।

अर्थाद् व्युत्पत्तिभूतकार्यकारणभावघटककार्यतावच्छेदककोटिप्रविष्ट आकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतायां सुबर्थेतरत्वेन प्रातिपदिकार्थतरत्वेन वा सङ्कोचः। एवञ्च सुबर्थेतराकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति सुबर्थेतराकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकपदनिष्ठशक्तिनिष्ठबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानं कारणमिति सम्पन्नो व्रीहिरित्यादावेकत्वस्य सुबर्थत्वेन "पञ्चकम्प्रातिपदिकार्थ" इति मते प्रातिपदिकार्थत्वेन च क्षतिविरहात्। न च संख्येतरयत्किञ्चित्पदार्थनिष्ठाकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रतीति कार्यतावच्छेदकस्वरूपवर्णनं क्रियतां किं सुबर्थेतरत्वनिवेशेनेति वाच्यम्? "प्रकृत्यादिभ्य उपसंख्यानमि"ति व्याकरणवार्तिकम् प्रकृत्या चारुरित्युदाहरणम्, अभेदस्तृतीयार्थः चारुत्वनिष्ठविशेष्यतानिरूपितप्रकारताया नियमाक्रान्तत्वेन तृतीयार्थाऽभेदस्य संख्येतरत्वेन प्रकृत्या चारुरिति वाक्यस्याऽप्रामाण्यापत्तिस्सुबर्थेतरत्वेन सङ्कोचे तु अभेदस्य सुब्घटकतृतीयार्थत्वेन नियमाऽविषयत्वेनाक्षतेः। न च चैत्रस्य गुरुकुलमित्यादौ चैत्रपदार्थस्य निरूपितत्वेन गुरुत्वेऽन्वयः चैत्रनिरूपितं गुरुत्वमिति बोधात्। तथाच गुरुत्वस्याऽपि पदार्थैकदेशत्वेनोक्तव्युपत्तिविरोध इति वाच्यम्? सुबर्थेतरयत्किञ्चित्पदार्थनिष्ठाकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतानिरूपितपदार्थान्तरविषयकाकाऽङ्क्षाजनकज्ञाननिष्ठविषयितानिरूपकपदार्थेतरनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वविच्छिन्नम्प्रति तादृशविशेष्यताप्रयोजकपदनिष्ठशक्तिनिष्ठबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानं कारणम् इति। तथा च चैत्रपदार्थस्याकाङ्क्षाजनकज्ञाननिष्ठविषयितानिरूपकत्वेन तदितरत्वाऽभावेनाऽदोषात्। न च गुरुत्वपदार्थे गुरु

---

व्यापकत्वरूपस्योपाधेः सत्वेन नानुमानसम्भव इति वाच्यम्! महर्षिप्रवरगौतमादिभिः स्वीयशिष्यपरम्पराद्वारा सकर्तृकत्वस्य स्मरणेन साधनव्यापकत्वादुपाध्ययोगाव।

भेदान्वयतात्पर्येण गुरुरगुरुरिति अनिष्टस्य वाक्यस्य प्रामाण्यं स्यात् तथा अभेदसम्बन्धेन प्रमेयपदार्थस्य गुरुत्वान्वयतात्पर्येण प्रमेयो गुरुकुलमिति वाक्यस्य प्रामाण्यं च। पदार्थः पदार्थेनेति नियमस्य तु न प्रवृत्तिः आकाङ्क्षाजनकज्ञाननिष्ठविषयितानिरूपकपदार्थसत्त्वात्। एवम्पशुरपशुरित्यादिवाक्यस्याऽपि प्रामाण्यं स्यादिति वाच्यम्? अपदार्थसम्बन्धावच्छिन्नप्रकारताविशिष्टविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति पूर्वोक्तविशेष्यतासम्बन्धेन शक्तिज्ञानं कारणमिति, विशेष्यतायाम्प्रकारतावैशिष्ट्यञ्च स्वनिष्ठनिरूपकतानिरूपितनिरूप्यतावत्त्व स्वाश्रयनिरूपितनिरूपितत्वाऽभाववद्वृत्तित्वोभयसम्बन्धेन। गुरुरगुरुरित्यादौ गुरुभेदनिष्ठप्रकारतानिरूपितगुरुत्वनिष्ठविशेष्यतायास्सत्त्वात् प्रकारताश्रयगुरुभेदनिरूपितत्वाऽभावगुरुत्ववद्वृत्तित्वेन च न नियमप्रवृत्तिः। प्रमेयो गुरुकुलमित्यादौ च प्रमेयनिष्ठप्रकारतानिरूपितत्वेन प्रकारताश्रयः प्रमेयः कश्चित् तत्प्रमेयनिरूपितनिरूपितत्वाभाववद्वृत्तित्वेन च क्षतिविरहः। चैत्रस्य गुरुकुलमित्यत्राऽपि प्रथमसम्बन्धसत्त्वेपि अर्थात् गुरुत्वनिष्ठविशेष्यतायाश्चैत्रनिष्ठा या प्रकारता तन्निरूपितत्वेऽपि द्वितीयसम्बन्धो न गतः। प्रकारताश्रयश्चैत्रः तन्निरूपितं गुरुत्वनिष्ठ विशेष्यत्वम् तन्निरूपितत्ववत्कुलादिवृत्तित्वेन नियमाऽप्रवृत्त्या न दोषः।

वस्तुतस्तु निरूपितत्वेतराकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेतिनिवेशः। गुरुरगुरुः प्रमेयो गुरुकुलम् इत्यादौ तु नियमप्रवृत्तिः। गुरुभेदनिष्ठायाः प्रकारतायाः प्रमेयनिष्ठप्रकारतायाश्च इतरसम्बन्धावच्छिन्नत्वेन नेमौ प्रयोगौ। चैत्रस्य गुरुकुलमित्यत्र तु न "पदार्थः पदार्थेने"तिनियमप्रवृत्तिः? चैत्रनिष्ठप्रकारताया निरूपितत्वसम्बन्धावच्छिन्नत्वात् इति। किञ्च नित्यसाकाङ्क्षपदार्थातिरिक्तत्वनिवेशेनाऽपि नापत्तिः। एवञ्चेत्थं कार्यकारणभावः।

नित्यसाकाङ्क्षत्वञ्च स्वविशिष्टत्वम् वैशिष्ट्यञ्च स्वनिरूपकविषयकजिज्ञासाव्याप्यज्ञानविषयत्वस्वतादात्म्यैतदुभयसम्बन्धेन।

अथ मूलानुसन्धानपूर्वकपरीक्षोपयोगिसरलप्रकारः।

यत्किञ्चित्सम्बन्धावच्छिन्नसंख्येतरपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तादृशप्रकारतानिरूपितविशेष्यतासम्बन्धेनोपस्थितिः कारणम् इति कार्यकारणभावमूलिका "पदार्थः पदार्थेने"तिव्युत्पत्तिः। नच नित्यो जातिमान् घट इत्यादौ जातिमद्घटकजातौ नित्यत्वान्वयतात्पर्येण नित्यो जातिमान्

---

नित्यत्वञ्च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्।

अत्रायमाशयः यत्र २ कार्यत्वन्तत्र २ प्रागभावप्रतियोगित्वमवश्यं वर्त्तते अत एव 'कार्यम्प्रागभावप्रतियोगि" इति कार्यलक्षणम्। नित्यानाञ्च परमाण्वादीनाङ्कदाचिदपि प्रागभावप्रतियोगित्वन्नास्तीति न कार्यत्वम्। यस्य च कदाचिद् ध्वंसस्सम्भवति स एव ध्वंसप्रतियोगित्वमनुगच्छति नचैवमाकाशादीनामिति भवति ध्वंसाप्रतियोगित्वमिति।

घट इतिप्रयोगस्स्यादेतन्नियमस्य तु न प्राप्तिर्विशेष्यतासम्बन्धेन जातिपदार्थोपस्थित्यभावादिति वाच्यम् ? मुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणमितिनिवेशः । मुख्यविशेष्यत्वञ्च प्रकारत्वानवच्छिन्नविशेष्यत्वम् प्रकारत्वाभिन्नविशेष्यत्वं वा प्रकारत्वासामानाधिकरण्यं वा । जातिमान् घट इत्यादौ तु जातिमन्निष्ठविशेष्यतानिरूपितप्रकारत्वसामानाधिकरण्यमेवास्ति जातिपदार्थस्येति न तादृशप्रयोग इत्याशयात् ।

नच नित्यं घटत्वमितिप्रयोगे नित्यपदार्थस्य घटत्वेऽन्वयो न स्यात् नीलो घट इत्यादौ घटनिष्ठविशेष्यतानिरूपितप्रकारता घटत्वे समायाता तथाच तत्रत्यघटत्वात्रत्यघटत्वयोरैक्येनात्रत्यं घटत्वम्प्रकारत्वसमानाधिकरणमेवेति वाच्यम् ? उपस्थितीयविशेष्यताविशिष्टा या मुख्यविशेष्यता तेन सम्बन्धेनोपस्थितिः कारणम् उपस्थितीयविशेष्यतावैशिष्ट्यञ्च स्वनिरूपितत्वस्वनिरूपितप्रकारत्वाऽसामानाधिकरण्यमित्युभयसम्बन्धेन । तथाच अन्यनिरूपितप्रकारत्वसामानाधिकरण्यसत्त्वेऽपि स्वनिरूपितप्रकारत्वसामानाधिकरण्यन्नास्तीति तादृशप्रयोगसौष्ठवात् ।

इति परीक्षालेखप्रकारः ।

अथ शास्त्रार्थप्रकारः ।

न च चैत्रस्य गुरुकुलमित्यादौ यत्किञ्चित्सम्बन्धावच्छिन्नसंख्येतरपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेत्यादि कार्यतावच्छेदकदलङ्गतम् परन्तु उपस्थितीयविशेष्यतेत्यादि कारणदलन्न गतमिति हेतोः कार्यतावच्छेदकानाक्रान्तत्वेन हेतुर्व्यभिचरित इति वाच्यम ? यत्किञ्चित्सम्बन्धावच्छिन्नसंख्येतरपदार्थान्तरनिष्ठप्रकारतानिरूपितनित्यसाकाङ्क्षवद्वृत्तिमुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणम् । गुरुत्वस्य नित्यसाकाङ्क्षवद्वृत्तित्वेन कार्यदलमपि न गतमिति भागाऽसिद्धिदोषाऽभावात् । नन्वेवन्निवेशेऽपि गुरुरगुरुः पशुरपशुरिति स्यात् गुरुभिन्नाऽभिन्नं यद्गुरुत्वमिति बोधात् गुरुभिन्नत्वगुरुनिरूपितत्वेन तस्य नित्यसाकाङ्क्षवद्वृत्तित्वेनैतन्नियमाऽप्रवृत्तेरिति चेन्न ? यत्किञ्चित्सम्बन्धावच्छिन्नसंख्येतरपदार्थान्तरनिष्ठस्वनिरूपितत्वस्वाश्रयनिरूपितत्वाऽसामानाधिकरण्यैतदुभयसम्बन्धेन । प्रकारताविशिष्टविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति स्वनिरूपितत्वस्वनिरूपितप्रकारत्वाऽसामानाधिकरण्यैतदुभयसम्बन्धेन । उपस्थितीयविशेष्यताविशिष्टमुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणम् । तथाच स्वम् प्रकारता तदाश्रयो गुरुभिन्नत्वन्तन्निरूपितत्वासामानाधिकरण्यमस्त्येवेति नियमाक्रान्तत्वेन तादृशप्रयोगस्य दुर्लभत्वात् ।

यदि तु चैत्रस्य गुरुकुलमित्यादिदोषवारणाय अभेदसम्बन्धावच्छिन्नसंख्येतरपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेतिकार्यदले निवेश्य चैत्रस्येत्यत्र निरूपितत्वसम्बन्धावच्छिन्नेति तत्र न नियमप्रवृत्तिरिति कथ्यते तदपि न ? दण्डेन न घट इत्यादौ दण्डप्रयोज्यत्वप्रतियोगिको योऽभावस्तस्य स्वरूपसम्बन्धेन घटत्वान्वयतात्पर्ये न दण्डेन न घट इतिप्रयोगापत्तेरभेदसम्बन्धनिवेशस्य दोषप्रवर्त्तकत्त्वात् ।

वस्तुतस्तु पूर्वोक्तद्वितीयप्रकारेऽपि दोषाः । पशुपदार्थीयलोमनिष्ठप्रकारतावच्छेदक-संयोगसम्बन्धस्य शक्तिभास्यत्वेन तद्ग्रहणाभावाय आकाङ्क्षाभास्यसम्बन्धावच्छिन्ना-ऽपदार्थसम्बन्धावच्छिन्न इत्यादिनिवेशस्यावश्यकत्वेन पूर्वोक्तप्रकार एव ज्यायानिति । कल्पकास्तु

दण्डेन न घट इत्यादौ विलक्षणा गतिस्तत्र स्वरूपसम्बन्धेनैव नञर्थाऽभावेऽन्वयस्तत्र का गतिरिति विचिन्त्यताम् ।

यथा सम्पन्नो व्रीहिरितिवाक्यस्य नह्येकव्रीहिकणसम्पन्नत्वे तात्पर्य्यमपि त्वनेकव्रीहिसम्पन्नतवेऽस्ति । अत्रैकवचनदर्शनेनैकत्वस्यानेकव्रीहिष्वसम्भवाद् व्रीहित्वजातावेवान्वयोऽस्ति तथा वेदाः प्रमाणमित्यत्राप्येकत्वपदार्थस्य पदार्थैकदेशेन प्रमितिकरणत्वेन साकमन्वये तात्पर्यम् ।

ननु यस्य कुत्राऽपि गतिर्नास्ति तस्य वाराणस्याङ्गतिरितिन्यायेन गत्यभावे संख्येतरत्वेनेत्याद्युक्तरीत्या सङ्कोचः परन्तु न व्रीहित्वजातावेकत्वान्वयो युक्ततरः । पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति अन्वयितावच्छेदकरूपेणोपस्थितिः कारणम् । व्रीहित्वं हि स्वरूपत एव व्रीहिपदस्य शक्यतावच्छेदकमस्ति व्रीहिपदेन व्रीहित्वस्य स्वरूपत एवोपस्थितिर्भवति नत्वन्वयितावच्छेदकेन व्रीहित्वत्वेन रूपेणेति न व्रीहित्वजातावेकत्वान्वयः किन्तु स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन प्रकृत्यर्थव्रीहिष्वेवान्वयस्तथाच पदार्थः पदार्थेनेतिनियमेनैव सङ्कोचस्तथाहि, स्वमेकत्वन्तदाश्रयीभूतं यत्प्रकृत्यर्थतावच्छेदकम्व्रीहित्वन्तद्वत्त्वंव्रीहित्ववत्त्वं सम्बन्धरूपं व्रीहिष्वस्त्येव । एवं वेदाः प्रमाणमित्यादावपि स्वमेकत्वन्तदाश्रयीभूतं यत्प्रकृत्यर्थतावच्छेदकम्प्रमितिकरणत्वन्तद्वत्त्वसम्बन्धेन वेदेषु एवैकत्वान्वयः, प्रमितिकरणतावत्त्वन्त्वस्त्येव वेदेष्विति न पदार्थः पदार्थेनेत्यत्र सङ्कोचादिप्रपञ्च इति यदीत्यारम्भ ग्रन्थाशयः ।

नच व्रीहिपदस्य व्रीहित्वत्वविशिष्टव्रीहित्वावच्छिन्ने लक्षणाङ्कृत्वा व्रीहित्वत्वावच्छिन्नव्रीहित्वे चैकत्वान्वयोपपत्तौ नान्वयितावच्छेदकत्वेनानुपस्थितिरिति वाच्यम् ! लक्षणाया आश्रयणे प्रमाणाऽभावात् इत्याशयेनैवाह यदि स्वाश्रयेति । ननु अन्वयितावच्छेदकरूपेणोपस्थितिः कुतो नेति प्रश्नः । "जात्यखण्डोपाध्यतिरिक्तपदार्थस्यैव किञ्चिद्धर्मपुरस्कारेण भानमि"ति नियमात् आकाङ्क्षाभास्यसम्बन्धावच्छिन्नयत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति यत्किञ्चिद्धर्मावच्छिन्नविशेष्यतासम्बन्धेनोपस्थितिः ( अन्वयितावच्छेदकरूपेणेत्यर्थः ) कारणमिति नियमीयकार्यकारणभावाच्च । ननु अन्वयितावच्छेदकरूपेणेति मूलङ्कथं सम्पन्नो व्रीहिरित्यत्र अन्वयोऽस्त्यस्मिन्नित्यन्वयि तस्य भावोऽन्वयिता एकत्वनिष्ठप्रकारतानिरूपितविशेष्यता व्रीहित्वनिष्ठा तस्या अवच्छेदकञ्चाप्रसिद्धम् । जात्यखण्डोपाध्यतिरिक्तस्येतिन्यायेन व्रीहित्वत्वस्यानुपस्थितत्वात्तथाच कथं ग्रन्थसङ्गतिरिति चेन्न ! अन्वयि-

तावच्छेदकतया सम्भाव्यमानेन रूपेणेतितदर्थवर्णनादप्रसिद्ध्यभावात् । नच पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति अन्वयितावच्छेदकरूपेणोपस्थितिः कारणमित्यर्थकाकाङ्क्षाभास्यसम्बन्धावच्छिन्नेतिपूर्वोक्तनियमेनैव निर्वाहे पदार्थः पदार्थेनान्वेतीति नियमो व्यर्थ इति वाच्यम् ? पशुपदं लोमवल्लाङ्गूलावच्छिन्ने शक्तन्तत्र पदेन पदार्थतावच्छेदकं पशुत्वन्तदवच्छेदकं लोमत्वं लोमपदार्थोपस्थितौ तत्रैव लोमपदार्थे पशुभेदतात्पर्येण पशुरपशुरितिप्रयोगवारणाय पदार्थः पदार्थेत्यस्यावश्यकत्वात् । नच पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रत्यन्वयितावच्छेदकरूपेणोपस्थितिः कारणमित्यर्थकाकाङ्क्षाभास्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति यत्किञ्चिद्धर्मावच्छिन्नविशेष्यतासम्बन्धेनोपस्थितिः कारणमितिनियमः किमर्थ इति वाच्यम् ? विशेष्यविशेषणभावरहितयोः खण्डशक्त्या उपस्थितयोर्विश्रृङ्खलभावेनेत्याशयः । घटघटत्वयोः परस्परनिरपेक्षयोस्तत्र अभेदसम्बन्धेन नित्यपदार्थस्य घटत्वान्वयतात्पर्येण नित्यो घट इतिवाक्यप्रामाण्यापत्तिभियाऽस्याप्यावश्यकत्वात् । निरवच्छिन्नविशेष्यताकेतरपदार्थप्रकारकशाब्दबोधो न भवतीति फलितार्थः ।

इति परीक्षालेखप्रकारः ।

---

## अथ शास्त्रार्थप्रकारः ।

वह्निमान् पर्वत इत्याकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति वह्न्यभाववद्द्रव्यमित्यादिबुद्धेः प्रतिबन्धकत्ववारणाय समानधर्मावच्छिन्नविशेष्यताकनिश्चयस्यैवावच्छेदकनिष्ठप्रत्यासत्त्यैव वा विरोधिज्ञानप्रतिबन्धकत्वन्तथा च प्रकृते सम्पन्नो व्रीहिरित्यत्र जात्यखण्डोपाध्यतिरिक्तपदार्थस्यैव किञ्चिद्धर्मप्रकारेण भानमितिनियमेन व्रीहित्वस्य जातित्वेन स्वरूपत एव व्रीहित्वेन रूपेणोपस्थितिविषयत्वात् एकत्ववद्व्रीहित्वमित्याकारकं ज्ञानञ्च कस्यचिदपि निश्चयस्य न प्रतिबन्धकन्नापि प्रतिबध्यं न कस्यचिद्ज्ञानस्य प्रवर्त्तकन्नापि कस्यचिद्ज्ञानस्य निवर्त्तकन्तथाचान्वयितावच्छेदकरूपेणोपस्थितेरावश्यकत्वात्तस्याश्च व्रीहित्वस्य जातित्वेन बाधितत्वादिति तात्पर्यम् । ननु कीदृश आकारः प्रतिबध्यप्रतिबन्धकयोर्यो न संघटत इति प्रश्नः ? तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेनेन्द्रियसन्निकर्षाऽजन्यदोषविशेषाजन्यज्ञानत्वावच्छिन्नम्प्रति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेन अनाहार्य्याऽप्रामाण्यज्ञानाऽनास्कन्दितं ज्ञानमेव प्रतिबन्धकमिति प्रकारेण अवच्छेदकनिष्ठप्रत्यासत्त्याऽर्थात्सम्बन्धेन प्रतिबध्यप्रतिबन्धकभावस्सार्वजनीनः । कार्यकारणभावे घटप्रत्यक्षस्य घटाऽभावानुमित्या प्रतिबन्धकत्ववारणाय प्रतिबध्यतावच्छेदककोटौ इन्द्रियसन्निकर्षाऽजन्यत्वनिवेशः । पित्तरोगेण पीतः शंख इतिज्ञानस्य पीतत्वाऽभाववान् शंख इति ज्ञानेन प्रतिबन्धकत्ववारणाय दोषविशेषाऽजन्यत्वनिवेशः । घटवद्भूतलमितिशुद्धयथार्थज्ञानस्य घटाऽभाववद्भूतल-

मितिज्ञानेन प्रतिबन्धकत्वसिद्धये प्रतिबन्धकतावच्छेदककोटावनाहार्यत्वनिवेशः। घटवद्भूतलमितिशुद्धज्ञानस्याऽप्रामाण्यज्ञानानास्कन्दितस्य घटाऽभाववद्भूतलमिति ज्ञानेन प्रतिबन्धकत्वसिद्धयेऽप्रामाण्यज्ञानानास्कन्दितत्वनिवेशः। संयोगेन घटवद्भूतलमितिज्ञानस्य समवायेन घटाऽभाववद्भूतलमितिज्ञानेन प्रतिबन्धकत्ववारणाय प्रतिबध्यप्रतिबन्धकोभयकोटौ तत्तत्सम्बन्धावच्छिन्नत्वनिवेशः। द्रव्यवद्भूतलमितिज्ञानस्य घटाऽभाववद्भूतलमितिनिश्चयेन प्रतिबन्धकत्ववारणाय प्रतिबध्यप्रतिबन्धकोभयकोटौ तत्तद्धर्मावच्छिन्नत्वनिवेशः।

अत्रैव प्रसङ्गात् प्रतिबध्यप्रतिबन्धकभावनिर्णयः।

तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमित्येकः प्रकारः १ तद्वत्ताबुद्धिम्प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमितिद्वितीयः प्रकारः२तद्वत्ताबुद्धिम्प्रति तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयस्य प्रतिबन्धकत्वमिति तृतीयः प्रकारः३तद्वत्ताबुद्धिम्प्रति तदसमानाधिकरणधर्मवत्तानिश्चयस्य प्रतिबन्धकत्वमितिचतुर्थःप्रकारः४तद्वत्ताबुद्धिम्प्रति तद्व्यापकतावच्छेदकतया गृहीतधर्मावच्छिन्नाऽभाववत्तानिश्चयस्य प्रतिबन्धकत्वमितिपञ्चमः प्रकारः५। ह्रदो वह्निमान् ह्रदो न वह्निमान्१ ह्रदो वह्निमान् ह्रदो वह्न्यभावव्याप्यवान्२ जलवान् वह्न्यभाववान् ह्रद इति निश्चयविशिष्टस्य जलवान् ह्रद इतिज्ञानम्प्रति प्रतिबन्धकत्वमिति३। वह्न्यसमानाधिकरणजलवान् ह्रदः४ ह्रदो धूमवानितिबुद्धिम्प्रति धूमव्यापकतावच्छेदकतया गृहीतं यद् वह्नित्वन्तादृशवह्नित्वावच्छिन्नाऽभाववान् ह्रद इति निश्चयस्य प्रतिबन्धकत्वमिति५क्रमेणोदाहरणानि। कार्यत्वावच्छिन्नम्प्रति तु कामातुराणां कामिनीजिज्ञासा प्रतिबन्धिका। कार्यविशेषम्प्रति तु क्वचित् कस्यचित्पदार्थस्य प्रतिबन्धकत्वम्। यथा दाहत्वावच्छिन्नम्प्रति मणेः प्रतिबन्धकत्वम्। विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम्। समानविषयकानुमितित्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम् इत्यादि। प्रतिबन्धकत्वञ्च तद्धर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयधर्मवत्त्वम्। तथा च सम्पन्नो व्रीहिरित्यत्र प्रकृते एकत्ववद् व्रीहित्वमितिनिश्चयस्य न प्रतिबध्यत्वन्नापि प्रतिबन्धकत्वं कस्यचिदपि ज्ञानस्य। व्रीहित्वत्वेनानुपस्थितत्वात्पूर्वोक्ततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नेति प्रतिबध्यप्रतिबन्धककार्यकारणभावमूलकनियमाऽप्रवृत्त्या वेदाः प्रमाणमित्यादौ स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेनैव स्वाश्रयप्रमितिकरणत्ववत्त्वसम्बन्धेन प्रमाण एवैकत्वसंख्यान्वय इति। एकत्वाश्रयप्रमाणतावच्छेदकवत्त्वसम्बन्धेनैकत्वविशिष्टं यत्प्रमाणन्तदभिन्ना वेदा इत्याशयः। तथा च पदार्थः पदार्थेनेतिन्याये सुबर्थेतरत्वादिरीत्या न सङ्कोच उक्तप्रकारान्तरेणाभीष्टसिद्धेरित्यलम्।

अत्र किञ्चित् घटवद्भूतलम् वृक्षात्पर्णम्पततीत्यादौ संयोगपदार्थविभागपदार्थयोर्यद्यपि

यत्तु संपन्नो व्रीहिरित्यादावेकवचनोपस्थितानि नानैकत्वानि प्रत्येकं नानाव्रीहिष्वन्वीयन्ते इत्युक्त्यैव सामञ्जस्ये जातावेकत्वभानोपगमो निरर्थक इति ।

तदसत् । यतः स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपसजातीयद्वितीयरहितत्वमेकवचनार्थः न त्वेकत्वमात्रम् । तस्य वस्तुमात्रसाधारण्येनार्थत एव लाभात्, अनुपयोगाच्च । अत एव पशुना यजेत इत्यादौ पशुनिष्ठतादृशैकत्वस्य विवक्षितत्वाद् अनेकपशुकरणकयागान्नादृष्टसिद्धिः ।

---

सापेक्षत्वम्परन्तु संयोगाऽभावो विभागः विभागाऽभावस्संयोग इत्यत्र विनिगमनावैकल्येनोभयोः पदार्थयोरखण्डोपाधिवदतिरिक्तत्वमेवेति सूक्ष्मतत्त्ववेत्तारः ।

यत्तु सम्पन्नो व्रीहिरिति–ननु सम्पन्नो व्रीहिरित्यत्रैकत्वसंख्यया न व्रीहित्वजातावन्वयो येन "पदार्थः पदार्थेनान्वेती"तिन्याये सङ्कोचादिप्रपञ्चः । व्रीहिरित्यत्र सुविभक्त्या एकस्यैवैकत्वस्योपस्थितिरपि न येनानेकव्रीहिष्वेकैकत्वस्य बाधः किन्तु एकवचनसुविभक्त्या अनेकैकत्वोपस्थितिरनेकेषामेकत्वानामनेकव्रीहिष्वन्वये न कोऽपि विरोध इत्याशयेनाह यत्त्विति । पदार्थतावच्छेदके स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन पदार्थे वाऽन्वय इतिपक्षद्वयेऽपि जात्येकत्वभानोपगमो निरर्थक इत्याशयः । निरस्यति–तदसदिति । सम्पन्नो व्रीहिरित्यत्रैकवचनसोर्नैकत्वसंख्यारूपोऽर्थः, तस्य वस्तुमात्रसाधारण्येन अर्थात्केवलान्वयित्वेनार्थत एव लाभात् । संख्यारूपैकत्वस्य नोपयोगोऽर्थात् व्रीहिविशिष्टक्षेत्रसमीपवर्तिव्रीहिसजातीयोत्पान्नान्तरसम्पन्नत्वव्यावृत्तिरेव सम्पन्नो व्रीहिरिति वक्तुस्तात्पर्यविषयीभूता सा एकत्वसंख्यान्वयिव्रीहिसम्पन्नत्वेऽपि व्रीहिभिन्नान्नान्तरस्यापि तत्समीपवर्त्तिक्षेत्रोत्पन्नस्य सम्पन्नत्वे न कोऽपि बाधकः, ग्रन्थोक्तसजातीयद्वितीयराहित्यरूपैकत्वार्थे स्वीकृते तु तादृशैकत्वान्वयिव्रीहीणां सत्त्वेन सम्पन्नत्वे व्रीहिसजातीयोत्पान्नान्तरसम्पन्नत्वव्यावृत्तिस्सुतरां लभ्यते । तथाच नैकत्वमेकवचनार्थोऽपि तु स्वसजातीयनिष्ठभेदप्रतियोगिताऽनवच्छेदकैकत्वरूपं यत्स्वसजातीयद्वितीयरहितत्वन्तदेवैकवचनार्थः । संघटनप्रकारश्चेत्थम्, अत्र घट इत्यादौ भूतले एकघटसत्त्वदशायां स्वं प्रकृत्यर्थं एतद्देशवृत्तिर्घटस्तत्सजातीयस्स एवान्यस्याऽभावात् तन्निष्ठ एकपटादिभेदस्तत्प्रतियोगितावच्छेदकं तन्निष्ठैकत्वमर्थात्पटादिनिष्ठैकत्वम् । अनवच्छेदकञ्च तद्घटनिष्ठमेकत्वन्तदेव सजातीयद्वितीयरहितत्वं घटपदोत्तरमेकवचनार्थः । एतद्देशे बहुघटसत्त्वदशायान्तु स्वम्प्रकृत्यर्थं एतद्देशवृत्तिर्घटस्तत्सजातीयो द्वितीयोऽपि घटस्तन्निष्ठैकत्ववदेतद्घटभेदस्तत्प्रतियोगितावच्छेदकमेवैतद्घटनिष्ठमेकत्वमित्यनेकघटतात्पर्येण न अत्र घट इति प्रयोगः ।

साजात्यं स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकत्वरूपेण । अतोऽत्र घटोऽस्तीत्यादौ घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वप्रसिद्धावपि न क्षतिः । एतद्देशविद्यमानघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैव तत्र बोधादिति । तस्य च प्रसिद्धत्वात् ।

---

तथाच प्रकृते सम्पन्नो व्रीहिरित्यादौ यद्यन्नान्तरं सम्पन्नं स्यात्तदा सम्पन्नत्वेन व्रीहिसजातीयान्नान्तरस्य सत्त्वात् तत्र वर्त्तते यो व्रीहिभेदस्तत्प्रतियोगितावच्छेदकं व्रीहित्वगतैकत्वं स्यात् । यदि च अन्नान्तरन्न सम्पन्नन्तदा सम्पन्नत्वेन रूपेण व्रीहिसजातीयस्यैवाऽभावात्स्वसजातीयनिष्ठभेदप्रतियोगिताऽनवच्छेदकमेव जातं व्रीहित्वगतैकत्वन्तदेव सजातीयद्वितीयरहितत्वम् । एवं विधैकवचनार्थस्वीकारादेव पशुना यजेतेत्यादावेकपशुकरणकयागादेवाऽदृष्टसिद्धिस्तथाहि, अत्र वाक्ये स्वपशुस्तत्सजातीयो द्वितीयः पशुर्यदि यागे स्यात्तदा द्वितीयपशुनिष्ठस्य एतत्पशुनिष्ठमेकत्वं भेदप्रतियोगितावच्छेदकं स्यात्परन्तु यागे द्वितीयपशोरभावे तु एतत्पशुनिष्ठभेदस्य प्रतियोगिताऽनवच्छेदकमेव जायत इति तदेव सजातीयद्वितीयरहितत्वमेवञ्चैकपशुकरणकयागाददृष्टसिद्धिरिति तात्पर्यम् ।

इति परीक्षालेखप्रकारः ।

---

अथ शास्त्रार्थप्रकारः ।

ननु यागस्थले कार्यान्तरार्थबद्धपशौ तन्निष्ठो य एतत्पशुभेदस्तादृशभेदप्रतियोगितावच्छेदकमेवैतत्पशुनिष्ठमेकत्वन्तस्यापि पशोरेतत्पशुसजातीयत्वात् । किञ्च यागीयघृतादिसामग्रीणामपि यागसम्बन्धित्वेनैव धर्मेणैतत्पशुसाजात्याद् यागसम्बन्धिघृतादिष्वेतत्पशुभेदस्तादृशभेदप्रतियोगितावच्छेदकमप्येतत्पशुनिष्ठमेकत्वं स्यादेव । तथाच तत्पशुनिष्ठैकत्वस्य कथं स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वमिति प्राशङ्क्य परिष्करोति साजात्यञ्चेति । यजेत स्वर्गकाम इत्यत्र स्वपदेन वर्त्तमानलिङ्विभक्तिस्तत्समभिव्याहृतः पदार्थो यागपदार्थस्तत्संसर्गित्वविशिष्टं ( संसर्गित्ववैशिष्ट्यञ्च प्रकृत्यर्थतावच्छेदके सामानाधिकरण्यसम्बन्धेन बोध्यम् ) यागसम्बन्धित्वसमानाधिकरणं यत्प्रकृत्यर्थतावच्छेदकं पशुत्वं तद्वत्त्वेनोभयरूपेणैव साजात्यम् । कार्यान्तरार्थबद्धपशौ पशुत्वस्य सत्त्वेऽपि यागसंसर्गित्वाऽभावः । घृतादीनां यागसंसर्गित्वेऽपि प्रकृत्यर्थतावच्छेदकपशुत्वाऽभाव इतिद्वाभ्यां विशेषणाभ्यामुभयोर्व्यावृत्तिरिति न साजात्यव्यभिचारः । एतत्साजात्यपरिष्कारादेव अत्र घटोऽस्तीत्यादौ घटानामनेकत्वेन परस्परभेदा नीलघटादिषु पीतघटादिभेदस्य तद्गतैकत्वस्य भेदादयं घटस्तद्घटनिष्ठैकत्ववान्नेतिप्रतीतिदर्शनेन एकत्ववद्घटनिष्ठा या भेदप्रतियोगिता तदवच्छेदकमेवैकत्ववद्घटनिष्ठमेकत्वञ्चातन्नानवच्छेदकमिति भेदप्रतियोगिताऽनवच्छेदकैकत्वाऽप्रसिद्धेरप्यभाव । तथाहि अत्र घटोऽस्तीत्यत्र स्वपदेनैकवचनान्तं गृह्यते समभिव्याहृतत्वञ्च तत्तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वे सति तत्तद्भिन्नपदत्वम् । तत्समभिव्याहृतपदमत्रेति-

**एतद्देशे बहुघटसत्त्वदशायां ताद्दशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीयः ।**

---

पदन्तदर्थं एतद्देशवृत्तित्वन्तत्संसर्गित्वन्तत्संसर्ग एव स च संसर्ग एतद्देशवृत्तित्वीयस्वरूपसम्बन्धरूपस्तद्विशिष्टं यत्प्रकृत्यर्थतावच्छेदकं घटत्वन्तेन रूपेण सजातीयस्स एव घटस्तन्निष्ठो य एकपटभेदस्तत्प्रतियोगितावच्छेदकं तत्पटनिष्ठैकत्वन्तदनवच्छेदकं घटनिष्ठमेकत्वमितिरीत्यैतद्देशवृत्तित्वविशिष्टघटसजातीयेत्यस्य एतद्देशविद्यमानत्वसमानाधिकरणघटत्ववत्त्वेन सजातीयाऽभावात् एतद्देशविद्यमानघटगतैकत्वस्य प्रसिद्धत्वात् ।

जात्येकत्वादेवेति —

सम्पन्नो व्रीहिरित्यत्रेव जातावेकत्वान्वयः । स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वेन वा । स्वमेकत्वन्तदाश्रयीभूतं यत्प्रकृत्यर्थतावच्छेदकं घटत्वं तद्वत्त्वं सर्वेषु घटेष्विति तेन सम्बन्धेनानेकघटेष्वप्येकत्वसंख्यान्वये न क्षतिरित्यभिप्रायः ।

अत्र तु शब्दप्रयोगाद्बहुघटसत्त्वदशायामत्र घटोऽस्तीति न भवति । पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति अन्वयितावच्छेदकरूपेणोपस्थितिः कारणमितिनियमात् घटत्वस्य जातित्वेन स्वरूपत एवोपस्थितिसत्त्वात् । तथा च स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेतिप्रकार एव गरीयान् । किञ्च जातावेकत्वान्वयेनैव समर्थनेऽभिलाषश्चेत्तर्हि प्रकृत्यर्थतावच्छेदकतावच्छेदकसम्बन्धेन स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकमात्रावृत्तिधर्मेण साजात्यग्रहणे ग्रन्थकर्तुस्तात्पर्यं वर्णनीयम् । एवञ्च घटपदसमभिव्याहृतं पदमत्रेति तदर्थश्चैतद्देशवृत्तित्वम् तस्य स्वरूपसम्बन्धेन संसर्गी घटस्तत्र घटप्रकृत्यर्थतावच्छेदकतावच्छेदकसम्बन्धस्समवायस्तेन वृत्तिर्यस्य ताद्दशघटत्वं तत्त्वम् । ताद्दशवृत्तित्वरूपं घटत्वेऽस्त्येव । किञ्च प्रकृत्यर्थतावच्छेदकमात्रवृत्तिधर्मो घटत्वत्वन्तच्च घटत्वे सामानाधिकरण्यसम्बन्धेन समभिव्याहृतपदार्थसंसर्गित्वविशिष्टो यः प्रकृत्यर्थतावच्छेदकमात्रवृत्तिधर्मो घटत्वत्वन्तेनैव धर्मेण घटत्वसजातीयं घटत्वमेवास्ति तन्निष्ठो भेद एकत्ववत् पटत्वभेदस्तत्प्रतियोगितावच्छेदकं पटत्वनिष्ठमेकत्वन्तदनवच्छेदकञ्च घटत्वनिष्ठमेकत्वन्तदेव सजातीयद्वितीयराहित्यम् अत्र घटोऽस्तीत्यत्र घटपदोत्तरैकवचनार्थः ।

इति परीक्षालेखप्रकारः ।

---

जातिलक्षणन्तु नित्यत्वविशिष्टानेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताश्रयत्वम् । यथा नित्यत्वविशिष्टानेक ( घटादि ) निरूपितसमवायसम्बन्धावच्छिन्ना वृत्तिता घटत्वस्य ताद्दशवृत्तिताश्रयत्वञ्च घटत्वस्येति तस्य जातित्वं सिद्ध्यति । संयोगादावतिव्याप्तिनिरासाय लक्षणघटकं नित्यत्वम् । आकाशपरिमाणादेस्तत्त्ववारणायानेकेति । अत्यन्ताभावादावतिव्याप्तिपरिहाराय समवायेति ।

विभुद्वयसंयोगाङ्गीकर्तृमते ताद्दशसंयोगस्य तथात्वापत्तौ संयोगभिन्नत्वं लक्षणेऽपरमपि निवेश्यम् । अनेकपदस्य बहुत्वार्थकत्वेन वा निवेशाभावेऽपि वारणं सम्भाव्यम् ।

यत्तु एकत्वाविवक्षायामपि भावाख्यातस्थले एकवचनस्य साधुत्वदर्शनात्सङ्ख्याया अविवक्षणेऽपि सम्पन्नो व्रीहिरित्यादावेकवचनोपपत्तेरलं जात्येकत्वपरतया तत्र समर्थनेनेति। तदप्यकिञ्चित्करम्। भावा-

---

अथ शास्त्रार्थप्रकारः।

प्रकृत्यर्थतावच्छेदकमात्रवृत्तिधर्मेण साजात्याश्रयणे गौरवात्स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेनेतिसम्पन्नो व्रीहिरितिवत्प्रकार एव श्रेयानिति। सिंहावलोकनन्यायेन पुनरपि साजात्यं विचार्यते।

नन्वेकस्मिन्नेव भूतले ब्राह्मणशूद्रयोर्यदा घटस्तत्र अत्र ब्राह्मणस्य घटोऽस्ति शूद्रस्य च घटोऽस्ति एवम्प्रयोगो न स्यात्तथाहि, एतद्देशविद्यमानत्वादिसंसर्गश्शूद्रघटे तन्निष्ठभेदप्रतियोगितावच्छेदकत्वमेव ब्राह्मणघटगतैकत्वे इति चेन्न ? यावत्स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेणेति स्वीकारः। ब्राह्मणसंसर्गित्वं शूद्रघटे नास्तीतिभेदप्रतियोगितानवच्छेदकवत्त्वमेव ब्राह्मणघट इति दोषाऽभावात्। यावत्संसर्गित्वेतिनिवेशस्तेन कालिकसम्बन्धेन शूद्रघटसत्त्वान्न दोषः प्रकृतशाब्दबोधोपकारकविषयसंसर्गग्रहणेनाऽदोषाच्च इति। यजधातोस्तत्तद्व्यक्तित्वावच्छिन्ने लक्षणा तेन पशुद्वयकत्वविशिष्टपशुकरणकयागत्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् एकत्वविशिष्टपशौ एतद्यागीयव्यक्तिससर्गो नान्यस्मिन् इति परस्परभेदात् न व्यभिचारचर्चा। अत एव नरेण नरो यजेतेत्यादौ कर्तृभूतनरे करणभूतनरसजातीयत्वन्नास्ति संसर्गभेदात्। एकत्र करणत्वं संसर्गोऽपरत्र कर्तृत्वम्। नन्वेवमपि अनेकब्राह्मणकर्तृकशयनाधिकरणस्थानतात्पर्येणात्र ब्राह्मणश्शेते भुङ्क्ते इत्यादिवाक्यमनिष्टमपि स्यात् शयनक्रियाकर्तृभेदेन शयनक्रियाव्यक्तिभेदः। स्वसजातीयत्वं स्वस्मिन्नेव, तन्निष्ठभेदप्रतियोगितानवच्छेदककत्वसत्त्वादिति चेन्न ? स्वसमभिव्याहृतपदार्थेत्यत्र पदार्थपदेन पदार्थतावच्छेदकस्य ग्रहणन्तथाच शयनरूपपदार्थतावच्छेदकसम्बन्धः शयनत्वावच्छिन्ननिरूपितकर्तृत्वाख्यस्स एव ब्राह्मणान्तरेऽपि एतद्ब्राह्मणसजातीयो द्वितीयस्तृतीयोऽपि ब्राह्मणस्तद्राहित्यस्यैतद्देशेऽसत्त्वेन तादृशप्रयोगाऽभावात्।

वस्तुतस्तु—

एकवचनसुप्रत्ययादेस्सम्पन्नो व्रीहिरित्यादौ संख्यारूपैकत्वमेवार्थो न तु स्वसजातीयनिष्ठभेदेति। स्वसमभिव्याहृतपदार्थेति पूर्वोक्तरीत्यैकवचनार्थः। वक्तृतात्पर्यावधारणेन व्रीहिस्सम्पन्नः अर्थात् न क्षेत्रान्तरस्थसस्यान्तरं सम्पन्नं न परिपक्वमित्यर्थः। सम्पन्नपदोत्तरसुवाच्यसंख्यारूपैकत्वविशिष्टो व्रीहिरिति फलति। वैशिष्ट्यञ्च व्रीहावेकत्वस्य स्वाधिकरणत्ववत्त्व स्वाधिकरणप्रकृत्यर्थतावच्छेदकवदितराऽवृत्तिसम्पत्त्यवच्छिन्नाऽभेदवत्त्वोभयसम्बन्धेन। स्वमेकत्वम् तदधिकरणं व्रीहित्वम्। तद्वत्त्व व्रीहावित्येकसम्बन्धसंघटनम्। स्वमेकत्वम्। तदधिकरणप्रकृत्यर्थतावच्छेदकं व्री-

ख्यातस्थले गत्यन्तरविरहेण विभक्तेर्निरर्थकत्वोपगमात्। तत्र च सार्थकत्वापगमसम्भवे तत्परित्यागस्यानुचितत्वात्। सति तात्पर्ये तद्बोधस्यानुभविकत्वाच्चेति।

---

हित्वन्तद्वान् व्रीहिस्तदितरः क्षेत्रान्तरस्थसस्यादिस्तदवृत्तिर्या सम्पत्तिस्तदवच्छिन्नाऽभेदवत्ता व्रीहौ न सस्यान्तर इति। अनयैव रीत्या अत्र घटोऽस्तीत्यत्राऽपि वारणम्। तथाहि संख्यारूपैकत्वविशिष्टो घट इति बोधः। एकत्ववैशिष्ट्यञ्च घटे स्वाश्रयवत्त्व स्वाश्रयप्रकृत्यर्थतावच्छेदकवदितराऽवृत्त्येतद्देशवृत्तिसत्ताश्रयत्ववत्त्वोभयसम्बन्धेन। स्वमेकत्वन्तदाश्रयो घटत्वन्तद्वत्त्वं घटे इत्येकसम्बन्धः। स्वमेकत्वन्तदाश्रयप्रकृत्यर्थतावच्छेदकम् घटत्वं तद्वान् घटस्तदितरः पटादिस्तदवृत्तित्वे सत्येतद्देशवृत्तिसत्ताश्रयत्वं घटत्वे तद्वत्त्वं घटे इति द्वितीयसम्बन्धसंघटनम्। एवं विधाकाङ्क्षाबोधकं वाक्यघटकमत्रेतिपदन्तात्पर्यं वा। एवन्निर्वाहेऽलमेकत्वपरिष्कारेण।

किञ्च—

पशुना यजेतेत्यत्र यजधातोः पशुविशिष्टयागे लक्षणा कार्या। वै०स्वकरणकत्व स्वभिन्नपश्वकरणकत्वोभयसम्बन्धेन। एतादृशलक्षणातात्पर्यग्राहिका तृतीयाविभक्तिः। स्वम्पशुस्तत्करणकत्वमेव यागे, स्वं पशुस्तद्भिन्नो द्वितीयः पशुस्तत्करणकत्वन्न यागे इत्यनेकपशुकरणकयागान्नादृष्टसिद्धिः।

सूक्ष्मवेत्तारस्तु—

एकत्वविशिष्टयागकरणत्वमेव सजातीयद्वितीयराहित्यम्। वैशिष्ट्यञ्च स्वाश्रयपशुकरणकत्व स्वाश्रयनिष्ठभेदप्रतियोगिपश्वकरणकत्वोभयसम्बन्धेन। स्वमेकत्वं तदाश्रयः पशुर्यागीय एव नान्यस्तत्करणकत्वमस्ति। स्वमेकत्वन्तदाश्रयो यागीयः पशुस्तन्निष्ठो भेदः कस्यचित् अन्यस्य यज्ञभूमिबहिर्भूतस्य पशोः भेदप्रतियोगिपशुरन्यस्तदकरणकत्वमपि यागे इति सजातीयद्वितीयराहित्यम्ब्रुवन्ति।

ननु पशुना यजेतेत्यत्र इष्टे पशौ साजात्याश्रिते यज्ञार्हे एकत्वविशिष्टे संयोगसम्बन्धेन एतत्पशुगतैकत्ववान्न तत्पशुगतैकत्ववान्नेतिसंयोगसम्बन्धावच्छिन्नावच्छेदकताकभेदस्य विद्यमानत्वेन भेदप्रतियोगितानवच्छेदकत्वाऽसंघटनेन कथमेकपशुकरणकयागाददृष्टसिद्धिरिति चेन्न? समवायसम्बन्धावच्छिन्नावच्छेदकताकभेदस्यैव स्वीकारात्। नच रूपमस्तीतिवाक्ये एकत्वस्य स्वरूपसम्बन्धेनैव रूपपदार्थेऽन्वयो न तु समवायेनेति कथन्तत्रान्वय इति वाच्यम्? स्वरूपसमवायस्वाश्रयप्रकृत्यर्थतावच्छेदकत्वान्यतमसम्बन्धावच्छिन्नावच्छेदकताकभेदस्वीकारेणाऽदोषात्। ननु अन्यतमत्वावच्छिन्नत्वात्पशौ स्वरूपसम्बन्धावच्छिन्नावच्छेदकताकभेदस्य सत्त्वेन तत्रानुपपत्तिर्दुर्वारैवेति चेन्न? एकत्वनिष्ठप्रकारतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकभेदस्यैव स्वीकारेण संयोगेनैतत्पशुगतैकत्ववान्नेतिभेदमादायापत्तेर्वक्तुमशक्यत्वात्।

नचैवमपि स्वरूपसमवायादिसम्बन्धावच्छिन्नावच्छेदकताया अपि एकत्वनिष्ठप्र-

एवं त्रयः समुदिता हेतुरित्यत्र हेतुपदं कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरं तादृशसमुदायत्वान्वितमेकत्वं एकवचनार्थः।

अत एव शक्त्यादीनां त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः। तथा सत्येषामेकैकसमवधानदशायामपि कार्योत्पत्तेरावश्यकतया तत्रितयपर्याप्तसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथाविधैकसमुदायत्वाश्रयत्वानुपपत्तेः।

---

कारतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकत्वादापत्तिस्तदवस्थैवेति वाच्यम् ? प्रकृतशाब्दबोधोपधायकप्रकारतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकभेदस्य स्वीकारेणाऽनुपपत्तिविरहात्।

ननु आख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति प्रथमान्तपदजन्योपस्थितिः कारणमितिनियमेन देवदत्तो गच्छति देवदत्तः पचति देवदत्तेन तण्डुलः पच्यते इत्यादिप्रथमान्तपदसत्त्वेन देवदत्ततण्डुलादावाख्यातार्थसंख्याया अन्वयेन सिद्धावपि देवदत्तेन सुप्यते देवदत्तेन गम्यते अन्यैर्गम्यत इत्यादौ प्रथमान्तपदाऽभावेनाख्यातार्थसंख्याया अन्वयाऽभावेनैकवचनमुत्सर्गतः करिष्यतं इत्यादिशाब्दिकनियमेन प्रत्ययोत्पत्तौ यथा तत्रैकत्वाऽविवक्षयैवैकवचनस्य साधुत्वमेवं सम्पन्नो व्रीहिरित्यादावपि संख्याया अविवक्षायामपि औत्सर्गिकैकवचनत्वं सुतरां सिद्धमिति व्रीहित्वजातौ संख्याया अन्वयेन कथं गौरवाश्रयणमिति तन्निरस्यति तद्पीति। तत्र प्रथमान्तपदाऽभावेन निरर्थकत्वेऽपि सर्वत्र तथा स्वीकारे मानाऽभावेन व्रीहित्वजातावन्वयस्वीकारे क्षतिविरहः। तत्र संख्याबोधोऽनुभवगम्य इति।

एवं त्रयस्समुदिता हेतुरिति।

कार्यम् काव्यम् उत्पादः उत्पत्तिस्तत्प्रयोजकता शक्तिनिपुणताऽभ्यासानां त्रयाणां समुदितानां समुदाये तत्प्रयोजकतावच्छेदकत्वं समुदायेऽसमुदायत्वावच्छिन्नसमुदायपरमत्र हेतुपदमिति तस्मिन्नेव समुदायत्वे एकत्वान्वयः। तृणारणिमणिन्यायेन यथा वह्निम्प्रति पार्थक्येन तृणस्य कारणत्वम् अरणेः मणेश्च तथाऽत्र न व्यवहारः। किन्तु काव्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वाश्रयत्वन्तत्तात्पर्येण हेतुरित्येकवचनान्तमेव।

एवं "जात्याकृती" तिसूत्रेऽप्येकवचनान्तत्वसङ्गतिः। "प्रत्यक्षानुमाने" तिसूत्रे प्रत्यक्षम्प्रमाणम् अनुमानम्प्रमाणम् उपमानम्प्रमाणम् शब्दः प्रमाणमितिपार्थक्येन प्रामाण्याद् बहुवचनमुपपद्यते। एवं विशेषणवाचकदेवतापदस्याऽपि बहुवचनान्तत्वमेव ज्यायस्तरम्।

तृणारणिमणिन्यायेनेति।

अत्र क्वचित् तृणेन वह्निर्जन्यते क्वचिदरणिना क्वचिन्मणिना तृणस्य सहकारी फूत्कारः। अरणेर्मन्थनम् मणेस्तरणिकिरणसंयोगः। तार्णवह्नित्वावच्छिन्नम्प्रति फूत्का-

एवं जात्याकृतिव्यक्तयः पदार्थ इत्यत्र त्रितयनिष्ठस्य पदशक्तिरूपपदार्थत्वस्यैकत्वं विवक्षितमिति तत्र विशेष्यपदस्य बहुवचनान्तत्वेऽपि विशेषणपदस्यैकवचनान्ततोपपत्तिः। प्रत्यक्षानुमानेत्यादिसूत्रे प्रमाकरणत्वरूपप्रकृत्यर्थतावच्छेदकस्य। प्रत्यक्षानुमानादिनिष्ठस्यैकताया बाधितत्वेनाविवक्षितत्वात्प्रमाणपदस्य बहुवचनान्ततेति। एवं पितरो देवता इत्यत्रापि पितृपितामहादीनां संहितानामेकरूपेण देवतात्वविरहेण पितृत्वपितामहत्वादिना पृथगेव त्यागोद्देश्यत्वरूपदेवतात्वम्। उद्देश्यतावच्छेदकभेदेनैव उद्देश्यताभेदात्। तत्र एकत्वस्याविवक्षया देवतापदस्य बहुवचनान्ततेति दिक्। स्वप्रकृतिकत्वं च स्वाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वम्। तेन दधि सुन्दरमित्यादौ विशेष्यपदानन्तरं विभक्तेरसत्त्वेऽपि न क्षतिः। तत्र विभक्तेरनुसन्धानं विना शाब्दबोधानुपगमात्। एवं तादृशविभक्तिसजातीयविभक्तिकत्वमपि तथाविधविभक्त्यव्यवहितपूर्ववर्तितया प्रतिसन्धीयमानत्वम्। तेन इदं दधीत्यादौ विशेषणपदानन्तरं विभक्तेरसत्त्वेऽपि न क्षतिः।

---

रः कारणम्। अरणिवह्नित्वावच्छिन्नम्प्रति मन्थनङ्कारणम्। मणिवह्नित्वावच्छिन्नम्प्रति तरणिकिरणसंयोगः कारणमिति स्वातन्त्र्येणैव हेतुत्वन्न परस्परसहकारित्वम्प्रकृते त्रयस्समुदिता हेतुरित्यतो वैलक्षण्यमस्त्येवेत्याशयः।

एवं जात्याकृतिव्यक्तयः पदार्थ इति—

नन्वस्मिन्सूत्रे यदीश्वरेच्छारूपशक्तिं गृहीत्वा पदार्थ इत्यत्रैकत्वान्वयो ग्रन्थोक्तरीत्या वक्तुमर्हः परन्तु सन्मात्रविषयिण्या भगवदिच्छायास्सकलपदार्थगोचरत्वेन सामान्यत एकत्वमेव एवञ्च यथा "व्यक्त्याकृतिजातयः पदार्थ" इत्यत्रैकत्वान्वयेन पदार्थइति भवति तथैव देवदत्तयज्ञदत्तद्रव्यघटाः पदार्थ इत्यपि रूपमापद्येत? युक्तेस्तौल्यात्। नचेश्वरेच्छीयविषयतारूपा शक्तिस्तस्यामेकत्वान्वयः पूर्वोक्तलक्ष्ये ईश्वरेच्छीयविषयताया अभावेन नापत्तिरिति वाच्यम्? तथासति एकत्वाश्रयीभूतोक्तविषयत्वस्य व्यक्तिआकृतिजातिपदार्थत्रयासाधारण्याऽभावेन गौतमसूत्रघटपदार्थ इतिप्रयोगवृषोत्सर्गापत्तेः। एवञ्चापत्तिग्रस्तः पूर्वोक्तप्रयोगः कथन्नेति प्रश्नकर्त्तुराशयः। शिष्टप्रयोगे तथासत्त्वेऽप्यशिष्टप्रयोगे तथा व्यवहाराऽभावात्। किञ्च गौतमप्रयोगलौकिकप्रयोगयोर्वैषम्यम्। गौतमसूत्रस्य परार्थबोधने तात्पर्यम्। लौकिकप्रयोगस्य तु स्वार्थबोधने तात्पर्यम्। किञ्च यदि घटपटमठाः पदार्थ इति वाक्ये एकत्वान्वये तात्पर्यमिष्यते तदा त्विष्ट एवायम्प्रयोगः।

ननु "विंशत्याद्यास्सदैकत्व" इत्यादिव्याख्या तु प्रकरणप्राप्तेति, अवतणिका तु स्वप्रकृतिकविभक्तिसजातीयेति तत्र सिंहावलोकनन्यायेन पुनरवकाशे आह—स्वप्रकृ-

**अथ नीलस्य घट इत्यादावपि पदार्थोपस्थित्यादिकारणसमवधानसम्भवात् कथन्न नीलघटयोरभेदान्वयबोधः ।**

---

तिकत्वञ्चेति । वैयाकरणमते स्वप्रकृतिकत्वम् स्वनिष्ठोद्देश्यतानिरूपितविधेयतावत्त्वम् । परन्तु स्वमते लक्षणमाह न्याऽन्यबहितोत्तरत्वेनेति ।

अत्रैव प्रसङ्गात् प्रकृतित्वम् प्रत्ययत्वञ्च विचार्यते ।

प्रकृतित्वम्—"प्रत्ययः" इत्येतच्छब्दाधिकारीयकार्यनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वम् ।

प्रत्ययत्वञ्च—प्रकृतिविशिष्टत्वम् वै० च स्वसमभिव्याहृतत्व स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व स्वार्थान्वितार्थप्रत्यायकत्वमित्येतत्त्रितयसम्बन्धेन । एवं लक्षणे नाव्याप्त्यतिव्याप्त्यसम्भवादिदोषावकाश इति ।

अथ नीलस्य घट इत्यादावपीति ।

अस्यायमाशयः, बाधाऽभावो योग्यता । अत्र बाधनिश्चयश्च अभेदेन नीलाभाववान् घट इत्याकारक एव । तथा च एवं विधबाधनिश्चयाऽभावोऽस्त्येव नीलस्य घट इत्यत्र । तथाहि, नीलपदजन्यनीलोपस्थितिघटपदजन्यघटोपस्थितिनीलपदसमभिव्याहृतघटपदत्वरूपाऽऽकाङ्क्षाज्ञानम् , नीलस्य घट इतिवाक्यमभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधञ्जनयत्वित्याकारकतात्पर्यज्ञानम् , नीलपदसन्निहितं घटपदमित्याकारकासत्तिज्ञानमेवं विधानां चतुर्णां शाब्दबोधकारणानां सत्त्वेन कथन्नाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकःशाब्दबोध इति प्रश्नाशयः ।

नच अभेदान्वयबोधम्प्रति स्वसमानविभक्तिकपदजन्योपस्थितिः कारणमिति नीलस्य घट इत्यादौ विरुद्धविभक्तिकत्वान्नाभेदान्वयापत्तिरिति वाच्यम् ? सामग्रीसत्त्वे अवश्यं कार्य्यमितिनियमः । व्यापकधर्मावच्छिन्नकार्यत्वावच्छिन्नम्प्रति व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षेतिनियमः । कार्यसत्तायाः कारणसामग्रीसत्ताव्यापकत्वमिति नियमः । यथा केनचिज्ज्योतिश्शास्त्रज्ञेन घोषणा कृता अस्मिन्वर्षे वृष्टिर्नभविष्यतीति वर्षाप्रबलहेतुमेघादिसमवधाने वृष्टेरवश्यम्भावादिदर्शनेन ज्योतिश्शास्त्रीयनियमभङ्गस्याऽकिञ्चित्करत्वन्तथाऽभेदान्वयबोधम्प्रति स्वसमानविभक्तिकत्वमितिनियमस्याकिञ्चित्करत्वे क्षतिविरहात् । आकाङ्क्षादिग्रहादिति—अन्वयबोधौपयिक इत्यस्यान्वयबोधजनक इत्यर्थः । तथाहि, प्रथमापदं श्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वादिपरमेव । प्रथमात्वेनाऽज्ञानदशायां नीलो घट इत्यादिवाक्यादपि शाब्दबोधानाऽपत्तेः । अतः अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाऽऽकाङ्क्षाज्ञानं कारणम् । विनिगमनाविरहात् अभेदसम्बन्धावच्छिन्ननीलत्वाव-

च्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तघटपदसमभिव्याहृतस्वन्तर्नीलपदसमभिव्याहाररूपाकाङ्क्षाज्ञानं कारणम्। एवम् औ जस् अम् औ शस् इत्यादिष्वपि । अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति औविभक्त्यन्तनीलपदसमभिव्याहृतौ विभक्त्यन्तघटपदसमभिव्याहाररूपाकाङ्क्षाज्ञानं कारणम् । विनिगमनाविरहात् अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति औविभक्त्यन्तघटपदसमभिव्याहृतौ विभक्त्यन्तनीलपदसमभिव्याहाररूपाकाङ्क्षाज्ञानं कारणम्। एवं जसन्तनीलपदसमभिव्याहृतजसन्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणम्। जसन्तघटपदसमभिव्याहृतजसन्तनीलपदसमभिव्याहाररूपाकाङ्क्षाज्ञानं कारणम्। एवमन्यास्वपि विभक्तिषु। नीलघट इत्यादौ समासे विभक्तिलोपे स्वन्तजसन्तत्वाद्यभावेन पूर्वोक्तकारणाऽप्रवृत्तौ कथं तत्राभेदसंसर्गकश्शाब्दबोध इति विचिकित्सायामभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति नीलपदाऽव्यवहितोत्तरवर्त्तिघटपदत्वरूपाकाङ्क्षाज्ञानं कारणम्। घटपदाऽव्यवहितोत्तरवर्तिनीलपदत्वरूपाकाङ्क्षाज्ञानं कारणमिति विनिगमनाविरहात् कार्यकारणभावद्वयम्।

ननु समासस्थले नीलपदाऽव्यवहितोत्तरवर्त्ति घटपदत्वं घटपदाव्यवहितपूर्ववर्त्ति नीलपदत्वमेव वा यद्याकाङ्क्षाज्ञानं कारणमितिनियमस्तर्हि मूलग्रन्थानुपपत्तिस्तथाहि, केवलनिर्विभक्तिकव्याकरणाऽनिष्पन्नशुद्धनीलघटघटनीलेतिवाक्यादप्यभेदान्वयबोधापत्तिराकाङ्क्षाज्ञानस्य सत्त्वादिति चेन्न ? अनुमिताविव शाब्दबोधेऽपि विधेयतानियमस्सार्वजनीनः। विधेयत्वञ्च अपूर्वांशस्यैव भवति प्रकृते निर्विभक्तिकनीलघटेतिसमुदाये उद्देश्यत्वेनाश्रीयमाणघटविशेषणत्वेनैव नीलपदार्थस्य प्रवृत्तिः प्रकारताप्रयोजकमेवात्र नीलपदन्तु विधेयताप्रयोजकन्तथाचाऽपूर्वत्वाऽसम्भवेन विधेयत्वाऽसम्भवः। निर्विभक्तिकनीलघटपदे विभक्तिविशिष्टत्वेनानुसन्धाने विभक्त्यन्तत्वेन वा लुप्तविभक्तिस्मरणेन वा विधेयीभवदेकत्वादिप्रकारकशाब्दबोधस्यैव सिद्धान्तितत्वेन निर्विभक्तिके तादृशाकाङ्क्षाज्ञानाऽप्रवृत्त्या दोषपरिहारादित्याशयः।

ननु एषु कार्यकारणभावेषु परस्परव्यभिचारः अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वमेव कार्यतावच्छेदकम् तच्चोक्तकार्यकारणभावमात्रे पर्याप्तम्। स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानस्य औविभक्त्यन्तनीलपदसमभिव्याहृतौ विभक्त्यन्तघटपदसमभिव्याहारेऽभावः तस्य च जसन्तनीलपदसमभिव्याहृतजसन्तघटपदसमभिव्याहारेऽभावः। एवं सर्वत्र। परन्तु कार्यतावच्छेदकावच्छिन्नस्य सर्वत्र सत्त्वात् कारणतावच्छेदकावच्छिन्नस्य विलक्षणत्वात् सर्वत्राऽसत्त्वेन हेतोः कार्यतावच्छेदकानाक्रान्तत्वदोषेण कथङ्कारमुद्धार इति प्रश्नेऽव्यवहितोत्तरत्वनिवेशस्तथाहि, स्वन्तनीलपदसमभिव्याहृतस्वन्त-

घटपदत्वरूपाकाङ्क्षाज्ञानाऽव्यवहितोत्तरजायमानाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणम् । एवं विनिगमनाविरहितकार्यकारणभावेऽपि । तथाच व्यासस्थले एकविंशतिविभक्तीनां सत्त्वादेकप्रकारेणैकविंशतिः कार्यकारणभावाः, विनिगमनाविरहेऽपि एकविंशतिः, सम्मेलने तु द्वाचत्वारिंशत्कार्यकारणभावाः । समासस्थले तु कार्यकारणभावद्वयम् । अनयोरपि गणनासम्मेलने चतुश्चत्वारिंशत्कार्यकारणभावास्सम्पद्यन्तेतराम् ।

इति परीक्षालेखप्रकारः ।

---

## अथ शास्त्रार्थप्रकारः ।

कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेश आवश्यक एव अन्यथा समासव्याससाधारण्येन नीलो घटः नीलघट इत्यादौ घटपदस्थाने तत्पर्य्यायकलशपदप्रक्षेपः नीलपदस्थाने तत्पर्यायकृष्णपदप्रक्षेपः । एवञ्च तद्घटिताकाङ्क्षाज्ञानानामपि परस्परबोधे व्यभिचारस्स्यादेतदर्थं कार्यतावच्छेदककोटिकाण्डे घटकत्वेनाव्यवहितोत्तरत्वनिवेश इति सिद्धान्तः ।

ननु नीलो घटः नीलघट इतिवाक्यमेव न सम्भवति "उद्देश्यवचनं पूर्वं विधेयञ्च ततः परमि"ति "यच्छब्दयोगः प्राथम्यं स्यादुद्देश्यस्य लक्षणम् । यच्छब्दयोगः पाश्चात्यं स्याद्विधेयस्य लक्षणमित्य"भियुक्तोक्तिभ्यां घटो नीलः घटनील इत्याकारकस्यैव प्रयोक्तुमुचितत्वादिति चेन्न ? प्रतिज्ञावाक्याभिप्रायकत्वेन तदुक्तिसौष्ठवादन्यत्र तु सदिच्छानुरोधेन प्रयोगेऽविरोधात् ।

ननु ईश्वरेच्छाया ईश्वरेच्छीयोक्तविलक्षणविषयतायाश्च शक्तित्वे शास्त्रकृदभिमते मनुष्यैस्साधारणैस्सा दुर्ज्ञेयेति कथं सेच्छा बोधजनिकेति चेन्न ? सर्गादिभुवाम्महर्षिदेवतानामीश्वरेण साक्षादेव कृतस्सङ्केतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्सङ्केत इति शिष्टोक्तेः । 'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥ यः कल्पस्स कल्पपूर्वः यथापूर्वमकल्पयदि'ति श्रुतेश्च । पूर्वोक्तकार्यकारणभावे समभिव्याहृतत्वञ्च नियतपूर्वापरीभावत्वमिति केचित् । अस्य लक्षणस्य श्लोकघटकपदान्तरादौ व्यभिचरितत्वेनावाच्यत्वात् । अतः पदविशिष्टपदत्वमेव समभिव्याहारत्वम् । वैशिष्ट्यञ्च स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्व स्वभिन्नत्वमित्युभयसम्बन्धेन । समन्वयश्च नीलो घट इत्यादौ विस्पष्ट एवेत्यलम् ।

तथाच नीलस्य घट इत्यत्रैतेषामाकाङ्क्षाज्ञानकार्यकारणभावानामभावेन विरुद्धविभक्तिकत्वेन नाऽभेदाऽन्वयबोधः । नच नीलस्य घट इत्यत्र वैशिष्ट्यं षष्ठ्यर्थः एकोनशतं षष्ठ्यर्था इतिभाष्यात् तथाच नीलविशिष्टो घट इति शाब्दबोधस्स्यादिति वाच्यम् ? लोके तादृशप्रतीत्यभावात् तादृशषष्ठ्यर्थस्य शिष्टैरस्वीकृतत्वाच । ननु चतुश्चत्वारिंशदेव कार्यकारणभावाः कथम् ? नीलो घट इत्यादौ विशेषणवाचकपदोत्तरविभक्तेरपि

 


एकत्वसंख्यार्थस्तस्य नीले नीलत्वे वाऽन्वये नीलो घटौ नीलो घटा इत्यादीनां पूर्वोक्तरीत्याऽभीष्टत्वे तु स्वन्तनीलपदसमभिव्याहृतावन्तघटपदसमभिव्याहारः कारणम्। स्वन्तनीलपदसमभिव्याहृतजसन्तघटपदसमभिव्याहारः कारणम्। एवं स्वन्तनीलपदसमभिव्याहृतशसन्तघटपदसमभिव्याहारः। विनिगमनाविरहाद्वैपरीत्ये तु जसन्तघटपदसमभिव्याहृतस्वन्तनीलपदसमभिव्याहारः कारणम्। एवञ्च व्यासस्थले ८४ चतुरशीतिकार्यकारणभावाः। समासस्थले तु कार्यकारणभावद्वयम्, सम्मेलने तु ८६ षडशीतिकार्यकारणभावाः अनन्ता वा कथमेतावदेवेति वाच्यम्? इष्टापत्तेः। नच देवदत्तस्य प्रथमान्तनीलपदसमभिव्याहृतेत्याकाङ्क्षाज्ञानन्तदव्यवहितोत्तरक्षणे विष्णुमित्रस्य पूर्वक्षणीयद्वितीयान्तनीलपदसमभिव्याहृतेत्याद्याकाङ्क्षाज्ञानात्तादृशबोधे व्यभिचार इति वाच्यम्? अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतेत्यत्र स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानशाब्दबुद्धित्वावच्छिन्नम्प्रति इत्यत्र च आकाङ्क्षाज्ञानविशिष्टशाब्दबुद्धित्वावच्छिन्नम्प्रतीतिनिवेशः। वैशिष्ट्यञ्च स्वाऽव्यवहितोत्तरत्व स्वाधिकरणदेशवृत्तित्वोभयसम्बन्धेनेत्यापत्तिवारणात्।

नच स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानाऽव्यवहितोत्तरजायमानाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानङ्कारणमित्येवं विधे कार्यकारणभावे विषययोर्नीलघटयोः प्रवेशः किमर्थः? किन्तु स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानाऽव्यवहितोत्तरजायमानशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानङ्कारणमित्येव कार्यकारणभावोऽस्तु अव्यवहितोत्तरत्वनिवेशेन सर्वापत्तिवारणात्। एतच्च संसर्गतावादिमीमांसकानुयायिमतम्। अत एव तत्र विषयनिवेशे प्रयोजनाऽभावेनेत्यादिना विषयाऽनिवेशो व्युत्पत्तिवादे विस्पष्टस्संसर्गतावादस्थापनप्रकरणे लाघवञ्चेति वाच्यम्? कार्यदलनिवेशं विनैव केवलस्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानादेव अभेदसम्बन्धावच्छिन्ननीलप्रकारकघटविशेष्यकशाब्दबोधस्यापि कदाचिदापत्त्या कार्याऽनियमप्रसङ्गापत्तेः। नच शाब्दबोधसहकारियोग्यताज्ञानतात्पर्यज्ञानासत्तिज्ञानानां यथा कार्यनियामकत्वं तथाकाङ्क्षाज्ञानस्याऽपि स्यादिति वाच्यम्? एवमपि विषयनिवेशाऽभावेऽनेकार्थकहरिपदघटितसुन्दरो हरिरितिवाक्यात्तात्पर्यानुरोधेन क्वचिदिन्द्रविषयकशाब्दबोधः कदाचित्सूर्यविषयकशाब्दबोधः कदाचिद्विष्णुविषयकशाब्दबोधस्तथाच स्वन्तसुन्दरपदसमभिव्याहृतस्वन्तहरिपदत्वरूपाकाङ्क्षाज्ञानाऽव्यवहितोत्तरजायमानशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तसुन्दरपदसमभिव्याहृतस्वन्तहरिपदत्वरूपाकाङ्क्षाज्ञानं कारणमित्येव कार्यकारणभावः। एवञ्च विषयविशे-

सामग्र्या कार्यजनने उक्तनियमभङ्गप्रसङ्गरूपबाधकस्याकिञ्चित्कर-त्वादिति चेत् ? तथाविधान्वयबोधौपयिकाकाङ्क्षाविरहात् । तथा हि,

पनिवेशाऽभावेन सूर्यविषयकबोधस्थले इन्द्रविषयकोपस्थितेः इन्द्रविषयकबोधस्थले सूर्यविषयकोपस्थितेरेवं सर्वार्थे व्यभिचारापत्तौ महानुपप्लवः । विषयनिवेशे तु स्वन्तसुन्दरपदसमभिव्याहृतस्वन्तहरिपदत्वरूपाकाङ्क्षाज्ञानाऽव्यवहितोत्तरजायमानसूर्यविषयकशाब्दबोधम्प्रति स्वन्तसुन्दरपदसमभिव्याहृतस्वन्तहरिपदत्वरूपाकाङ्क्षाज्ञानङ्कारणमित्येवमिन्द्रविषयकबोधे विष्णुविषयकबोधेऽपि कार्यकारणभाव इति नानेकार्थकगवादिशब्देऽपि व्यभिचार इति ।

इति परीक्षालेखप्रकारः ।

## अथ शास्त्रार्थप्रकारः ।

ननु तत्तत्कारणाव्यवहितोत्तरत्वविशिष्टस्वीयकार्यतावच्छेदकधर्मावच्छिन्नापादने एव तत्तदाकाङ्क्षाज्ञानरूपकारणस्यापेक्षिततया स्वीयकार्यतावच्छेदकशुद्धाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वापादने तत्तत्कारणस्याऽप्रयोजकतया तत्तत्कारणाभावप्रयोज्यतत्तत्कार्याऽभावो वक्तुमशक्य इति । शुद्धतादृशकार्यतानिरूपितकारणतावन्नीलत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकयोग्यताज्ञानान्नीलस्य घट इत्यादावभेदान्वयापत्तिः । एवन्तात्पर्यज्ञानमासत्तिज्ञानञ्च विद्येते । त्रिषु कारणेषु सत्सु एकस्याकाङ्क्षाज्ञानरूपकारणविरहस्याऽकिञ्चित्करत्वम् । न चाऽप्रसिद्धिश्शङ्क्या ? नीलो घट इत्यादावेवापाद्यमानधर्मावच्छिन्नप्रसिद्धेः ।

अथोत्तरम् , तत्तदाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानत्वविशिष्टतादृशशाब्दबुद्धित्वावच्छिन्नम्प्रति योग्यताज्ञानविशिष्टतादृशाकाङ्क्षाज्ञानत्वेन कारणत्वाऽभ्युपगमात् । केवलयोग्यताज्ञानस्यापाद्यमानधर्मावच्छिन्नम्प्रत्यकारणत्वात् । तात्पर्यज्ञानासत्तिज्ञानयोः पृथक् कारणत्वाऽकल्पनात् आपादकाऽभावादेव नापत्तिः । कतिपयकारणसत्त्वे कार्याऽभावप्रयोजकजिज्ञासा हि आपत्तिः तदभावे तदभावरूपव्यासिरेकव्याप्तेः कारणतानियामकतया यद्रूपावच्छिन्नाभावप्रयोजकाऽभावीयप्रतियोगितावच्छेदकं यद्रूपन्तद्रूपावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकमितिव्याप्तिलाभात् तादृशयोग्यताकज्ञानाऽभावात्तादृशधर्मावच्छिन्नकार्याऽभावस्य दृष्टतयाऽवश्यमेव तादृशयोग्यताज्ञानं केवलमपि कारणं स्यादिति तस्यैव प्रकृते ह्यापादकत्वात् । आकाङ्क्षाज्ञानविशिष्टतादृशयोग्यताज्ञानङ्कारणं योग्यताज्ञानविशिष्टतादृशाकाङ्क्षाज्ञानङ्कारणमितिविनिगमनाविर-

आकाङ्क्षा—येन पदेन विना यत्पदस्य यादृशबोधाजनकत्वन्तत्पदविशिष्टतत्पदत्वं तादृशशाब्दबोधजनकाकाङ्क्षेति । वैशिष्ट्यञ्च तत्पदस्य तत्पदे अव्यवहितपूर्ववृत्तित्वाव्यवहितोत्तरत्वान्यतरसम्बन्धेन । 'यत्पदेन विना यस्याननुभावकता भवेत् आकाङ्क्षा' कारिका० ।

तादृशान्वयबोधे प्रथमाविभक्त्यन्तघटादिपदसमभिव्याहृतप्रथमान्तनीला-दिपदत्वमेवासमस्तनीलघटपदाद्याकाङ्क्षा । समासस्थले च घटपदाद्य-

हेणानन्तकार्यकारणभावकल्पनापेक्षया तादृशाकाङ्क्षाज्ञानादीनां पृथगेव कार्यकारण-भावकल्पनायां लाघवात् ।

समाधानन्तु—

व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपे-क्षेतिप्रकृते न तादृशशुद्धधर्मावच्छिन्नकार्योपत्तिस्सम्भवति तद्व्याप्यतत्तत्कारणाऽव्यव-हितोत्तरत्वविशिष्टाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छि-न्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नकार्योत्पादकतत्तदाकाङ्क्षाज्ञानादिसामग्र्या अभा-वान्नीलस्य घट इत्यत्र नापत्तिः । ननु सामग्रीत्वस्य जात्यखण्डोपाध्यतिरिक्ततयाऽनुग-ताऽनतिप्रसक्तरूपताया अभावेन च विशेष्य तत्तत्कारणकूटस्यैव प्रवेशनीयतया एककार-णकूटस्य प्रयोजकत्वेऽपरकारणकूटाजायमानशाब्दबोधस्थले व्यभिचारेण सकलकारण-कूटस्य प्रयोजकत्वेऽप्रसिद्धता च व्याप्यधर्मावच्छिन्नकार्योत्पादकतत्तत्कारणकूटान्यतम-त्वेनैव सामान्यधर्मावच्छिन्नकार्योत्पत्तौ प्रयोजकताया उपगन्तव्यतया प्रथममेवान्यत-मत्वेनैव कार्यकारणभावोऽस्तु अलमव्यवहितोत्तरत्वनिवेशेन 'अन्ते रण्डाविवाहश्चेदा-दावेव कुतो न ही'तिन्यायात् ।

सूक्ष्मवेत्तारस्तु—

तद्धर्मावच्छिन्नकार्यतापादने तत्तदाश्रयव्यक्तिनिष्ठकार्यतानिरूपितकारणतावदाका-ङ्क्षाज्ञानस्य कारणत्वेन नैवास्यापत्तिरिति तत्त्वमाहुः । किञ्च अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्द-बुद्धित्वनिष्ठपर्याप्तापर्याप्ताऽसाधारणावच्छेदकतानिरूपितावच्छेद्यतावत्कार्यतानिरूपितका-रणतावदाकाङ्क्षाज्ञानस्यैव कारणत्वान्नापत्तिरितिवर्णनात् । ननु सर्वेषामाकाङ्क्षाज्ञानाना-मन्यतमत्वेनैव कारणत्वमस्तु किमव्यवहितोत्तरत्वनिवेशेनेति चेन्न ? अन्यतमत्वस्य एकभेदविशिष्टाऽपरभेदविशिष्टाऽपरभेदविशिष्टान्यत्वरूपतया कारणतावच्छेदककोटौ जग-तः प्रवेशेन समस्तजगत्कारणतावच्छेदकत्वकल्पनापत्तौ गौरवात् । तत्प्रतियोगिकभेद-विशिष्टैतत्प्रतियोगिकभेदविशिष्टैतत्प्रतियोगिकभेदविशिष्टैवं रूपेण तत्प्रतियोगिकभेदवि-शिष्टतत्प्रतियोगिकभेदविशिष्टतत्प्रतियोगिकभेदविशिष्टैवं रूपेण वा अवच्छेदकत्वमिति विनिगमनाविरहेण कारणतावच्छेदकत्वबाहुल्यापत्तेश्च । उभयाऽभावमादाय पर्याप्त्या-दिनिवेशस्याप्यावश्यकत्वेनात्यन्तगौरवाच्च । न च भेदकूटावच्छिन्नप्रतियोगिताकभेद-त्वमेवान्यतमत्वमितिभेदे भेदवैशिष्ट्यानवगाहनान्न विनिगमनाविरहप्रयुक्तकारणताव-च्छेदकानन्त्यमिति वाच्यम् ? तावताऽपि जगतत्प्रवेशत्वेन गौरवस्य दुरुद्धरत्वात् । अन्यतरान्यतमशब्दावव्युत्पन्नौ रूढावितिवर्णनेन काऽपि हानिः । यदि च अन्यतमत्वं

व्यवहितपूर्ववर्तिनीलादिपदत्वं नीलादिपदाव्यवहितोत्तरवर्तिघटादिपद-
त्वं वा आकाङ्क्षा। उक्तस्थले च तादृश्या एकस्या अप्याकाङ्क्षाया विर-

---

भेदकूटाऽभाव एवेति न जगत्प्रवेश इति मन्यते। किञ्च यत्र नीलो घट इत्याद्याका-
ङ्क्षाज्ञानघटितसामग्री तत्र समानविषयकप्रत्यक्षसामग्रीसत्त्वेन तत्तदाकाङ्क्षाज्ञानाधीन-
शाब्दबोधेच्छाया एवोत्तेजकतया तादृशेच्छाविरहविशिष्टसमानविषयकप्रत्यक्षसामग्र्य-
भावविरहकृतान्यतमत्वेनाकाङ्क्षाज्ञानानां कारणत्वस्योपगन्तव्यतया नीलौ घटावित्या-
द्याकाङ्क्षाज्ञानघटितसामग्रीकालेऽपि नीलो घट इत्याद्याकांक्षाज्ञानाधीनशाब्दबोधेच्छायां
सत्यां समानविषयकप्रत्यक्षसामग्रीसत्त्वेऽपि शाब्दबोधापत्तेः। मम तु तत्तदाकाङ्क्षा-
ज्ञानजन्यशाब्दबोधे तत्तदाकाङ्क्षाज्ञानाधीनशाब्दबोधेच्छाविरहविशिष्टाकाङ्क्षाज्ञानाना-
मेव भेदप्रतियोगितयाऽन्यतमत्वेन प्रवेश इति तदा पूर्वोक्तरीत्या गौरवमेवा-
स्तीत्यलम्। अथ स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपकाङ्क्षाज्ञानाव्यवहि-
तोत्तरजायमानशाब्दबोधम्प्रति तत्तदाकाङ्क्षाज्ञानानां कारणत्वमेवास्तु किमभेदसम्ब-
न्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकत्वनिवेशनेना-
स्मिन्विषये पुनरपि विचारः प्रस्तूयते। नीलो घट इत्याद्याकाङ्क्षाज्ञानोत्तरमिदं ज्ञान-
मप्रमेति यत्र ज्ञानमस्ति तत्र निरुक्तशाब्दबोधवारणाय तत्तदाकाङ्क्षाज्ञानाऽव्यवहि-
तोत्तरजायमानशाब्दबोधेऽप्रामाण्यज्ञानानास्कन्दितानामेव तत्तदाकाङ्क्षाज्ञानानां का-
रणत्वस्य वाच्यतया यत्र नीलो घटः घटवद्भूतलम् इति समूहालम्बनात्मकाकाङ्क्षा-
ज्ञानाऽव्यवहितोत्तरं नीलो घट इत्यंशेऽप्रामाण्यग्रहस्तत्र तदुत्तरजायमाने घटवद्भूत-
लमित्याकारकबोधे निरुक्तशाब्दबुद्धित्वाक्रान्तत्वेनाऽप्रामाण्यज्ञानानास्कन्दितनिरुक्ता-
काङ्क्षाज्ञानानामसत्त्वेन व्यभिचारवारणाय विषयनिवेशस्यावश्यकत्वात्। निवेशिते
च तस्मिन्निरुक्तस्थले न दोषः। नीलो घट इत्याकाङ्क्षाज्ञानाव्यवहितोत्तरंजायमाना-
ग्रिमाऽभेदसम्बन्धेन नीलघटान्वयबोधम्प्रत्येव तादृशविशेषणविशिष्टकारणापेक्षायास्स-
त्त्वेन प्रकृते कार्यकारणयोरुभयोरसत्त्वेनाव्यभिचारात्। नच यत्र नीलो घट इति ज्ञानो-
त्तरन्तद्धर्मिकाऽप्रामाण्यग्रहस्तत्र शाब्दबोधानुदयेन आकाङ्क्षाज्ञानस्य तादृशशाब्दबो-
धोत्पादकत्वमेवेत्यस्योक्तत्वेन निरुक्तकारणसत्त्वेऽप्यापत्त्यभावेन तत्र शाब्दबोधवारणाय
कारणतावच्छेदककोटावप्रामाण्यज्ञानानास्कन्दितत्वनिवेशानावश्यकतया नीलो घटः
घटवद्भूतलमित्यांशिकाऽप्रामाण्यग्रहास्कन्दिताकाङ्क्षाज्ञानोत्तरजायमानघटवद्भूतलमि-
तिशाब्दबोधे कार्यकारणभावयोरुभयोस्सत्त्वेन व्यभिचाराऽप्रसिद्ध्याऽलंविषयकत्वनि-
वेशेनेति वाच्यम्। यत्र भावि ज्ञानमप्रमेतिज्ञानोत्तरं नीलो घट इति ज्ञानन्तत्राकाङ्क्षा-
ज्ञानात्तृतीयक्षणे शाब्दबोधाऽभावो भवति न द्वितीयक्षणे आकाङ्क्षाज्ञानाधिकरणप्रथ-
मक्षणेऽप्रामाण्यज्ञानास्कन्दिताकाङ्क्षाज्ञानस्यैव सत्त्वेन अप्रामाण्यज्ञानानास्कन्दितत्व-
स्य कारणतावच्छेदककोटावनिवेशे आकाङ्क्षाज्ञानद्वितीयक्षणेऽपि शाब्दबोधस्य दुरुद्ध-
रतया तद्वारणाय अप्रामाण्यज्ञानानास्कन्दितत्वस्यावश्यं वाच्यतया नीलो घटः घटवद्-

हान्नापत्तिः । कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्नोक्ताकाङ्क्षाज्ञानयोः परस्परबोधे व्यभिचारः ।

---

भूतलमितिसमूहालम्बनाकाङ्क्षाज्ञानाज्जायमानशाब्दबोधे व्यभिचारवारणाय विषयनिवेशस्यावश्यकत्वात् । नचाऽप्रामाण्यज्ञानानास्कन्दिततत्तदाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानशाब्दबोधम्प्रति अप्रामाण्यज्ञानानास्कन्दिततत्तदाकाङ्क्षाज्ञानङ्कारणमस्तु तावताऽप्युक्तस्थले कार्यकारणयोरसत्त्वेन न व्यभिचारशङ्काऽपीति किं विषयत्वनिवेशेनेति वाच्यम् ? कार्यतावच्छेदककोटावप्रामाण्यज्ञानानास्कन्दितत्वनिवेशाऽपेक्षया विषयनिवेशे सद्धर्मसद्विषयनिवेशस्य युक्तत्वात् । ननु विषयनिवेशस्य सत्त्वेऽपि नीलो घटश्श्यामो घट इति समूहालम्बनोत्तरं यत्र नीलो घट इत्यंशेऽप्रामाण्यज्ञानं तत्राऽप्यभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्य सद्धर्मसिद्धतया निरुक्तकारणस्याऽसत्त्वेन व्यभिचारादर्शनात्तद्वारणाय कार्यतावच्छेदककोटावपि अप्रामाण्यज्ञानानास्कन्दितत्वविशेषणमावश्यकम् । तथा सति कार्यकारणयोरुभयोरसत्त्वेनाऽव्यभिचार इति विषयनिवेशात्पूर्वमेवाप्रामाण्यज्ञानानास्कन्दितविशेषणङ्कार्यदलेऽपि निवेश्यतान्तावताऽपि वारणसम्भवेन किं विषयत्वनिवेशेनेति चेदिष्टापत्तेः । अत एव ग्रन्थकारेणाव्यवहितोत्तरनिवेशानन्तरमपि विषयन्निवेश्य कार्यकारणभावो न दर्शित इति ।

वस्तुतस्तु—

अव्यवहितोत्तरप्रवेशपूर्वकस्वन्तनीलपदसमभिव्याहृतघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानङ्कारणम् । एवमेव ङसन्तनीलपदसमभिव्याहृतघटपदत्वरूपाकांक्षाज्ञानाऽव्यवहितोत्तरजायमानशाब्दबोधम्प्रति ङसन्तनीलपदसमभिव्याहृतङसन्तघटपदत्वरूपाकाङ्क्षाज्ञानङ्कारणम् । कार्यदलीयविशेष्यवाचकपदे विभक्तेर्न निवेशः किन्तु विभक्त्यनिवेशपूर्वकाव्यवहितोत्तरत्वनिवेशतात्पर्येण न नीलस्य घट इत्यादावभेदसंसर्गकबोधः । स्वार्थिककप्रत्ययान्तघटितनीलस्य घटकस्येत्यादौ शुद्धघटपदत्वरूपाकाङ्क्षाज्ञानाऽभावेन शाब्दबोधानापत्तावपि प्रत्ययात्पूर्वतात्पर्यमनुरुध्य तत्राऽदोषात् ।

किञ्च शुद्धाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारता-

---

व्यभिचारस्तु—द्विविधः अन्वयव्यभिचारो व्यतिरेकव्यभिचारश्च । तत्र कारणसत्वे कार्यसत्वमन्वयः, कारणाभावे कार्याभावो व्यतिरेकः । कारणसत्वे कार्याभावोऽन्वयव्यभिचारः । कारणाभावे कार्यसत्वम् ( कार्योत्पादः ) व्यतिरेकव्यभिचारः ।

✓ :व्यभिचारशङ्का चेद् कार्यं कारणव्यभिचारि नवेत्येव सम्भवति।

यत्तु समासव्याससाधारणं विशेषणपदस्य विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमेव तादृशान्वयबोधौपयिकाकाङ्क्षा। विशेष्यवाचकपदनिष्ठविशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं च न तथा, नालघटमानयेत्यादावसम्भवादिति। तदसत्। विशेष्यवाचकपदाप्रकृतिकत्वस्य तादृशपदानुत्तरत्वस्य तदुत्तरत्वेनाप्रतिसन्धीयमानत्वरूपस्य वा नीलो घट इत्यादौ नीलादिपदसमभिव्याहृतविभक्तौ घटपदसमभिव्याहृतविभक्तिभिन्नतया सत्त्वात्।

---

निरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वनिष्ठावच्छेदकताकजन्यतानिरूपितजनकतावदाकाङ्क्षाज्ञानम्पृथगेवैतादृशाकाङ्क्षाज्ञानस्यैकजन्यतावच्छेदककत्वेन योग्यताज्ञानादिसहकारित्वस्यावश्यकतया तदभावान्नीलस्य घट इत्यादौ नाऽभेदान्वयबोध इति।

किञ्च स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकांक्षाज्ञानेतरावन्तनीलपदसमभिव्याहृतावन्तघटपदत्वादिरूपाकाङ्क्षाज्ञानानुत्तराऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधम्प्रति स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानङ्कारणम् इत्यादिकार्यकारणभावेन नीलस्य घट इत्यादावदोष इति।

वस्तुतस्तु—

तद्विषयकप्रवृत्तिम्प्रति तद्विषयकेष्टतावच्छेदकावच्छिन्नसाधनताज्ञानं कारणमितिनियमः। इदम्मदिष्टसाधनम् इदम्मत्कृतिसाध्यम् बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनमिति न कलञ्जम्भक्षयेत् इत्यादि। अत्र नीलघटान्वयबुद्धिरभेदसंसर्गेणेष्टा। नीलघटान्वयबुद्धित्वावच्छिन्नविशेष्यकेष्टत्वप्रकारज्ञाने सति अभेदसंसर्गकनीलत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकबुद्धित्वावच्छिन्ननिरूपितसाधनताज्ञानसत्त्वान्नीलो घट इतवाक्यप्रयोगः। यदि कार्यतावच्छेदककोटौ विषयत्वप्रवेशो न स्यात्तर्हि अभेदसंसर्गकनीलत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकशाब्दबोधत्वावच्छिन्नजनकन्नीलो घट इतिवाक्यमेतादृशेष्टतावच्छेदकावच्छिन्ननिरूपितसाधनत्वज्ञानाऽभावात्प्रवृत्तिम्प्रति तस्यैव कारणत्वादभेदसंसर्गकनीलप्रकारकघट इतिवाक्यन्न प्रयोक्तव्यमित्यस्याऽपि वक्तुं शक्यत्वेनाऽभेदसंसर्गकनीलप्रकारकघटविशेष्यकशाब्दबोधो न स्यादतो विषयत्वप्रवेश आवश्यक इति सिंहावलोकितम्।

यत्तु समासव्याससाधारणमिति—

अयम्भावः, मूलोक्तरीत्या विशेष्यवाचकम्पदं घटपदन्तदप्रकृतिका विभक्तिर्द्वितीयादिविभक्तिस्तदप्रकृतित्वं विशेषणवाचकनीलेऽस्ति। नीलघट इति समस्तवाक्येऽपि

---

प्रवृत्तिश्च द्विविधा भवति संवादिनी (सफला) विसंवादिनी (निष्फला) भेदात्। प्रवृत्तौ च इष्टसाधनत्वप्रकारकं कृतिसाध्यत्वप्रकारकं बलवदनिष्टाजनकत्वप्रकारकज्ञानञ्च कारणम् भवति। अत एव क्रमेण जलताडने सुमेरुश्रृङ्गाहरणेऽतिक्षुधितेऽपि मधुविषसम्पृक्तान्नभोजने च न प्रवृत्तिः।

अथ विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्य विवक्षणान्न दोष इति चेत्तर्हि?

विभक्तित्वादिकमजानतः पुरुषस्य तादृशधर्मज्ञानासम्भवाच्छाब्दबोधानुपपत्तिः ।

---

विशेष्यवाचकपदं घटपदं तदप्रकृतिका विभक्तिर्द्वितीयादिविभक्तिस्तदप्रकृतित्वन्नीलपदे इति विरुद्धविभक्तिराहित्यमेव । समासव्याससाधारणनीलादिप्रकारकाऽभेदसंसर्गकघटविशेष्यकान्वयबोधजनिकाकाङ्क्षा । तथा च नीलस्य घट इत्यादौ विशेष्यवाचकघटपदाऽप्रकृतिका विभक्तिः षष्ठीविभक्तिस्तत्प्रकृतित्वमेव नीलपदेऽतो न नीलस्य घट इति वाक्यान्नीलप्रकारकघटविशेष्यकशाब्दबोधः ।

विशेष्यवाचकपदोत्तरावृत्तिविभक्तीति—

समासव्याससाधारण्येन नीलो घटः नीलघट इत्यादौ विशेष्यवाचकपदं घटपदन्तदुत्तरा सुविभक्तिस्तदवृत्तिविभक्तिविभाजकधर्मो द्वितीयात्वादिस्तद्धर्मवत्योऽमादिविभक्तयस्तद्राहित्यमुभयत्र वर्त्तते इति साकाङ्क्षत्वम् । नच प्रकृतोदाहरणे विशेष्यवाचकं घटपदन्तदुत्तरत्वन्तु घटं घटेन घटात् घटस्येत्यादौ सर्वविभक्तीनान्तन्निरूपितवृत्तित्वमेव विभक्तिविभाजकद्वितीयादीनामतो विशेष्यवाचकपदोत्तराऽवृत्तिविभक्तिविभाजकधर्माऽप्रसिद्धिः । विभक्तित्वस्य सुप्तिङ् साधारणत्वेन सुत्वादीनां विभक्तिविभाजकत्वाऽप्रसिद्धिश्च, प्रतिवाक्यं विशिष्यतात्पर्यानुरोधेनाकाङ्क्षा कल्प्यते चेत्तर्हि "प्रत्युच्चारणं शब्दो भिद्यत" इतिसिद्धान्तेनाननुगतत्वप्रसङ्ग आकाङ्क्षानन्त्यापत्तिश्चेति कथं ग्रन्थसङ्गतिरिति विशेषप्रश्नः ? नीलादिविशेषणपदे घटादिविशेष्यपदवत्त्वमाकाङ्क्षेति तात्पर्यात् । घटादिविशेष्यपदवत्त्वञ्च केन सम्बन्धेनेति चेत् स्वाऽभाववत्त्वसम्बन्धेनेति । अत्राऽभावश्च किंसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्य इति चेत् ? स्वोत्तराऽवृत्तिविभक्तिविभाजकधर्मवद्विभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्तथाच यद्घटपदवत्त्वन्नीलेऽभिप्रेतन्तद्घटपदव्यक्त्युत्तरविभक्तेरेव सम्बन्धघटकत्वेनान्यघटव्यक्तिमादाय दोषस्याननुसृतत्वात् । एवञ्च नाऽप्रसिद्धिर्नाप्यननुगतत्वं स्वशब्देनेष्टधारणात् ।

विभक्तित्वादिकमजानत इति—

यस्य 'विभक्तिश्चे'तिसूत्रज्ञानन्नास्ति तस्यापि शाब्दबोधो भवति स न स्यात् । स्वोत्तराऽवृत्तिधर्मवदिति तु न योग्यं नीलो घट इत्यादौ नीलपदोत्तरविभक्तिगततद्व्यक्तित्वस्य घटपदोत्तरविभक्तावसत्त्वेनाकाङ्क्षानापत्तेः । नच विशेष्यवाचकपदोत्तराऽवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म इत्येवोच्यतान्तद्व्यक्तित्वस्य श्रावणप्रत्यक्षविषयतावच्छेदकत्वाऽभावेन तदादाय दोषाऽभाव इति वाच्यम् ? नीलो घट इत्यत्र विशेष्यवाचकघटपदोत्तरं विसर्गस्तदवृत्तिर्धर्म उत्वगुणनिष्पन्नमोत्वन्तस्य नीलपदोत्तरविभक्तिवृत्तित्वेन निराकाङ्क्षत्वापत्तेर्श्रौव्यतरत्वाच्छाब्दबोधानापत्तेः । अत एव विभक्तित्वा-

नीलो घट इत्यादावपि सुपदस्याम्पदत्वादिभ्रमदशायां तादृशबोधस्यानुदयात् । नीलस्य घट इत्यादावपि षष्ठ्यादेः सुपदत्वादिभ्रमदशायां शाब्दबोधोत्पत्त्या स्वरूपतो विरुद्धविभक्तिराहित्यस्याप्रयोजकत्वात् ।

---

दिकमित्यत्रादिपदोपादानं ग्रन्थकृतस्सङ्गतम् । विभक्तिराहित्येत्यत्र विभक्तिपदोपादानन्तु निरर्थकमिवाभाति मूल इत्यलमधिकेन ।

स्वरूपतो विरुद्धविभक्तिराहित्यस्याऽप्रयोजकत्वादिति—

वस्तुतस्तु विशेष्यवाचकपदविशिष्टश्रावणप्रत्यक्षविषयतावच्छेदकधर्मप्रकारकज्ञानविषयाऽप्रकृतित्वमेव विरुद्धविभक्तिराहित्यन्तज्ज्ञानस्यैवाभेदान्वयबोधजनकत्वम् । वैशिष्ट्यञ्च स्वाऽव्यवहितोत्तरावृत्तित्वस्वाऽवृत्तित्वैतदुभयसम्बन्धेन । नीलो घट इत्यत्र नीलपदे सुप्रकृतित्वेऽपि घटपदविशिष्टश्रावणप्रत्यक्षविषयतावच्छेदकङस्त्वादिधर्मप्रकारकज्ञानविषयीभूतङसादिप्रत्ययाऽप्रकृतित्वेन नीलघट इत्यत्राऽपि तथा सत्वेनाभीष्टसिद्धिः । नीलस्य घट इत्यादौ घटपदविशिष्टश्रावणप्रत्यक्षविषयतावच्छेदकधर्मप्रकारकज्ञानविषयङस्प्रकृतित्वस्यैव विद्यमानत्वेनाक्षतेः । नचैवमपि घटस्य रूपं घटरूपं नीलञ्च तद्घटरूपन्नीलघटरूपमित्यादौ अभेदान्वयबोधो न स्यात् तत्र विशेष्यवाचकम्पदं रूपपदन्तद्विशिष्टश्रावणप्रत्यक्षविषयतावच्छेदकधर्मो घटत्वन्तत्प्रकारकज्ञानविषयघटप्रकृतित्वस्यैव सत्त्वात् समासविषयिका या आकाङ्क्षा विशेष्यवाचकपदाऽव्यवहितपूर्ववर्त्तिविशेषणवाचकपदत्वरूपा तस्या अप्यत्र प्रवृत्तिस्तथाहि, विशेष्यवाचकन्तु रूपपदमेव तत्रैव नीलपदार्थस्यान्वयः । एवञ्च घटपदेन व्यवधानान्न समासीयाकाङ्क्षाप्रवृत्तिरिति वाच्यम् ! तत्र नीलपदाव्यवहितोत्तरघटपदाव्यवहितोत्तररूपपदत्वरूपाकांक्षाज्ञानङ्कारणमिति विलक्षणाकाङ्क्षाज्ञानस्य भिन्नस्य स्वीकारेण तत्राऽभेदान्वयसौष्ठवात् ।

ननु प्रशस्तः पाचक इतिविग्रहे प्रशंसायां रूपप्प्रत्यये पाचकरूप इति तत्र सुन्दरपदसम्बन्धे सुन्दरः पाचकरूप इत्यादौ सुन्दरपदार्थस्य पाचकपदार्थ एवान्वयस्सर्वानुभवसिद्धो नतु रूपप्प्रत्ययार्थविशिष्टे पाचकपदार्थे स्वन्तसुन्दरपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानेन सुन्दरो घट इत्यादिस्थलीयाकाङ्क्षाज्ञानस्याऽपि न प्रवृत्तिः पाचकपदस्य केवलस्य स्वन्तत्वाऽभावात् । एवञ्च तत्र केनाकाङ्क्षाज्ञानेनाऽभेदान्वयसिद्धिरिति वाच्यम् ! सत्यमेवेति एवमेवम्प्रकारेण सुन्दरतरः पाचकरूपः सुन्दरदास्याः पुत्र इत्यादौ अलुकि उत्तरपदकर्मधारये च निरुक्ताकाङ्क्षाज्ञानस्याऽप्रवृत्त्या कथमन्वयश्चेति चेन्न ! एकेनाकांक्षाज्ञानेन न सर्वत्र शाब्दबोधोऽपि तु तत्र तत्र उक्तेषु वाक्येषु व्यभिचारवारणाय विलक्षणाकांक्षाया अन्यादृश्या एव स्वीकारेण दोषपरिहारात् । नच नीलो घट इत्यत्रैव सुपदे ङस्त्वभ्रमे ङस्त्वप्रकारकान्यदीयं भ्रममादायाऽपि वाऽभ्रान्तस्याऽपि पुरुषस्य शाब्दबोधो न स्यात् । किञ्च नीलस्य घट इत्यत्रैव ङसि प्रत्यये सुत्वप्रकारकान्यदीयभ्रममादायाभ्रान्तस्य पुरुषस्याऽनिष्टोऽपि शाब्दबोध-

स्यादिति वाच्यम्? विशेष्यवाचकपदविशिष्टविशेषणवाचकपदत्वरूपाकांक्षाज्ञानमेव शाब्दबोधे कारणम्। वैशिष्ट्यञ्च स्वविशिष्टो यस्तदव्यवहितपूर्वत्वाभाववत्त्वसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यञ्च स्वेतरत्वस्वाऽव्यवहितोत्तरवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्माभाववत्त्वमित्युभयसम्बन्धेन। समन्वयश्च समासव्याससाधारण्येन नीलघटः नीलो घट इत्यादौ उभयसम्बन्धेन घटपदविशिष्ट उदासीनः पटादिस्तन्निरूपिताऽव्यवहितपूर्वत्वाऽभाववत्त्वस्य नीले विद्यमानत्वेन शाब्दसिद्धिः। नीलस्य घट इत्यादौ तु उभयसम्बन्धेन घटविशिष्टङसव्यवहितपूर्वत्वेन वर्त्तमानत्वान्न शाब्दबोधः। नीलो घट इत्यादौ सुप्रत्यये ङस्त्वभ्रमे तादृशाकांक्षाज्ञानाऽभावान्न शाब्दबोधः। नीलस्य घट इत्यादौ ङसि सुप्रत्ययभ्रमे तु तादृशाकांक्षाज्ञानस्य सत्त्वान्नानुपपत्तिरेवञ्च समासव्याससाधारण्येनाकांक्षाज्ञानकार्यकारणभावे बहुतरलाघवमित्यलम्। नच नीलस्य घट इत्यत्र 'सुपां सुलुगि''तिसूत्रेण ङसस्स्वादेशे नीलो घट इति जाते तत्र स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकांक्षाज्ञानस्य विद्यमानत्वेन कारणान्तरस्याऽपि जागरूकत्वेन च शाब्दबोध आपतेदिति वाच्यम्? तत्र तात्पर्यज्ञानस्याऽपि कारणत्वेन तदभावात्तत्राऽभेदान्वयविषयकबोधाऽप्रतीतेः। नच कस्यचिदुपेक्षकस्य यदि तादृशबोधे तात्पर्यं स्यात्तदा बोधः कथन्नेति वाच्यम्? षष्ठ्यर्थाऽसंघटनात्। नच राहोश्शिरः नाम्नोर्द्वयमित्यादौ पातञ्जलभाष्योक्तप्रयोगे व्यपदेशिवदेकस्मिन्निति परिभाषामूलके राहुभिन्नं शिरः नामाऽभिन्नं द्वयमितिबोधानुरोधेनाऽभेदोऽपि षष्ठ्यर्थः। एवञ्च "सुपां सुलुगि"ति स्वादेशेऽपि स्थानिनामेव वाचकत्वमितिपक्षमनुसृत्याऽभेदः षष्ठ्यर्थ इति। स्वादेशस्य छान्दसत्वेन नीलस्य घट इति वाक्यस्य लौकिकत्वेन वारणे तु स्वातन्त्र्येण नीलस्य घट इत्यत्राऽभेदः षष्ठ्यर्थ इति अभेदान्वयविषयकश्शाब्दबोधस्स्यादिति वाच्यम्? पातञ्जलभाष्यप्रयोगात्तत्राऽभेदस्य षष्ठ्यर्थत्वेऽपि सर्वत्र तथा व्यवहारे प्रमाणाऽभावात्। किञ्चाऽभेदस्य षष्ठ्यर्थत्वे नीलो घट इत्यत्राऽपि षष्ठ्यापत्तिश्च। नच प्रातिपदिकार्थसूत्रविषये षष्ठीविधाने तस्य वैयर्थ्यापत्तिरिति वाच्यम्? अर्थानुरोधेन स्वविषये तस्य चारितार्थ्यात्। तथा च नीलस्य घट इत्यादावभेदस्य षष्ठ्यर्थत्वेनाभेदान्वयविषयकशाब्दबोधे न किञ्चिद्बाधकमिति सरयूपारीणशुक्लाः। अत एव नीलो घट इत्यादौ विशेषणविभक्तेरभेदार्थकत्वे यद्यप्युक्तरीत्या लाघवं सम्भवति तथापि तत्रापि न नो विद्वेष इति गदाधरोक्त वक्ष्यमाणमूलं सङ्गच्छते। किञ्च सुविभक्तिमारभ्य सुप्पर्यन्तयावद्विभक्तिषु अभेदार्थकत्वे स्वीकृते षष्ठ्येवापराधिका यस्या अभेदो नार्थ-

---

तात्पर्यज्ञानमपि शाब्दबोधे कारणम्—स्वप्रयोज्योच्चारणकर्मत्वसम्बन्धेन यादृशवाक्यविशेष्यकं वक्तुरिच्छारूपतात्पर्यज्ञानम्भवति तत् तादृशवाक्यजन्यशाब्दबोधे कारणमिति नियमः। 'यत्संशयव्यतिरेकौ यदुत्पत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुः, अनुमितौ व्याप्तेरिव' इति चिन्तामणिकारीयसिद्धान्तानुसारेण तात्पर्यसंशये व्यतिरेकनिश्चये वा शाब्दबोधानुदयात् शाब्दबोधे तात्पर्यज्ञानस्य हेतुता। 'वक्तुरिच्छा तु तात्पर्यम्परिकीर्त्तितम्' का०।

**अथ नीलो घटः नीलघट इत्यादिद्विविधबोधसाधारणं स्वोत्तरसुपद-भिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसम्बन्धेन नीलादिपदवत्सुबन्तघटादिपदत्वमेव तथास्त्विति चेन्न ?**

---

इति वक्तुं शक्यते सचापराधो विशेषतश्शिष्टविरोधो वा प्रदर्श्यताम्। एवञ्च विनिगमनावैकल्येन षष्ठ्या अभेदार्थकत्वं निर्विवादमिति नीलस्य घट इत्यादावपि अभेदान्वयबोधो भवत्येवेति गदाधरोक्तिः कथमिति विचारयन्तु धीधना इति शास्त्रार्थकलाकाराः।

उच्छृङ्खलास्तु—

विशेष्यस्यैव यल्लिङ्गं विभक्तिवचने च ये।
तानि सर्वाणि योज्यानि विशेषणपदेष्वपि ॥
या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः।
प्रायस्ता एव कर्त्तव्यास्समानार्थे विशेषणे ॥

इत्युक्तिभ्यां व्यवहारबलेन च नीलस्य घट इतिप्रयोग एव न भवति। असति विशेषानुशासने समानवचनकत्वनियमाद् वेदाः प्रमाणमत्र तु "वेदाः प्रमाणं स्मृतयः प्रमाणमि"ति महाभारतीयशिष्टप्रयोग एव विशेषानुशासनरूप इति वदन्ति।

**अथ नीलो घट इति स्वोत्तरेति—**

स्वोत्तरस्वादिभिन्नं यत्पदं तदुत्तरं यत् तद्भिन्नत्वविशिष्टं यत्स्वोत्तरत्वादि तद्रूपेत्याशयः। समन्वयश्च नीलो घट इत्यत्र स्वपदेन नीलपदस्य ग्रहणं स्वं नीलपदन्तदुत्तरस्वादिभिन्नम्पदं घटपदन्तदुत्तरं यद्वस्तु तद्भिन्नत्वं घटपदे तद्विशिष्टं स्वपदग्राह्यनीलपदन्तदुत्तरत्वमपि घटपद इति तद्रूपेति। समासस्थले नीलघट इत्यत्राऽपि स्वन्नीलपदन्तदुत्तरं स्वादिभिन्नं पदं घटपदन्तदनुत्तरत्वञ्च स्वन्तघटपदेऽस्त्येव। तथैव स्वोत्तरत्वमपीति स्वरूपनीलपदवत्स्वाद्यन्तघटपदत्वरूपाकांक्षोभयसाधारण्येन अभेदसंसर्गकनीलप्रकारकघटविशेष्यकबोधप्रयोजिकेति तत्त्वम्। ननु स्वोत्तरपदानुत्तरत्वविशिष्टेत्येवोच्यतां स्वादिभिन्नेतिपदविशेषणङ्किमर्थमिति चेन्न ? नीलो घट इत्यत्र स्वन्नीलपदन्तदुत्तरं पदं सु इति शक्तम्पदमिति नियमात्। तदुत्तरत्वस्यैव घटपदे सत्त्वेनाकांक्षाज्ञानाभावाच्छाब्दबोधो न स्यात् इत्यभिधानात्। ननु स्वोत्तरस्वादिभिन्नपदानुत्तरत्वसम्बन्धेन नीलादिपदवन्मात्रमाकांक्षाज्ञानङ्कारणमित्येवास्तु किमितोऽधिकनिवेशेनेति चेन्न ? केवलनीलपदेऽपि नीलाकांक्षाप्रसक्तेः। नच स्वोत्तरस्वादिभिन्नपदानुत्तरत्वासम्बन्धेन नीलादिपदवत्स्वाद्यन्तघटपदत्वमात्रमाकांक्षाज्ञानङ्कारणमित्येवास्तु किं विशेषणे स्वोत्तरत्वनिवेशेनेति वाच्यम् ? केवलस्वाद्यन्तघटपदेऽपि स्वपदेन गृह्यमाणोदासीननीलपदोत्तरस्वादिभिन्नपटमठाद्यनुत्तरत्वसत्त्वेन केवलस्वन्तघटपदेऽपि नीलाकांक्षापत्तिप्रयुक्तशाब्दबोधनिवारणार्थन्तस्यावश्यकत्वात्। नन्वेवं विशिष्टाकांक्षास्वीकारे नीलस्य घट इत्यत्राऽपि दोषस्तथाहि, ङसस्स्वादित्वेन स्वोत्तरस्वादिभिन्नपदानुत्तरत्वविशिष्ट-

नीलघटरूपमित्यादिवाक्यसाधारण्यानुरोधेनान्यादृश्या अपि आकाङ्क्षायाः समासस्थले उपगन्तव्यतया उपदर्शितसमासव्याससाधारणानुगताकाङ्क्षानुसरणस्याप्रयोजकत्वादिति ।

---

स्वोत्तरत्वरूपस्वाऽव्यवहितोत्तरत्वसम्बन्धेन नीलपदवत्स्वाद्यन्तघटपदत्वमस्त्येवेति चेन्न ? समानविभक्तिकत्वविशिष्टतत्तदाकांक्षाज्ञानस्य कारणत्वेनोक्तस्थले विरुद्धविभक्तिकत्वेनाक्षतेः । नन्वेवमपि सुन्दरन्दधि पश्यतीत्यत्र विशेष्यवाचकामन्तदधिपदस्याऽसत्त्वेन कथमाकांक्षाज्ञानमिष्टञ्जनयेदिति चेन्न ? स्वाद्यन्तेत्यस्य स्वाद्यव्यवहितपूर्ववृत्तित्वेनानुसन्धीयमानेत्यर्थविधानेन दधिशब्दोत्तरामोऽनुसन्धानेन लुप्तव्यवहारस्मृत्या स्वन्तदधिपदसत्त्वेनाऽदोषात् ।

इति परीक्षालेखप्रकारः ।

---

**नीलघटरूपमित्यादिवाक्यसाधारण्यानुरोधेनेति—**

ननु नीलघटरूपमित्यत्र कियन्तो विग्रहास्सम्भवन्ति वाक्यसिद्धिश्च कथमिति प्रकारास्तथाहि नीलश्चासौ घटो नीलघटस्तस्य रूपमिति कर्मधारयपूर्वपदकषष्ठीतत्पुरुषः, नीलाऽभिन्नो यो घटस्तत्सम्बन्धि रूपमिति फलितार्थः । परन्त्वस्मिन्कल्पे निपातातिरिक्तप्रातिपदिकार्थयोस्साक्षाद्भेदसम्बन्धेनान्वयोऽव्युत्पन्न इति सिद्धान्तेन न भेदान्वयोऽभेदान्वयश्च विरुद्धविभक्तिकत्वान्नेति प्रथमः प्रकारः । घटस्य रूपं घटरूपम् नीलञ्च तद् घटरूपमिति नीलघटरूपमिति षष्ठीतत्पुरुषोत्तरपदककर्मधारयो नीलाभिन्नघटसम्बन्धि रूपमिति शाब्द इति द्वितीयः प्रकारः । प्रशस्तो घटो घटरूपम्प्रशंसायां रूपप्प्रत्ययः । नीलश्चासौ घटरूप इति नीलघटरूपस्तन्नीलघटरूपमिति द्वितीयान्तम्पदम् । नीलाभिन्नप्रशस्ताऽभिन्नघटनिष्ठकर्मतानिरूपकदर्शनमितिशाब्दबोध इति तृतीयः प्रकारः । नीलश्चासौ घट इति नीलघटः प्रशस्तो नीलघट इति विग्रहे रूपप्प्रत्यये नीलघटरूपमित्यपि द्वितीयान्तपदम्, प्रशस्ताऽभिन्नो यो नीलाभिन्नो घटस्तन्निष्ठकर्मतानिरूपकन्दर्शनादिक्रियावाचकम्पदमिति चतुर्थः प्रकारः, नीलघटं रूपयतीति नीलघटरूपमिति रूपक्रियायाम् रूप इतिधातुः इति पञ्चमः प्रकारः । प्रथमकल्पे घटपदस्य घटीये लक्षणाङ्कृत्वाऽन्वयार्हत्वेऽपि पदार्थः पदार्थेनान्वेतीतिन्यायेन नीलपदार्थस्य घटीयैकदेशेऽन्वयानुपपत्तेः । द्वितीयकल्पेऽन्यादृशी आकाङ्क्षैव योग्येतिवर्णनात् । तृतीयचतुर्थकल्पयोरपि विलक्षणाकांक्षाज्ञानस्यैवानुसर्त्तव्यत्वात् कथमनुपपत्त्याख्यमूलग्रन्थसङ्गतिरितिचेन्न ? घटशब्दस्य घटीये लक्षणा, लाक्षणिकेन घटशब्देन साकन्नीलशब्दस्य कर्मधारयः नील-

---

लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ( का० ) इतिरीत्या यत्र शक्त्या न निर्वाहसम्भवस्तत्र लक्षणयैव बोधोऽवगम्यते । सा च लक्षणा जहत्स्वार्थाऽजहत्स्वार्थभेदेन द्विविधा । आद्या गङ्गायां घोष इत्यादौ' द्वितीया छत्रिणो यान्तीत्यादौ । स्वाशक्यवृत्तिधर्मावच्छिन्नबोधिका लक्षणा जहत्स्वार्थेति कथ्यते । स्वशक्यस्वाशक्योभयवृत्तिधर्मावच्छिन्नबोधिका लक्षणा ऽजहत्स्वार्थेति । वेदान्तिनस्तु तृतीयामप्येको जहदजहत्स्वार्थलक्षणामङ्गीकुर्वते । लक्षणायान्तात्पर्यानुपपत्तिरेव मूलम्, येतु अन्वयानु-

अथ नीलं घटमानयेत्यादौ नीलादेर्घटादावन्वयोपगमे नीलादिप-

घटशब्दस्य च रूपशब्देन साकं कर्मधारयः। कर्मधारयसमासद्वयकरणेनाभेदेन नीलविशिष्टं यद्घटीयमभेदेन तद्विशिष्टं रूपमिति शाब्दबोधः। एवञ्च विशेषणवाचकनीलपदस्य स्वोत्तरसुभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वसम्बन्धेन घटपदे सत्त्वेऽपि लुग्विधानेन घटपदस्य स्वन्तत्वाऽभावादेतदाकाङ्क्षाज्ञानाऽप्रवृत्त्या समासस्थले चान्यादृश्या आकाङ्क्षाया आवश्यकत्वेनोभयसाधारणाकाङ्क्षाज्ञानस्यानुपपत्तिप्रवर्त्तकत्वेन ग्रन्थसङ्गतिरित्याशयात्।

अप्रयोजकत्वादिति—

वस्तुतस्तु स्वविशिष्टसुप्पूर्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाऽभावविशिष्टस्वपूर्वत्वरूपस्वाऽव्यवहितपूर्वत्वसम्बन्धेन सुप्प्रत्ययान्तनीलादिपदसमभिव्याहृतघटादिपदत्वरूपाकाङ्क्षाज्ञानङ्कारणमित्येव कार्यकारणभावः। प्रथमवैशिष्ट्यञ्च स्वप्रकृतिकत्वस्वप्रयोज्याऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकपदोत्तरस्वादिवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्माऽभावप्रकारकज्ञानविषयत्वमित्युभयसम्बन्धेन। द्वितीयवैशिष्ट्यञ्च स्वप्रयोज्याऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकपदप्रकृतिकत्वस्वोत्तरस्वादिवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्माऽभावप्रकारकज्ञानविषयत्वमित्युभयसम्बन्धेन। तथाच नीलो घटः घटो नील इत्यादिसुप्रत्ययान्ते ङस्त्वभ्रमे ज्ञानघटितसम्बन्धसत्त्वान्न शाब्दबोधः। नीलस्य घटः घटो नीलस्येत्यत्र च ङस्प्रत्यये सुत्वभ्रमदशायाञ्चाभीष्टश्शाब्दबोधस्सिद्ध्यति। एवञ्च समासव्याससाधारण्येनैकमेवाकाङ्क्षाज्ञानङ्कारणं शाब्दबोध इति न पार्थक्येन कार्यकारणभाव इति मैथिलाः।

अथ नीलं घटमानयेति—

अत्र नीलपदार्थस्य घटपदार्थेऽन्वयस्य प्रकरणतात्पर्यबलेन सर्वानुभवसिद्धतया प्रत्य-

---

पपत्तिमात्रन्तन्मूलमित्यभिदधति ते यष्टीः प्रवेशय काकेभ्यो दधि रक्ष्यतामित्यादौ अन्वयानुपपत्त्यभावेन लक्षणाभावेऽनिष्टमियैव पराभूताः। यत्र हि विशिष्टवाचकश्शब्दस्स्वार्थैकदेशं विहाय एकदेशे वर्त्तते तत्र जहदजहल्लक्षणेति। यथा सोऽयन्देवदत्तः तत्वमसि इत्यादौति विशिष्टन्द्रष्टव्यं वेदान्तपरिभाषायामागमपरिच्छेदे।

घटशब्दस्य घटीये लक्षणेति—ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेनैव कारणतायास्स्वीकारात् लाक्षणिकस्य कथं शाब्दबोधे प्रवेश इति चेदत्रोच्यते। तथा सत्यपि लाक्षणिकपदसमभिव्याहृतं यच्छक्तम्पदन्तदेव लाक्षणिकपदस्मारितलक्ष्यार्थविषयकशाब्दबोधजनकमिति व्याख्यानेनादोषात्।

केचित्तु—तात्स्थ्यात् तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च।
तत्साहचर्यात्तादर्थ्याज् ज्ञेया वै लक्षणा बुधैः॥ इति॥

वस्तुतस्तु प्रसिद्धाप्रसिद्धशक्तिभ्यामेव निर्वाहे लक्षणा नैवादर्त्तव्येति शाब्दिकम्मन्याः।

योग्यतेति—एकपदार्थेऽपरपदार्थवत्वमेव योग्यता तज्ज्ञानञ्च शाब्दबोधजनकम्, अत एव वह्निना सिञ्चतीत्यादौ शाब्दबोधो न भवति। नव्यास्तु अयोग्यतानिश्चयस्य प्रतिबन्धकतां स्वीकृत्यैव निर्वाहे योग्यताज्ञानन्न शाब्दबोधे हेतुः। वस्तुतस्तु अयोग्यतानिश्चयत्वेन प्रतिबन्धकत्वमयुक्तमिति दिनकरीयरामरुद्रीययोर्द्रष्टव्यम्।

दोत्तरविभक्त्यर्थकर्मत्वादेः कुत्रान्वय' इति चेत् ? न कुत्रापि। विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते। अभेद एव वा विशेषणविभक्तेरथः अभेदस्य संसर्गमर्यादया भानं तु समासस्थल एव। तत्र लुप्तविभक्त्यनुसन्धानं विनापि शाब्दबुद्धेरानुभविकत्वादित्यपि वदन्ति। अथैतन्मते अभेदो यदि भेदत्वावच्छिन्नाभावस्तदा ऽप्रसिद्धिः,

यदि च भेदप्रतियोगिकोऽभावस्तदा नील जलमित्यादिवाक्यस्यापि प्रामाण्यापत्तिः ? जले द्वित्वादिना नीलभेदाद्यभावस्य सत्त्वात्।

---

यानाम्प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वमितिनियमेन नीलपदार्थान्वितकर्मत्वस्य नानयनक्रियायामन्वयो घटपदार्थान्वयीभूतस्य नीलपदार्थस्य प्रकरणाद्यनुरुद्धस्य कर्मत्वेऽप्यन्वये नीलपदार्थस्य द्विधा भानन्नीलेऽनन्वितस्य कर्मत्वस्य नानयनक्रियायामन्वयः "प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वं प्रत्ययानामि"ति नियमविरोधात्। किञ्च प्रकृत्यर्थे नीले न कर्मत्वान्वयः ? कारकाणां क्रियान्वयनियमभङ्गापत्तेः, प्रत्ययार्थस्य प्रकृत्यर्थनिरूपितविशेष्यतया भानमिति नियमविरोधाच्च। तथाच कर्मत्वस्य कुत्रान्वय इति पृच्छति कुत्रान्वय इति।

न कुत्राऽपीति—

अभेदान्वयबोधम्प्रति समानविभक्तिकत्वरूपाकाङ्क्षाज्ञानङ्कारणमितिनियमरक्षणपुरस्सरशाब्दबोधसिद्धयर्थमेव, पदसाधुत्वार्थं वा तदुपादानम्।

ननु सम्भवत्यर्थसाधुत्वे पदसाधुत्वमन्याय्यमिति व्याप्त्या पक्षान्तरमाह अभेद एव वा विशेषणविभक्तेरथं इति। ननु ग्रन्थारम्भेऽभेदस्य संसर्गमर्यादयैव भानमित्युक्तन्तत्कथं सङ्गच्छत इत्याशयेनाह—समासस्थल एवेति। व्यासस्थले तु प्रकारतयैव भानमिति भावः। ननु लुप्तविभक्तिस्मरणपूर्वकसमासेऽपि प्रकारतया भानं स्यादित्यत आह—आनुभविकत्वादिति। अत्र अभेदो नाम भेदाऽभावः भेदाऽभावघटकभेदपदार्थे नीलपदार्थस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेनान्वयः, भेदपदार्थस्य च स्वप्रतियोगिकत्वसम्बन्धेन अभावपदार्थेऽन्वयः, अभावपदार्थस्य च स्वरूपसम्बन्धेन घटपदार्थेऽन्वयः। एवञ्च नीलो घट इत्यत्र नीलनिष्ठप्रतियोगितानिरूपकभेदप्रतियोगिकाऽभावविशिष्टो घट इति फलितार्थः। प्रकारतावादिमते शङ्कते अभेदो यदीति। भेदत्वावच्छिन्नाऽभाव इति। भेदत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाऽभाव इत्यभिप्रायः। अत एव भेदत्वावच्छिन्नप्रतियोगिताकस्य नीलभेदाद्यभावस्य वस्तुतः प्रसिद्धत्वेऽपि न विरोधाऽभासः। किञ्च भेदत्वेतरधर्मानवच्छिन्नप्रतियोगिताकाऽभाव इत्यप्यर्थो वक्तुं शक्यते तेन नीलघटोभयाद्यभावस्य प्रसिद्धत्वेऽपि न त्रुटिः। अयम्भावः, भेदस्य केवलान्वयितयाऽभावाऽप्रसिद्धिरित्यर्थः। घटादीनाम्पदार्थानां पटादिपदार्थाद्भेदेन प्रतीतिः प्रसिद्धैव तद्भिन्नपदार्थभेदस्य सर्वपदार्थे प्रसिद्धत्वात्। अभावस्य प्रतियोगितावच्छेदकावच्छिन्नेन सह विरोधस्स्पष्ट एव। भेदत्वावच्छिन्नप्रतियोगि-

ताकाऽभावाऽप्रसिद्धिरिति फलति । अप्रसिद्धप्रतियोगिकाऽभावो नैयायिकैर्न स्वीक्रियते इति सिद्धान्तः । परन्तु यत्र भूतले घटो नास्तीत्यत्रैतद्भूतलवृत्तिघटकर्तृकसत्ताऽभाव इतिबोधस्तर्ह्येतद्भूतलवृत्तिघटकर्तृकसत्ताया असत्त्वेन तत्प्रतियोगिकाऽभावस्याऽप्यप्रसिद्धप्रतियोगिकत्वात्कथन्तत्र शाब्दबोधः । किञ्च घट आकाशन्न पश्यति घट आकाशन्न जिघ्रति अभाव आकाशन्न पश्यति ईश्वरस्स्वजन्म न जानाति मनो रूपन्न पश्यतीत्यादिविलक्षणप्रयोगदर्शनेनाऽप्रसिद्धप्रतियोगिकाऽभावोऽपि कथञ्चित् । ननु अप्रसिद्धप्रतियोगिकाऽभावानङ्गीकर्तृमते कथं ग्रन्थसङ्गतिरिति प्रश्नः ? घटो नास्तीत्यादौ भेदत्वावच्छिन्नप्रतियोगितानिरूपकत्वस्य प्रसिद्धत्वेन भेदत्वावच्छिन्नप्रतियोगितानिरूपकत्वस्याऽप्रसिद्धिरित्याशयात् । अत्यन्ताऽभावीयप्रतियोगितायाम्भेदत्वावच्छिन्नत्वस्याऽप्रसिद्धिरिति वर्णनात् । भेदत्वेऽत्यन्ताऽभावीयप्रतियोगिताया अवच्छेदकत्वमप्रसिद्धमिति व्याख्यानाच्च । अथ च भेदत्वावच्छिन्नाऽभावस्याऽप्रसिद्धयेकदेशप्रसिद्धिपदार्थेन साकं नैवान्वयः किन्तु घटो नास्तीत्यादौ घटादौ भेदस्य यत्किञ्चिद्भेदत्वावच्छिन्नप्रतियोगिताकत्वस्य यत्किञ्चिद्भेदे प्रसिद्धस्य अत्यन्ताऽभावेऽप्रसिद्धिरिति फलितार्थः ।

इतिपरीक्षालेखप्रकारः ।

---

अथ शास्त्रार्थप्रकारः ।

नच भेदघटैतदुभयन्नास्तीत्युभयाऽभावे भेदत्वावच्छिन्नत्वस्य प्रसिद्धिरिति वाच्यम् ? भेदत्वमात्रपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगित्वस्याऽप्रसिद्धिरित्याशयात् । ननु नह्यवयवाऽपर्याप्तस्य समुदाये पर्याप्तिरिति नियमेन भेदत्वपर्याप्ताऽपि सेति चेन्न ? भेदत्वगतैकत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगिताकाऽभावोऽप्रसिद्ध इति तात्पर्यवर्णनात् । केवलभेदो नास्तीत्यादावेवैतत्सम्भव इति क्षतिविरहः । नन्वेवमपि तत्रापि भेदत्वेन रूपेण भेदत्ववृत्तित्वेन रूपेण वा भेदत्व एव पर्य्याप्ताऽस्तीत्यापत्तिस्तदवस्थैवेति चेन्न ? भेदत्वगतैकत्ववृत्तिर्या प्रतियोगिता तादृशप्रतियोगिताकाऽभावोऽप्रसिद्ध इत्याशयः । भेदत्वगतैकत्वे वृत्तिता च प्रतियोगितायाः केन सम्बन्धेन ? स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ग्रन्थसङ्गतेस्सौष्ठवात् । ननु स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्याऽप्रसिद्धत्वेऽपि संयोगसमवायजनकत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः प्रसिद्ध इति न ग्रन्थसङ्गतिरिति चेन्न ? स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्धावेव ग्रन्थकारस्य निर्भरत्वात् ।

---

अभावज्ञाने प्रतियोगिज्ञानस्य नित्यसाकाङ्क्षत्वेन पूर्वं प्रतियोगिनो ज्ञानमावश्यकन्तच्च नाप्रसिद्धस्य सम्भवति इति अप्रसिद्धप्रतियोगिकाभावो नाङ्गीक्रियते । अत एव वन्ध्यासुताभावादेरप्रामाण्यम् । शशशृङ्गन्नास्तीतिप्रतीतेस्तु शशे शृङ्गाभाव इत्यर्थः ।

ननु स्वरूपसंयोगैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावो घटवद्भूतलन्ने-त्यादौ प्रसिद्ध इति वाढं शक्यम् ? भेदत्वगतैकत्ववृत्तिर्या स्वरूपत्वगतैकत्ववृत्तिः प्रतियोगिता तादृशप्रतियोगिताकाऽभावोऽप्रसिद्ध इति तात्पर्य्यावधारणात् । स्वरूप-त्वगतैकत्वे वृत्तिता च प्रतियोगितायाः केन सम्बन्धेन ? स्वनिरूपितससर्गतावच्छेद-कतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति नोभयस-म्बन्धावच्छिन्नप्रतियोगिताकाऽभावप्रसिद्धिरिति वर्णनात् । ननु भेदत्वेन घटो नास्ती-त्यादौ प्रसिद्धिरूपात्तधर्मस्यैव प्रतियोगितावच्छेदकत्वनियमादिति चेन्न ? स्वरूपत्वगतै-कत्ववृत्तिर्या भेदनिष्ठा प्रतियोगिता तादृशप्रतियोगिताकाऽभावाऽप्रसिद्धिरिति योजनेन प्रकृते च घटनिष्ठैव साक्षात्प्रतियोगितेत्यदोषात् । ननु भेदत्वेन भेदघटो नास्तीत्यादौ प्रसिद्धिरिति चेदत्रायञ्चित्रविशेषः । भेदत्वगतैकत्ववृत्तिर्या प्रतियोगितेत्येव मूलम् भेद-त्वगतैकत्वे वृत्तिता च प्रतियोगितायाः स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिता-कपर्य्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकाऽभावनिष्ठनिरूप्यतानिरूपितनिरूपकतावच्छे-दकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वमित्युभयसम्बन्धेनेति वि-शिष्टाभिधानात् । ननु स्वरूपत्वेन स्वरूपस्याऽप्रसिद्धत्वेऽपि स्वरूपत्वेन संयोगसम-वायावच्छिन्नः प्रसिद्धः । किञ्च स्वरूपत्वेन संयोगावच्छिन्नस्वरूपैर्भेदो नास्तीत्या-दावपि प्रसिद्धिरिति चेन्न ? स्वरूपत्वगतैकत्वे वृत्तिता च प्रतियोगितायाः केन सम्ब-न्धेन ? स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छे-दकत्वस्वनिरूपकाऽभावनिष्ठनिरूपकतानिरूपितनिरूप्यतावती या संसर्गता तादृशसंसर्ग-तावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वमित्युभयसम्बन्धेन। तत्र च द्वित्वेऽवच्छेदकतेति । ननु भेदत्वेन घटो नास्ति घटत्वेन भेदो नास्ति इति सम-नियतपदार्थे तादृशाऽभावः प्रसिद्ध इति । समनियतत्वञ्च स्वव्याप्यत्वस्वव्यापकत्व-मित्युभयसम्बन्धेन । तथा च कथं ग्रन्थसङ्गतिरिति चेन्न ? भेदत्वगतैकत्वे वृत्तिता च प्रतियोगितायाः केन सम्बन्धेनेति ? एकश्चोक्तसम्बन्धः अपरश्च स्वनिरूपितानुयोगि-त्वावच्छिन्नविशिष्टनिरूप्यतानिरूपितनिरूकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितावच्छेदकत्वमित्युभयसम्बन्धेन उत्तरस्वरूपम्बोध्यम् ।

किञ्च भेदत्वगतैकत्ववृत्तिर्योऽभाव इत्यपि व्याख्या । सम्बन्धश्च स्वनिरूपितप्रति-योगितानिरूपितानुयोगित्वविशिष्टनिरूप्यतानिरूपित निरूपकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वमित्युभयसम्बन्धेन ।

ननु न भेदत्वावच्छिन्नाभावोऽभेद इति व्याख्यायाऽप्रसिद्धिरापतेत्किन्तु भेद-

---

समनियतेति—वस्तुविशिष्टत्वं समनियतत्वम् वैशिष्टयञ्चोक्तमेव मूले । समन्वयश्च व्याप्यत्वं हि स्वाभाववदवृत्तित्वम् भेदत्वेन घटो नास्तीतिप्रतीत्यभाववत्वं घटवद्भूतलादौ तदवृत्तित्वरूपव्याप्यत्व-मपि वर्तते यत्र २ भेदत्वेन घटो नास्तीतिप्रतीतिस्तत्र २ घटत्वेन भेदो नास्तीतिप्रतीतिरिति व्यापक-त्वमप्युभयोस्समिति भवति सामनैयत्यम् ।

नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वेन नीलादिपदार्थानन्वयप्रसङ्गः। न च भेदप्रतियोगिकाभाव एव विभक्त्यर्थः, नीलपदसमभिव्याहा-

---

प्रतियोगिको नाम यत्किञ्चिद्भेदव्यक्तिप्रतियोगिकोऽभावोऽभेद इति तात्पर्यमेवञ्च नीलघटे नीलभेदो नास्तीति नीलभेदप्रतियोगिकाऽभावरूपोऽभेदस्सर्वत्र प्रसिद्ध एवेत्येतत्सर्वमभिप्रेत्याह यदि चेति। उत्तरमाह तदेति।

अत्रैव प्रसङ्गात्कथञ्चिदभावपदार्थो निरूप्यते।

द्रव्यादिषट्कान्योन्याभाववत्त्वमभावत्वम् इतिमुक्तावली। नञर्थप्रत्ययविषयत्वमभावत्वमित्युदयनाचार्य्याः। तत्र नञर्थस्य प्रत्ययो नञर्थप्रत्ययः षष्ठयर्थो विषयित्वम् नञर्थस्य तत्र निरूपितत्वसम्बन्धेनान्वयः। एवञ्च नञर्थनिरूपितविषयिताविशिष्टप्रत्ययनिरूपितविषयताश्रयत्वमभावत्वम्। अभावत्वेऽतिव्याप्तिवारणाय नञर्थोऽभा- इति विहाय पूर्वोक्तप्रकारः। अभावत्वस्यापि "जात्याकृतिव्यक्तयः पदार्थ" इति गौतमानुरोधेन पदार्थत्वात्।

नच नञर्थप्रत्ययविषयत्वं सामान्यरूपेणाऽभावत्वेऽस्त्येवेति कथन्तस्य व्यावर्त्यत्वमिति वाच्यम्? प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धावच्छिन्ना या प्रकारता तन्निरूपितनञ्पदप्रयोज्यविशेष्यताश्रयोऽभाव इत्येवं तात्पर्य्याऽभिवर्णनात्। वस्तुतस्तु भेदत्वमभावत्वञ्चाखण्डोपाधिरिति नान्योन्याश्रयशङ्केति। जन्यत्वञ्च जनकताप्रतियोगित्वम्। जनकत्वञ्च कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणाऽत्यन्ताऽभावाप्रतियोगित्वम्। घटो नास्ति घटो नश्यति घटः पटो न इत्यभावत्रयाणामुदाहरणानि। प्रागभावत्वञ्च प्रतियोगिविनाश्यभावत्वम्, घटो भविष्यतीत्युदाहरणम्। ननु किमर्थं एष आश्रीयत इति प्रश्नः? यावत्कारणसामग्रीसत्त्वेन कपाले घटोत्पत्त्यनन्तरमपि घटान्तरोत्पत्तिप्रसक्तेः। नच विद्यमानघटो घटान्तरोत्पत्तिप्रतिबन्धकस्स्यादेवञ्च न पुनस्तेनैव कारणेन घटान्तरोत्पत्तिरिति वाच्यम्? एतद्विडम्बनाऽपेक्षया प्रागभावस्वीकृतावेव लाघवात्। परन्तु घटो भविष्यतीति नोदाहरणं घटते। अभावरूपार्थस्तु घटो नास्तीत्यत्र नञर्थ एव। घटो नश्यतीत्यत्र णश अदर्शन इति धातौ दर्शनप्रतियोगिकाऽभावो धात्वर्थः तत्राऽस्ति नञ्पदम्। घटः पटो नेत्यत्रापि नञ्पदम्परन्तु घटो भविष्यतीत्यत्राऽभावरूपार्थो भूधातोः तिप्स्ययोर्वा घटार्थो वेति विचिकित्सायाम्मुह्यन्ति तार्किका आधुनिका इति शुक्लाः। यत्किञ्चिद्भेदप्रतियोगिकाऽभावस्याऽप्यभेदपदार्थेऽनिष्टस्य नीलञ्जलमितिवाक्यस्याऽपि प्रामाण्यमापद्येत। "वर्णश्शुक्लो रसस्पर्शौ जले मधुरशीतलावि"त्युक्तेर्जलन्नीलन्न भवतीति न्यायशास्त्रसिद्धान्तः। जले नील-

---

अभावपदार्थ इति अत्र द्रव्यादिषट्कान्योन्याभाववत्त्वमभावत्वमितिलक्षणेऽन्योन्याश्रयस्य स्वग्रहसापेक्षग्रहविषयत्वरूपस्य आपत्तिः, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम् इति लक्षणात्। विशेषणतासन्निकर्षजन्यप्रत्यक्षविषयत्वमित्यपि न? समवायपदार्थस्यापि विशेषणतास-

राज्ञोलभेदत्वावच्छिन्नाभावः प्रतीयते इति वाच्यम् ? पदार्थद्वयसंसर्गभानस्यैवाकाङ्क्षानियम्यत्वान्नीलभेदत्वावच्छिन्नप्रतियोगितान्तर्भावेण वृत्ति विना भेदरूपपदार्थतावच्छेदकस्याभावे तादृश सम्बन्धेन भानासम्भवात् ।

---

भेदस्यैव सत्त्वेन नीलञ्जलमितिरूपन्न भवति उक्तरीत्या भेदप्रतियोगिकाऽभावस्याऽभेदत्वे तु जले नीलभेदाऽभावाऽभावेऽपि द्वित्वादिधर्मेण अर्थात् नीलभेदघटोभयन्नास्तीति च घटत्वनीलभेदैतदुभयप्रतियोगिकाऽभावस्य द्वित्वावच्छिन्नप्रतियोगिताकस्य सत्त्वेनानिष्टन्नीलञ्जलमितिवाक्यस्याऽपि प्रामाण्यं स्यादेव। ननु द्वित्वावच्छिन्नप्रतियोगिताकाऽभावो न गृह्यतेऽपि तु केवलनीलभेदत्वावच्छिन्नाऽभाव एव नीलभेदत्वेतरधर्मानवच्छिन्नप्रतियोगिताकाभावश्च, तथाच जले नीलभेदरूपप्रतियोगिनस्सत्त्वेन तदभावाऽभावेन नीलञ्जलमितिवाक्यस्य नैव प्रामाण्यमित्याशयेनाह नीलभेदत्वावच्छिन्नेति। नीलपदेनोपस्थितस्य नीलपदार्थस्य विभक्त्यर्थविशेषणीभूतनीलपदार्थेऽन्वयो न सम्भवति।

नच नीलभेदत्वावच्छिन्नस्य विभक्त्यर्थत्वे पीतो घटः सुन्दरो घटः रक्तो घट इत्यादिषु पीतभेदत्वावच्छिन्नसुन्दरभेदत्वावच्छिन्नश्यामभेदत्वावच्छिनेतिरीत्या विभक्त्यर्थकल्पनेऽननुगमस्स्यादिति वाच्यम् ? यथा तत्पदम्बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासिततत्तद्धर्मावच्छिन्ने शक्तमिति रीत्या घटत्वपटत्वादीनान्धर्माणाम्बुद्धिविषयतावच्छेदकत्वेनानुगमस्तथा प्रकृत्यर्थतावच्छेदकत्वधर्मेणैवानुगमः। प्रकृत्यर्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नप्रतियोगिताकाऽभावे शक्तौ न गौरवम्।

ननु विशेषणतया नीलपदार्थातिरिक्तत्वेन केवलभेदप्रतियोगिकाऽभाव एव विभक्त्यर्थः, नीलप्रतियोगिनस्तु नीलपदसमभिव्याहारादेव भेदेऽन्वये सति न दोष इत्यत आह नचेति। अभेदो विभक्त्यर्थस्तत्र अभेदः पदार्थः भेदः पदार्थतावच्छेदकः सम्बन्धश्च नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपः पदार्थद्वयसंसर्ग एवाकाङ्क्षालभ्यः, यथा घट इत्यादौ घटघटत्वसमवायेषु त्रिष्वेव शक्तिः घटे घटत्वं समवायेन भासते समवायश्च शक्त्युपस्थाप्यः। एवञ्च पदार्थतावच्छेदके भेदे शक्तिं विना समवायवत् नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन कथङ्कारम्भानमित्याशयेनाह वृत्ति विनेति।

ननु पार्थक्येन भेदेऽभावे च खण्डशश्शक्तिः। पृथक्-पृथक् पदनिष्ठभिन्नशक्त्योपस्थितिविषयार्थद्वयसंसर्गभानमिति यावत्। अत एवाख्यातार्थस्थले कालस्तु व्यापारे विशेषणम् कालकृत्योः परिच्छिन्नत्वसम्बन्धः वर्त्तमानादिकालत्वेन वर्त्तमानादौ कृति

---

न्निकर्षेणैव प्रत्यक्षस्वीकारात् तत्रातिव्याप्त्यापत्तेः। भावभिन्नत्वनिवेशे तु भिन्नशब्दार्थस्य भेदाश्रयत्वेन भेदस्य चान्योन्याभावत्वेन पूर्वोक्तदोषस्य जागरूकत्वात्। असमस्तनञ्पदजन्यप्रतीतिविषयत्वन्तत् इत्यपि न? अनुदरा कन्येत्यादौ नास्त्युदरं यस्या इति विगृह्य अल्पत्वस्यापि तादृशविषयत्वेन तत्रातिव्याप्त्यापत्तेः। अतोऽखण्डोपाधित्वमेव शरणम्।

सैवम्, भेदोऽभावश्च विशेषणविभक्तेरर्थः विशिष्टलाभस्त्वाकाङ्क्षादिवशात्। एतेन भेदे नीलादिपदार्थान्वये एकदेशान्वयप्रसंग इति निरस्तम्। न च विशेषणविभक्तेरभेदार्थकत्वे नीलं घट इत्यादावप्यभेदान्वयबोधापत्तिर्धान्येन धनवानित्यादौ तृतीयया अभेदबोधनात् अभेदप्रकारकबोधे विरुद्धविभक्तिराहित्यस्यानपेक्षणादिति वाच्यम्? द्वितीयादिनाऽभेदबोधने द्वितीयाद्यन्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वमित्युपगमात्।

---

त्वेन कृतौ च शक्तिद्वयमिति परिच्छिन्नत्वसम्बन्धस्याऽऽकाङ्क्षाभास्यत्वेऽपि न दोषः। प्रकृते च भेदाऽभावयोरेकैव शक्तिरिति नाकाङ्क्षाप्रयोज्यत्वं संसर्गस्येति फलति। नीलञ्जलमित्यत्र जले नीलभेदस्यैव सत्त्वेन नीलभेदाऽभावस्याऽभावान्न नीलञ्जलमित्यस्य प्रामाण्यम् भेदस्य पदार्थत्वमेव नतु पदार्थतावच्छेदकत्वन्तथाच पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेतिनियमस्याऽप्रवृत्त्या भेदपदार्थे नीलपदार्थान्वये न कोऽपि बाधक इत्यभिप्रायवानाह निरस्तमिति। अत्र कश्चिच्छङ्कते प्रकारतावादिमते ननु यदि विशेषणविभक्तेरभेदोऽर्थोन्वयश्च खण्डशक्त्यैव नीलो घट इत्यत्र नीलनिष्ठप्रतियोगितानिरूपकभेदप्रतियोगिकाभावविशिष्टो घट इति यथा बोधस्तथैव नीलं घट इत्यत्रापि विभक्त्यर्थोऽभेदस्तस्य भेदेऽभावे च शक्तिः। नीलस्य भेदे भेदस्य अभावे अभावस्य घटेऽन्वयसम्भवात्। यदि चोच्यते अभेदान्यबोधम्प्रति समानविभक्तिकपदजन्योपस्थितिरेव कारणमतो नीलं घट इत्यत्र द्वितीयान्यप्रथमान्तसत्त्वेन नाभेदान्वय इति तर्हि धान्येन धनवानित्यत्र विरुद्धविभक्तिसत्त्वेनाभेदान्वयबोधो न स्यादित्याशयवानाह धान्येन धनवानिति। उत्तरमाह—द्वितीयान्तघटकप्रत्ययेनाऽभेदान्वयबोधे द्वितीयान्तविशेष्यवाचकपदसमभिव्याहारः कारणमिति। एवन्तृतीयार्थाऽभेदान्वयबोधम्प्रति तृतीयान्तविशेष्यवाचकपदसमभिव्याहारः कारणमिति रीतिः। नचैवमुत्तरे धान्येन धनवानित्यादावभेदान्वयो न स्यात् उक्तविरुद्धविभक्तिकत्वात्, विरुद्धविभक्तिकत्वेऽपि क्वचित् अभेदान्वयो यदि स्यात्तर्हि नीले न घटः पीते न घट इत्यादावप्यभेदान्वयाऽऽपत्तिस्स्यात् इति वाच्यम्? नीले न घट इत्यादौ तृतीयाविधायकसूत्रवार्त्तिकाऽभावात्। धान्येन धनवानित्यत्र तु "प्रकृत्यादिभ्य उपसंख्यान" मिति वार्त्तिकम्विधायकम्। तथा च वार्त्तिकप्रामाण्यात् "प्रकृत्यादिभ्य उपसंख्यानमि" तिवार्तिकविहिततृतीयाभिन्नतृतीयार्थाऽभेदप्रकारकबोधे तृतीयान्तविशेष्यवाचकपदसमभिव्याहारः कारणमिति कार्यकारणभावेन नीले न घटः पीते न घट इत्यादेस्सुतरान्निवार्यत्वात्।

द्वितीयादिनाऽभेदबोधन इति।

नन्वादिपदेनात्र यदि तृतीया गृह्यते तदा धान्येन धनवानित्यत्र प्रकृत्या चारु-

अथ प्रमेयो घट इत्यादौ प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्या लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमान् घट-इत्यादावपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या च विशेषणविभक्तेरभेदार्थकत्वासम्भवः। एवं नीलपटादिपरनीलादिपदघटितस्य नीलो घट इत्यादिवाक्यस्यापि प्रामाण्यापत्तिः। नीलत्वादिना पटादेर्भेदाभावस्य नीलघटादौ सत्त्वात्। एतेन विशेषणतावच्छेदकीभूत नीलत्वप्रमेयत्वादिकमेव विशेषणविभक्त्यर्थः, नीलत्वादेर्नीलत्वावच्छिन्नभेदाभावरूपतयाऽभेदार्थकत्वप्रवादोपपत्तिरित्यपि निरस्तम् नीलत्वादौ

---

त्यत्र चाभेदसम्बन्धेनान्वयबोधो न स्यात्। यदि तृतीयाया ग्रहणन्न स्यात्तर्हि सुन्दरेण घट इत्यादावप्यभेदान्वयाऽपत्तिः, अस्मिन्विकल्पप्रस्तावे शङ्कते। ननु सुन्दरेण घट इतिप्रयोगः कुतो न भवति "प्रकृत्यादिभ्य उपसंख्यानमि" तिवार्तिकेनाऽभेदे तृतीयाविधानानुशासनात्। न च सुन्दरशब्दस्य प्रकृत्यादिगणे पाठाऽभावेन तृतीयाविधानाऽभावात्कथमयम्प्रयोग इति वाच्यम्? व्याकरणान्तरे प्रकृत्यादिगणपठितातिरिक्तशब्देभ्योऽपि तृतीयाविधानानुशासनात् तादृशप्रयोगसौष्ठवात्। अभेदान्वयबोधम्प्रति समानविभक्तिकपदजन्योपस्थितिः कारणमितिनियमेन सुन्दरेण घट इति प्रयोगस्याप्रामाणिकत्वात्। यथायोगं सर्वविभक्त्यपवादः प्रकृत्यादिभ्य इति वार्त्तिकम्। अत एव सुखमेति विषममेति प्रकृतिश्चारुः सुखं यातीत्यादिप्रयोगा लोके न भवन्ति शिष्टसम्प्रदायविरुद्धत्वात्। न च धान्येन धनम् परमेण सुन्दर इति प्रयोगाश्शैष्टाः कथङ्कारं संगच्छन्त इति वाच्यम्? प्रकृत्यादिशब्दोत्तरतृतीयातिरिक्ता मूलोक्तादिशब्दात् संग्राह्येतिकल्पनेनाऽपत्तिपरीहारात्। अयमेव मूलाशयो गदाधरभट्टाभिमत इति सिद्धान्तसमाधानमित्यलम्।

दोषान्तरमाह प्रमेयो घट इति। अप्रसिद्धप्रतियोगिकाऽभावतात्पर्येण। तथाहि, प्रमेयपदोत्तरयोर्भेदः अभेदश्चार्थस्तत्र प्रकृत्यर्थस्य प्रमेयस्य प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदेऽन्वयः, भेदस्य च भेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावपदार्थेऽन्वयस्स कथं सङ्गच्छेत भेदस्य प्रतियोगितावच्छेदकेन सह विरोधात् "सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते" इत्युक्त्या प्रमेयत्वस्य सर्वत्र विद्यमानत्वात्प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदोऽप्रसिद्ध एवेत्याह भेदाप्रसिद्ध्येति। प्रथमो दोषः घटपदार्थे घटत्वं वर्त्तते कम्बुग्रीवादिमत्वञ्च धर्मद्वयम् कम्बुग्रीवादिमान् घट

---

प्रमेयत्वस्येति—"सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते" इतिरीत्या प्रमेयत्वादेः केवलान्वयित्वम्प्रदर्श्यते वृत्तिमदत्यन्ताभावाप्रतियोगित्वं हि तल्लक्षणम्, एवञ्च सप्तपदार्थवृत्तिप्रमेयत्वादेतादृशलक्षणाक्रान्तत्वेन तत्त्वं सिध्यतीति भावः। तार्किकेतरमतेऽपि प्रमेयत्वम्प्रमाविषयत्वं तच्चेश्वरीयज्ञानविषयतामादाय सर्वत्र व्यवहर्तुं शक्यत इति।

नीलत्वादिमतः स्ववृत्तित्वसंबन्धेनान्वये आकाङ्क्षाविरहाच्च। यथा हि वह्निविशिष्टे अधिकरणे आश्रयतया तदन्वयो ऽनुभवविरुद्धः, तथा तद्धर्मे आधेयतया तद्धर्मवदन्वयोऽपि। अत एव कर्म गच्छतीति वाक्यस्य निराकाङ्क्षता। नचैवं संसर्गतामतेऽप्यनिस्तारः।

---

इत्यत्र विभक्त्यर्थभेदे लघुधर्मस्य घटत्वस्याभावीयप्रतियोगितावच्छेदकत्वसम्भवे घटत्वसमनियतस्य घटत्वसमानाधिकरणस्य गुरुधर्मस्य कम्बुग्रीवादिमत्त्वस्य अभावीयप्रतियोगितावच्छेदकत्वन्न भवतीतिकम्बुग्रीवादिमान् घट इत्यादौ भेदाऽभावयोरसंघटनेनाऽभेदान्वयबोधो न स्यात्। घटत्वापेक्षया कम्बुग्रीवादिमत्वस्य गुरुधर्मत्वात् इति द्वितीयो दोषः। ननु लघुधर्मसमनियतगुरुधर्मस्याऽभावप्रतियोगितावच्छेदकत्वन्नभवतीतिनियमेऽभावपदोपादानस्य किम्प्रयोजनम्, लघुधर्मसमनियतगुरुधर्मस्य न प्रतियोगितावच्छेदकत्वमित्येवास्त्विति चेन्न!भासमानवैशिष्ट्यस्य प्रतियोगित्वानुयोगित्वे एव प्रकारत्वविशेष्यत्वे इतियुक्तिसिद्धपक्षे गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वसिद्धये तदुपादानावश्यकत्वात्। ननु लघुधर्मसमनियतगुरुधर्मस्याऽभावावच्छेदकत्वन्नास्तीत्येवास्तु-नियमः प्रतियोगितापदोपादानङ्किमर्थमिति चेन्न!कम्बुग्रीवादिमद्वान् देश इत्यत्र संयोसम्बन्धावच्छिन्नकम्बुग्रीवादिमत्वावच्छिन्नप्रकारतानिरूपितदेशनिष्ठविशेष्यतेतिबोधस्तत्रप्रकारताख्यविषयताया गुरुधर्मस्याऽपि कम्बुग्रीवादिमत्त्वस्य विषयतावच्छेदकत्वसिद्धये प्रतियोगितापदोपादानस्यावश्यकत्वात्।

एवमिति। यत्र घटे नीलत्वव्यवहारसिद्धये नीलो घट इति प्रयुज्यते तत्र नीलाऽभिन्नो घट इतिशाब्दबोधो भवत्येव परन्तु यत्र नील इति पटतात्पर्येणोच्यते घट इत्यप्युच्यते तत्र नीलाऽभेदप्रकारकघटविशेष्यकबोधो नेष्यते, भेदाऽभावयोर्विशेषणविभक्त्यर्थत्वे तु घटत्वेन पटत्वेन च रूपेण नीलयोर्घटपटयोर्भेदेऽपि नीलत्वेन रूपेण तु भेदो नास्ति नीलत्वेन पटभेदाऽभावस्य नीलपदोत्तरविभक्त्यर्थत्वेन तस्य च घटे सत्त्वात्पटान्वयतात्पर्येण प्रयुक्ते नीलपदघटितनीलो घट इति वाक्येऽपि अभेदसंसर्गकनीलप्रकारकघटविशेष्यकबोधोऽनिष्टोऽपि स्यादेवैतदर्थबोधनाय पटान्वयतात्पर्य्यविषयीभूतस्याऽपि नीलो घट इतिवाक्यस्य प्रामाण्यन्दुर्वारमेवेति तृतीयदोषः।

एतेनेति।

अयम्भावः, भेदोऽभावश्च न विशेषणविभक्तेरर्थोऽपि तु विशेषणतावच्छेदकीभूतनीलत्वम्प्रमेयत्वञ्चार्थस्तस्याऽश्रयतासम्बन्धेन विशेष्यघटादावन्वये नीलत्वाश्रयो घटःप्रमेयत्वाश्रयो घटःप्रमेयवान् घट इतिरीत्या शाब्दबोधः। नीलरूपे शक्तौ गौरवमतो यावन्नीलवृत्तिनीलत्वजातावेव शक्तिस्स्वाश्रयाश्रयत्वसम्बन्धेन विशेष्येऽन्वयः प्रकृत्यर्थस्य तत्र स्ववृत्तिवृत्तित्वसम्बन्धेनान्वयः। नीलञ्जलमिति तु न प्रयोगःनीलत्वस्य जलेऽत्यन्ताऽभावात् इति कैश्चिदुक्तन्त्वेतेन नीलपटादिपरनीलो घट इत्युक्तदोषेण निरस्तमित्याशयः।

नीलो घट इत्यादौ स्ववृत्तिनीलत्वादेः संसर्गतास्वीकारे उक्तस्थले प्रामाण्यापत्तेर्दुर्वारत्वादिति वाच्यम् ? स्ववृत्तिनीलत्वादेः स्वस्मिन्संबन्धतोपगमेन पटादिवृत्तिनीलत्वादेर्घटादौ पटादिसंबन्धताविरहेण तादृशातिप्रसङ्गाभावात्। वस्तुतस्तु तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव नीलत्वादिप्रकारेण भासमानानां तत्तद्व्यक्तीनां स्वस्मिन् संबन्धतया भासते इति नकाप्यनुपपत्तिः। संबन्धता च तस्य भेदप्रतियोगिताकाभावत्वेन तत्तद्व्यक्तिभेदप्रतियोगिताकाभावत्वेन वेत्यन्यदेतत्। न चैवं विशे-

अभेदार्थकत्वप्रवादोपपत्तिरिति।

ननु प्रमेयो घट इत्यादौ विशेषणवाचकप्रमेयपदोत्तरसुविभक्तेः कथम्भेदाऽभावरूपाऽभेदार्थकत्वम् प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदस्याऽप्रसिद्धत्वात्। एवञ्च कथङ्कारमभेदार्थकत्वमिति चेन्न ? क्वचिन्मुख्याऽभेदो विशेषणविभक्त्यर्थः क्वचिद् गौणाऽभेदो विशेषणविभक्त्यर्थो यथा ग्रामङ्गच्छतीत्यत्र कर्मत्वन्द्वितीयार्थो मुख्य एव परन्तु शास्त्रञ्जानातीत्यत्र मुख्यार्थाऽसंघटनाद् गौणार्थो विषयत्वन्द्वितीयार्थः नीलो घट इत्यत्र विशेषणविभक्तेरभेदार्थो मुख्यः। प्रमेयो घट इत्यत्र तु गौण एवाभेदरूपविभक्त्यर्थ इति प्रतीत्यनुसारेण विरोधविरहात्।

दूषणान्तरमप्याह प्रकृतिप्रत्ययार्थौ सहार्थम्ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति-न्यायेन विभक्त्यर्थस्य नीलत्वस्य प्रमेयत्वस्य विशेष्यत्वात्तत्र प्रकृत्यर्थनीलत्ववतो नीलस्याकाङ्क्षाविरहादन्वयो न स्यात्। उदाहरणम् घटत्ववति स्वाधिकरणत्वसम्बन्धेनानुभवविरोधात् घटत्वान्वयो न भवति एतेन सम्बन्धेन एकस्यैव घटस्य घटत्वद्वयवत्त्वप्रसक्तेश्च। एवं स्वाधेयत्वसम्बन्धेन घटपदार्थस्यानुभवविरोधाद् घटत्वेऽपि नान्वयः। अत एवेति।

कर्म गच्छतीत्यत्र कर्मत्वं द्वितीयार्थस्तस्य प्राधान्यात्प्रकृत्यर्थकर्मपदार्थान्वयस्तत्रानुभवविरोधान्न भवति। एवमनेकानुभवबलेन नीलत्वप्रमेयत्वादिकन्न विशेषणविभक्त्यर्थः। नच मूले द्वितीयार्थविचारावसरे ग्रामं गच्छतीत्यत्र ग्रामवृत्तिसंयोगे आधेयतासम्बन्धेन ग्रामान्वयस्य वक्ष्यमाणत्वाद् विरोध इति वाच्यम् ? ग्रामस्य संयोगे ग्रामत्वेनैवान्वय इति विरोधपरिहारात्। एतावता ग्रन्थेन नाभेदो विशेषणविभक्त्यर्थः।

ननु संसर्गतावादिमतेऽपि नीलपटादिपरनीलो घट इतिवाक्ये नीलभेदाऽभावरूपनीलत्वस्यैव संसर्गता नीलत्वजातेश्च नीलपटवत् नीलघटेऽपि सत्त्वादापत्तिरित्याह प्रामाण्यापत्तेरिति। उत्तरमाह स्ववृत्तिनीलत्वादेरिति। समवायसम्बन्धस्यैक-

समवायस्यैकत्वेऽपीति—"सम्बन्धसत्ता सम्बन्धिसत्ताया नियामिका" इति सिद्धान्तानुसारेण वायौ स्पर्शसमवायस्वीकाराव तदभिन्नरूपसमवायस्याऽपि तेन सत्त्वबोधनाद् वायू रूपवानिति आपत्तिप्रसङ्गः। रूपप्रतियोगिकत्वविशिष्टेत्यादिकरणेऽपि विशिष्टस्य शुद्धानतिरिक्तत्वनियमेन दोषावारणात।

षणविभक्तेरभेदार्थकत्वमतेऽपि तत्तद्व्यक्तित्वावच्छिन्नाभेद एव विभक्त्यर्थो वक्तव्य इति वाच्यम् ? तथा सत्यपूर्वव्यक्तिनिष्ठतत्तद्व्यक्तित्वस्य कथंचिदपि भानासम्भवेन तदवच्छिन्नभेदाभावे शक्तिग्रहासम्भवेनापूर्वव्यक्तौनामभेदान्वयबोधानुपपत्तेः।

---

त्वेऽपि वायौ स्पर्शसमवायसत्त्वेऽपि रूपसमवायो नास्तीतिरूपवान्वायुरितिप्रयोगो न भवति। वायौ रूपाऽभावेन रूपसमवायप्रतियोगिकत्ववाय्वनुयोगिकत्वयोरवच्छेद्यावच्छेदकभावाऽभावात्। एवन्नीलत्वस्यैकत्वेऽपि पटनिष्ठनीलत्वस्य पट एव सम्बन्धत्वन्न घटे इति तत्तात्पर्येण नीलो घट इत्यस्य संसर्गतावादिमीमांसकमतेन प्रामाण्यमिति तत्त्वात्।

वस्तुतस्त्विदंवति

अस्येदमाकूतम्, निरुक्तरीत्या भेदोऽभावश्चैव विशेषणविभक्तेरर्थः भेदाऽभावपदेन तत्तद्व्यक्तित्वावच्छिन्नभेदाऽभाव एव गृह्यते पटान्वयतात्पर्यकनीलव्यक्तिरन्या घटान्वयतात्पर्यकनीलव्यक्तिरन्यैवेति। यथा घट इत्यत्र घटस्य घटत्वप्रकारे भासमानत्वन्तथा नीलत्वप्रकारेण नीलघटव्यक्तेरेव भासमानत्वम्। एवञ्च पटान्वयतात्पर्यकनीलो घट इत्यस्य न प्रामाण्यमन्येऽपि पूर्वोक्ता दोषा निरस्ताः। अत्र विशेषणविभक्त्यर्थभेदाऽभावस्य सम्बन्धत्वन्तु पर्वतो वह्निमानित्यत्र वह्निप्रतियोगिकपर्वतानुयोगिकसंयोगस्य संयोगत्वेन रूपेण वह्निप्रतियोगिकसंयोगत्वेन रूपेण च सम्बन्धत्ववत् प्रकृतेऽपि नीलपटपरकनीलो घट इतिवत् घटत्वेन पटोऽस्ति घटत्वेन पटो नास्ति नीलपटपरकनीलो न घट इत्यादीनामप्रामाणिकत्वमेव, तद्व्यक्तित्वावच्छिन्नभेदप्रतियोगिकाऽभावत्वेन रूपेण सामान्यभेदप्रतियोगिकाऽभावत्वेन रूपेण च नीलो घट इत्यत्र विशिष्टबुद्धिश्चोपपन्नेति।

ननु "यश्चोभयोस्समो दोषः परीहारस्तयोस्समः। नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे" इतिन्यायेन प्रकारतावादिमतेऽपि प्रकारीभूतोऽभेदस्तत्तद्व्यक्तित्वावच्छिन्नभेदाऽभाव एवेति पटनिष्ठनीलस्य तद्व्यक्तित्वावच्छिन्नस्य घटेऽभावेन पटान्वयतात्पर्यकनीलो घट इत्यस्य (भेदप्रतियोगिकाऽभावत्वेनेति) इयं संसर्गता विषयतारूपा, यद्यप्यतिप्रसक्तधर्मः प्रतियोगितावच्छेदको न भवति तथापि विषयतावच्छेदको भवत्येवेति सिद्धान्तोऽत एव द्रव्यवत्कपालमितिनिश्चये समवायसम्बन्धा-

---

इति चेदत्रोच्यते ? विशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतायाश्शुद्धसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताया यथा भेदस्तथैव प्रकृते विशिष्टस्यानतिरिक्तत्वेऽपि शुद्धसमवायत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतायाःरूपप्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्न निरूपकतानिरूपिताधिकरणतायाश्च परस्परम्भेदेन वायौ रूपवत्ताबुद्धेरनुत्पादात्। एतादृशरीत्यादरेणैव गुणे कर्मणि वा गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिः प्रामाणिकी ननु गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यादिप्रतीतिरपि।

संसर्गज्ञानस्य विशिष्टबुद्धावहेतुत्वेनानुपस्थितस्यापि संसर्गतया भानासंभवेन संसर्गतामतेऽनुपपत्त्यभावात्। न च विभक्त्यर्थेऽपि भेदे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन नीलत्वादिना तत्तद्व्यक्तीनामन्वयः। तादृशभेदानामपि तत्तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भावेऽन्वय उपेयते। तावतैव तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ इति न किंचिदनुपपन्नमिति वाच्यम्? विशेषणतावच्छेदकावच्छिन्नाया एव

---

वच्छिन्नद्रव्यत्वावच्छिन्नप्रकारता यद्यपि घटमात्रनिष्ठत्वेनातिप्रसक्ता तथापि द्रव्यत्वमेवावच्छेदकन्नतु अनतिप्रसक्तमपि घटत्वमन्यथा द्रव्यवत्कपालम् घटवत्कपालम् इति प्रतीत्योर्वैलक्षण्यानापत्तेः। तथा चेयं संसर्गता विषयतारूपत्वात् भेदप्रतियोगिताकाभावत्वेनावच्छिद्यत एवेति न विरोधाभासः।) नैवास्ति प्रामाण्यमितिदोषाऽभावेन प्रकारतावादिमतमेव ज्यायस्तरमित्याशयन्निधायाह नचैवमिति। तदुत्तरमाह तथासत्यपूर्वेति। अस्येदन्तात्पर्यम्, प्रकारीभूतपदार्थस्यान्वयबोधम्प्रति तच्छक्तिज्ञानाधीनोपस्थितिः कारणम्। एवञ्च नीलो घटो भविष्यतीत्यादावपूर्वभाविनस्तद्व्यक्तित्वस्य नोपस्थितिरतस्तदवच्छिन्नभेदाऽभावे च विशेषणविभक्तेर्न शक्तिग्रहसम्भव इत्यपूर्वव्यक्तीनां भविष्यत्कालावच्छिन्नानामभेदान्वयबोधो न स्यात्। न च संसर्गतावादिमतेऽपि विशेषाऽपूर्वव्यक्तीनान्नीलो घटो भविष्यतीत्यादावभेदान्वयबोधो न स्यादिति वाच्यम्? संसर्गज्ञानस्य नैव विशिष्टबुद्धिनियामकत्वमिति सिद्धान्तः। उपस्थित्यर्थमेव हि शक्तिज्ञानमपेक्षणीयम्भवति। संसर्गतावादिमते तु आकाङ्क्षाभास्यत्वादभेदस्याभेदोपस्थितेरपेक्षैव नास्तीति विशिष्टबुद्धौ संसर्गस्यैव कारणत्वमस्तीत्यपूर्वव्यक्तिनिष्ठाऽभेदान्वये न क्षतिरिति समाधानम्। जात्या ब्राह्मणः महाकविरित्यादौ जातिपदार्थमहापदार्थयोर्ब्राह्मणत्वे कवित्वेऽन्वयदर्शनात्तत्तद्व्यक्तित्वावच्छिन्नाभेदरूपविभक्त्यर्थघटकतद्व्यक्तित्वे नीलपदार्थान्वये पदार्थः पदार्थेनान्वेतीतिनियमविरोधो न दर्शित इत्यलम्।

संसर्गतामतेऽनुपपत्त्यभावादिति—

तत्तत्पदाद् यद्यप्यन्वयोपस्थितिर्नैयायिकानाम्मतेऽन्विताभिधानमीमांसकमतस्य

---

सांसर्गिकविषयतायाःप्रकारत्वेति—संयोगेन घटवद् भूतलम् इत्यादौ संयोगस्य संसर्गविषयैव भानन्न तु प्रकारविषयेति प्रतीतिसिद्धोऽनुभवनीयश्च सिद्धान्तो यत सांसर्गिकविषयता प्रकारत्वानवच्छिन्नेति। सांसर्गिकविषयताया ईदृशी दशाऽस्ते चेत् संसर्गतावच्छेदकनिष्ठविषयतायाः प्रकारतानवच्छिन्नत्वं सुतरां सिद्धम्।

अत एव–प्रमेयं नास्ति कम्बुग्रीवादिमान्नास्ति इत्यादिशाब्दबोधानां संसर्गकोटावेव प्रतियोगितायां प्रमेयत्वाद्यवच्छिन्नत्वावगाहितया भ्रमत्वम्, अन्यथा स्वरूपसम्बन्धेन प्रमेयत्वाद्यवच्छिन्नप्रतियोगित्वस्यालीकतयाऽखण्डतत्सम्बन्धेन प्रमेयस्य अभावे धर्मिणि अन्वयासम्भवेन भ्रमत्वानुपपत्तेः। संसर्गप्रकारसाधारणविशेषणत्वाख्यविषयताघटितस्यैव भ्रमत्वादिति।

प्रतियोगिताया अभावे प्रतियोगिनः सम्बन्धतया भानात् । अन्यथा विशिष्ट-वैशिष्ट्यबुद्धित्वानुपपत्तेः । प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्य-बोधमर्यादामतिशेत इति दर्शनात्केवलं विशेष्ये विशेषणमिति रीत्या न कश्चिदभ्युपैतीति चेत् ? सत्यम् । अभेदस्तादात्म्यम् ।

---

खण्डितत्वान्नोपस्थितेः कथमप्यपेक्षा तथापि तात्पर्यज्ञानार्थमन्वयोपस्थितेरावश्यकत्वात् । नचाऽभेदादिसंसर्गस्य विशेष्यविशेषणभावविधयैव शाब्दबोधविषयत्वसम्भवात् नोपस्थितेरपेक्षेति वाच्यम् ? अपूर्ववाक्यार्थस्थले शाब्दबोधाऽव्यवहितप्राक्क्षणावच्छेदेन ज्ञानाभावाद् विशेष्यविशेषणज्ञानाऽभावे नोपस्थितेरावश्यकत्वात् । तात्पर्यबुद्धौ नीलविषयताविशिष्टज्ञानविषयकत्वमेव स्वीक्रियते । तत्र वैशिष्ट्यञ्च स्वनिरूपितसांसर्गिकविषयतानिरूपितघटादिविषयताकत्वसम्बन्धेन । एवञ्च सांसर्गिकविषयतायाः प्रकारत्वाऽसम्भवेनेष्टोपपत्तेरित्यलम् ।

**नच विभक्त्यर्थेऽपीति ।**

ननु भेदाऽभावो न विशेषणविभक्तेरर्थो विशिष्टोऽपि तु खण्डशश्शक्तिभेदेऽभावेच । एवञ्च विभक्त्यर्थे भेदे नीलत्वेन तत्तन्नीलव्यक्तीनान्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिकत्वसम्बन्धेनान्वयेन नीलो घटो भविष्यतीत्यादौ नापूर्वव्यक्त्यभेदान्वयानुपपत्तिस्तत्तद्व्यक्तित्वस्य हि सम्बन्धकुक्षावेव प्रवेशो नैव विभक्त्यर्थे प्रवेश इत्याशयेन शङ्कते नच विभक्त्यर्थेऽपीति । तदुत्तरमाह विशेषणतावच्छेदकावच्छिन्नेति ।

अयमभिप्रायः,

घटो नास्तीत्यादौ घटपदार्थस्य स्वप्रतियोगिताकत्वसम्बन्धेनान्वयः, घटत्वस्य च स्वावच्छिन्नप्रतियोगिताकत्वसंम्बन्धेन स्ववृत्तिघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वा । अत एव घटसत्त्वेऽपि प्रयागीयघटाऽभावतात्पर्येण घटो नास्तीति न प्रयोगः । प्रतियोगितायास्सम्बन्धकुक्षौ प्रवेशः प्रतियोगिता च प्रतियोगिविशेषणतावच्छेदकावच्छिन्नैवेति एतस्या एव सम्बन्धत्वेन भानं सार्वजनीनम् । प्रकृते पटतात्पर्यकनीलो घट इति वाक्ये भेदप्रतियोगि नीलत्वमेव विशेषणतावच्छेदकञ्च तदेव नतु तन्नीलव्यक्तित्वम् । तथाच नीलत्वावच्छिन्नप्रतियोगितायास्सम्बन्धत्वे नीलत्वस्य सर्वत्र घटपटादिष्वेकत्वेन नीलपटादिपरनीलो घट इति वाक्यस्य प्रामाण्यन्दुर्वारमेवेति तात्पर्यम् ।

**अन्यथा विशिष्टवैशिष्ट्येति—**

ज्ञानन्द्विविधम्विशिष्टवैशिष्ट्यावगाहि उपलक्षितवैशिष्ट्यावगाहि च । आद्ये विशेषणतावच्छेदकप्रकारकज्ञानङ्कारणम् , दण्डो रक्तो न वेतिसंशयानन्तरं रक्तदण्डवानि-

---

नचेद्वशक्लेशापेक्षया तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठविषयताशालिज्ञानत्वमेव भ्रमत्वमिति वाच्यम् ? तथा सति इदं रजतमिति ज्ञाने इदमंशेऽपि भ्रमत्वापत्तेः । अत एव विशेषणताप्रकारतयोर्भेदोऽपि विस्पष्टतरः ।

तिबोधो न भवत्यतो विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नम्प्रति विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वमिति तत्त्वम्। द्वितीये विशिष्टबुद्धिसामान्यम्प्रति विशेषणज्ञानङ्कारणम्। विशेषणांशे प्रकारीभूतोऽपि धर्मो यत्र भासते तद्ज्ञानम्विशिष्टवैशिष्ट्यावगाहीति फलितार्थः। यस्मिन् ज्ञाने विशेष्ये विशेषणन्तत्रापि च विशेषणान्तरमिति रीतिर्भासते तद् ज्ञानमुपलक्षितवैशिष्ट्यावगाहीति फलितार्थः। आद्योदाहरणन्तु घटो नास्तीति। अत्र विशिष्टस्य घटत्वविशिष्टस्य घटस्य स्वप्रतियोगिताकत्वसम्बन्धेन अभावे वैशिष्ट्यम्विराजते, अभावे प्रतियोगितासम्बन्धेन प्रतियोगी घटो भासते प्रतियोगिनि घटे वर्त्तमानं घटत्वन्तु स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽभावेऽन्वेति। घटत्वस्याभावे स्वसमानाधिकरणप्रतियोगितासम्बन्धेनान्वयस्त्वनर्ह एव। द्वित्वावच्छिन्नप्रतियोगिताकस्य अन्यतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकस्य च घटाऽभावस्य घटसत्त्वेऽपि विद्यमानत्वाद् घटसत्त्वेऽपि घटो नास्तीतिबुद्ध्यापत्तेः। तथा च विशेषणतावच्छेदकावच्छिन्नायाः प्रतियोगिताया एव सम्बन्धत्वमतो घटत्वस्य नोपलक्षणत्वमिति। अभावो विशेष्यस्तत्र प्रतियोगी घटो विशेषणम्। घटत्वम्विशेषणतावच्छेदकन्तत्र विशेषणतावच्छेदकत्वमिति तत्त्वम्।

द्वितीयोदाहरणन्तु गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति। अत्र गुणे सत्ताऽस्ति सत्तायान्तु गुणकर्मान्यत्वम्भासते नतु विशेष्यभूतगुणे गुणकर्मान्यत्वं गुणे गुणान्यत्वमसम्भवदुक्तिकमितिलौकिकप्रतीतेः। आद्यनियमानुसारेण गुणकर्मान्यत्वविशिष्टसत्तावद्द्रव्यमिति सुगतः प्रयोगः। मूले केवलम्विशेष्ये विशेषणमिति केवलपदोपादानेन क्वचित् प्रतियोगिप्रकारीभूतस्योपलक्षितवैशिष्ट्यावगाहित्वमेव नतु विशिष्टवैशिष्ट्यावगाहित्वन्तथाहि गन्धप्रागभाववान्नास्ति रक्तो दण्डो नास्ति पीतो घटो नास्ति एषु प्रतियोगिपदार्थप्रकारीभूतगन्धप्रागभावरक्तत्वपीतत्वानामुपलक्षणत्वेनोपलक्षितवैशिष्ट्यावगाहित्वम्। नचैवम्विधाऽभावस्थलेऽपि यदि प्रकारीभूतधर्मस्योपलक्षणत्वन्तर्ह्युभयोः किम्वैलक्षण्यम्विशिष्टवैशिष्ट्यबोधमर्यादान्नातिशेत इतिसिद्धान्तविरोधश्चेति वाच्यम्? प्रतियोगिप्रकारीभूतपदार्थस्य विशेषणत्वमुपलक्षणत्वञ्चेति द्वयं सिद्ध्यति। परन्तु प्रतीतिकालिकप्रतियोगिप्रकारीभूतपदार्थस्य प्रतियोगिनि यदि वर्त्तमानत्वन्तदा तादृशप्रतियोगिप्रकारीभूतपदार्थस्य विशेषणत्वन्तेन तादृशस्थले विशिष्टवैशिष्ट्यावगाहिबोध उपपद्यते। यथा घटो नास्तीति प्रतीतिकाले प्रतियोगिप्रकारीभूतपदार्थस्य यदि प्रतियोगिन्यवर्त्तमानत्वन्तदा प्रतियोगिप्रकारीभूतपदार्थस्योपलक्षणत्वन्तेन तादृशस्थले उपलक्षितवैशिष्ट्यावगाहित्वमित्युभयोर्वैलक्षण्यमुदाहरणन्त्वभावस्थलीयमुक्तमेव। इति चेत् प्रकारस्तर्हि प्रकारान्तरमाह—अभेदस्तादात्म्यमिति। आत्मैवेदं सर्वमिति श्रुतिस्सचासावात्मेति तदात्मा तदात्मनः

उपलक्षणत्वमिति—विद्यमानत्वे सतीतरोपस्थापकत्वमुपलक्षणत्वम्।

तच्च स्ववृत्त्यसाधारणो धर्मः । असाधारण्यं च एकमात्रवृत्तित्वम् ।

इदन्तादात्म्यम् स एवायमिति तत्त्वप्रत्यभिज्ञावत् नीलो घट इत्यत्र घटे नीलतादात्म्यम्भासते नीलतादात्म्यवान्घट इति शाब्दः ।

तच्चेति । तत्पदेन तादात्म्यं गृह्यते । स्ववृत्तीति । अत्र स्वपदेन घटो गृह्यते घटवृत्ति यन्नीलतादात्म्यन्तद् घटस्य असाधारणो धर्मः । तस्य नीलतादात्म्यस्य तद्घटव्यक्तिमात्रवृत्तित्वात् । एकव्यक्तिमात्रवृत्तिधर्म एवाऽसाधारणधर्म्मः । असाधारण्यञ्चैकमात्रवृत्तित्वमिति ।

अत्रैकमात्रवृत्तित्वन्नाम एकवृत्तित्वे सत्येकेतराऽवृत्तित्वम् । परन्तु एकत्वपदार्थस्य सर्वत्र संघटनीयत्वेन केवलान्वयित्वादेकेतरस्याप्रसिद्धया एकत्वस्याऽप्यप्रसिद्धत्वात् । अत एव परिष्कारनिबन्धः स्वसामानाधिकरण्येति । अत्र स्वपदेन भेदो गृह्यते एतद्घटव्यक्तावन्यघटव्यक्तेर्भेदः प्रसिद्धः तत्प्रतियोगिवृत्तिता तत्सामानाधिकरण्यञ्च घटत्वे तथान्यधर्मे च, भेदविशिष्टो घटत्वादिधर्मस्तद्भिन्नत्वन्तद्घटव्यक्ताविति समन्वयः । नच कालिकसन्बन्धेन प्रतियोगित्वेनाश्रीयमाणतद्घटव्यक्तेरप्यनुयोगिनि पदार्थे विद्यमानत्वेनैवं कालिकेनैव सम्बन्धेनानुयोगित्वेनाश्रीयमाणतद्घटव्यक्तेरपि प्रतियोगिनि विद्यमानत्वेन तद्घटव्यक्तित्वम्भेदविशिष्टमेवेति कथङ्कारं समन्वय इति वाच्यम् ? स्वरूपसम्बन्धावच्छिन्नवृत्तितायास्संसर्गांशे निवेशनीयत्वेन कालिकेन दोषदानस्याऽनुचितत्वात् । नच समवायसम्बन्धेन वृत्तित्ववतां घटत्वादिपदार्थानां हि भेदविशिष्टान्यत्वाऽपत्त्या नीलो घट इति वाक्यस्य भिन्ननीलघटपरनीलपदघटितस्याऽपि प्रामाण्याऽपत्तिरिति वाच्यम् ? कालिकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नवृत्तिताया निवेशादिनाऽक्षतेः । नचोक्तसम्बन्धस्य वृत्त्यनियामकत्वेन ज्ञाने घट इति व्यवहारसिद्धेन भेदविशिष्टान्यत्वमत्यन्तमप्रसिद्धमेवेति वाच्यम् ? भेदविशिष्टान्यघटकवृत्तित्वस्य स्वरूपसम्बन्धावच्छिन्नस्यैव ग्रहणेनादोषात् । नन्वभावाऽभावस्याऽधिकरणस्वरूपत्वेन घटे यो हि पटत्वाऽभावस्तत्र यो घटभेदस्तस्याऽभावात्मकत्वमेवैवञ्च घटगततद्व्यक्तित्वे घटभेदप्रतियोगिवृत्तित्वस्य तत्सामानाधिकरण्यस्य च सत्त्वेन तद्व्यक्तित्वेऽपि भेदविशिष्टत्वाऽपत्तिरिति । किञ्च स्वस्मिन्नपि पूर्वक्षणपरक्षणवृत्तित्वविशिष्टस्वभेदस्य विद्यमानत्वेन तद्व्यक्तित्वं तद्भेदविशिष्टत्वमस्त्येवेति तद्भिन्नत्वं सर्वथैवाऽप्रसिद्धमिति चेन्न ? धर्मविशिष्टान्यत्वमेव हि एकमात्रवृत्तित्वम् वैशिष्टयञ्च स्वात्मकत्वस्वपर्याप्तावच्छेदकप्रतियोगितानिरूपकतावच्छेदकभेदत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयवृत्तित्वोभयसम्बन्धेन । तद्व्यक्तित्वस्य भेदत्वस्याऽभावत्वस्य चाखण्डोपाधित्वं सार्वजनीनम् । अत एव नान्योन्याश्रयः । तद्व्यक्तिघटोभयन्न

अभावाभावोऽधिकरणस्वरूप इति—नियमाकारश्चेत्थम् अभावप्रतियोगिकोऽभावाधिकरणकोऽभावोऽधिकरणस्वरूपःयथा घटाभावनिष्ठो यःपटाभावभेदस्स घटाभावस्वरूपः । सामनैयत्यात् प्रतीतिसिद्धोऽयन्नियम इति केचित् ।

  

तद्व्यक्तिरित्युभयभेदाश्रयणेनाऽपि दोषः, प्रतियोगितावच्छेदकतायास्तद्व्यक्तित्वपर्याप्तत्वाऽभावात्। अस्मिन्विचारे पर्याप्तिनिवेशप्रकारो योजनीय एवेत्यस्मद्गुरवः। एकमात्रवृत्तित्वमिति— भेदविशिष्टान्यत्वमेकमात्रवृत्तित्वम् वैशि० स्वसामानाधिकरण्य स्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन। अत्र स्वपदेन भेदः नीलघटव्यक्तिभेदस्तत्सामानाधिकरण्यन्द्रव्यत्वे इत्येकः, स्वन्नीलघटव्यक्तिभेदस्तत्प्रतियोगिनी नीलघटव्यक्तिस्तद्वृत्तित्वमपि द्रव्यत्वे। एवञ्चोभयसम्बन्धेन भेदविशिष्टन्द्रव्यत्वमेव। तदन्यत्वञ्च तद्व्यक्तित्वेऽर्थात्तन्नीलघटव्यक्तिवृत्तितद्व्यक्तित्व इत्यभिप्रायः। किञ्च एकस्मिन् घटे योऽन्यघटव्यक्तिभेदस्स एव स्वपदेन गृह्यते तत्सामानाधिकरण्यन्तत्प्रतियोगिवृत्तित्वञ्च घटत्वे इति भेदविशिष्टं घटत्वन्तदन्यत्वञ्च तद्व्यक्तित्व इति। सम्बन्धनिवेशफलजिज्ञासायां स्वप्रतियोगिवृत्तित्वस्यैव सम्बन्धत्वे तु स्वन्नीलघटव्यक्तिभेदस्तत्प्रतियोगिनी नीलघटव्यक्तिस्तद्वृत्तित्वन्तद्व्यक्तित्वे इति भेदविशिष्टमेव तद्व्यक्तित्वमतस्स्वसामानाधिकरण्यमितिनिवेशः। अस्मिन् सम्बन्धे तु स्वन्नीलघटव्यक्तिस्तत्सामानाधिकरण्यन्तद्व्यक्तित्वे नास्ति नीलघटव्यक्तिभेदवति पटादौ तद्व्यक्तित्वस्याऽभावात्। स्वसामानाधिकरण्यस्यैव सम्बन्धत्वे तु स्वपदेन पटादिभेदस्तत्सामानाधिकरण्यन्तद्व्यक्तित्वे इति भेदविशिष्टमेव भवतीति स्वप्रतियोगिवृत्तित्वनिवेशः। एवञ्च स्वम्पटादिभेदस्तत्प्रतियोगी पटादिस्तद्वृत्तित्वन्तद्व्यक्तित्वे नास्तीति। एकं घटगततद्व्यक्तित्वम्प्रतियोगि अपरं घटगतद्व्यक्तित्वमनुयोगि। नच प्रतियोगित्वेनाश्रीयमाणघटगततद्व्यक्तित्वं कालिकसम्बन्धेन अनुयोगिघटगततत्व्यक्तित्वे वर्तत एव तथा अनुयोगिघटगततद्व्यक्तित्वं कालिकसम्बन्धेन प्रतियोगिघटगततद्व्यक्तित्वे वर्त्तते इति भेदविशिष्टमेव तद्व्यक्तित्वमिति वाच्यम्? स्वरूपसम्बन्धावच्छिन्नाया वृत्तिताया ग्रहणेनाभीष्टसिद्धेः।

इति परीक्षालेखप्रकारः।

---

अथ शास्त्रार्थप्रकारः।

नच वृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशे समवायसम्बन्धेन तत्र तत्तद्व्यक्तौ वृत्तित्ववतो घटत्वस्य भेदविशिष्टत्वानाऽपत्तौ भेदविशिष्टान्यत्वेनान्यनीलघटतात्पर्येणाऽपि बोधनार्थन्नीलो घट इति वाक्यस्याऽपि प्रामाण्यं स्यादिति वाच्यम्? कालिकसम्बन्धातिरिक्तसम्बन्धावच्छिन्ना या वृत्तिता तस्या एव निवेशेनोक्तस्थले समवायेन वृत्तित्ववतो घटत्वस्य भेदविशिष्टत्वमेव न तद्भिन्नत्वमिति तादृशवाक्यस्याऽप्रामाणिकत्वे निरोधकाऽभावात्। न चैवमपि भक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायेन घटगततद्व्यक्तित्वविषयकज्ञानप्रतियोगिको यो भेदो घटे तद्विशिष्टत्वमेव घटगततद्व्यक्तित्वे विषयितासम्बन्धेन तस्य प्रतियोगिनि ज्ञाने स्वरूपसम्बन्धेनानुयोगिनि घटे विद्यमानत्वात् विषयितास्वरूपसम्बन्धयोर्द्वयोरपि कालिकसम्बन्धभिन्नत्वाद् भेदविशिष्टत्वमेव घटगततत्व्यक्तित्वे न तदन्यत्वमिति वाच्यम्?

तच्च स्वसामानाधिकरण्य-स्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येकमात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थः। वृत्तिश्च तत्र प्रकृत्यर्थस्य संसर्गमर्यादया भासते।

ताहशधर्मस्तत्तद्द्रव्यक्तित्वादिरूप एव। अपूर्वव्यक्तिनिष्ठताहशधर्मस्य विशिष्य ज्ञातुमशक्यत्वेऽप्येकमात्रवृत्तिधर्मत्वादिना सामान्यप्रत्यासत्तितः सुग्रहत्वमेव।

---

स्वरूपसम्बन्धावच्छिन्नाया वृत्तिताया एव ग्रहणम् पूर्वोक्तदूषणद्वयन्तु न युक्ततरम्भेदविशिष्टान्यत्वरूपे विभक्त्यर्थे नीलो घट इत्यादौ प्रकृत्यर्थस्य नीलादिपदार्थस्य स्वरूपसम्बन्धावच्छिन्नाऽधेयतासम्बन्धेनैवान्वयस्तथाच तदधिकरणतानिरूपिताऽधेयताया भिन्नत्वादन्यनीलघटतात्पर्येण ताहशवाक्यस्य प्रामाणिकत्वविरहात्। स्वरूपसम्बन्धावच्छिन्नत्वनिवेशान्न कालिकसम्बन्धेन तद्वृत्तित्वमादाय भेदविशिष्टाऽन्यत्वाऽप्रसिद्धिरिति व्याख्यानात्।

भेदविशिष्टं यत्तदन्यत्वमिति—

न च भेदस्तादात्म्यसम्बन्धावछिन्नप्रतियोगिताकाऽभावरूपस्तादात्म्यञ्च भेदघटितमित्यात्माश्रयदोष इति वाच्यम्? भेदत्वस्यानुयोगिताविशेषरूपत्वादखण्डोपाधित्वाच्च। ननूभयभेदस्य केवलान्वयित्वेन तमेवादाय भेदविशिष्टत्वमस्त्येव तद्व्यक्तित्वादाविति भेदे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविशेषणनिवेशेन तु न निरुक्तदोषवारणम्? तद्व्यक्तित्वेन तद्व्यक्तिघटोभयभेदाश्रयणेन निरुक्तदोषस्य जागरूकत्वात्। इति चेन्न? एकत्ववृत्तिप्रतियोगिताकभेदविशिष्टं यत्तदन्यत्वमित्यस्य स्वीकारात्। वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकानुयोगितानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन। समन्वयस्स्वयमूह्य इति केचित्।

न च भेदशब्दार्थस्तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाव एव, तादात्म्यञ्च भेदविशिष्टान्यत्वमेवेत्यन्योन्याश्रयदोष इति वाच्यम्? अभावविशिष्टान्यत्वमेव तादात्म्यमिति परिष्कारात्। वैशिष्ट्यञ्च स्वप्रतियोगितासामानाधिकण्य स्वसामानाधिकण्योभयसम्बन्धेन। तत्तद्व्यक्तित्वाऽभावमादाय लक्षणसमन्वितिः। नचाभावत्वञ्च द्रव्यादिषट्कान्योन्याऽभाववत्त्वम् तादात्म्यञ्च अन्योऽन्याभावत्वन्तच्च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वमेवेतिपूर्वोक्तान्योन्याश्रयस्तिष्ठत्येवेतिवाच्यम्? अभावत्वस्य भेदत्वस्य अन्यत्वस्य वा अखण्डोपाधित्वेन परस्परनिरपेक्षत्वेनानान्योऽन्याश्रयाऽभावात्।

ताहशधर्मस्तत्तद्व्यक्तित्वादिरूप एवेति—

नीलो घट इत्यादौ निरुक्ततद्व्यक्तित्वं सुविभक्त्यर्थस्तत्र प्रत्ययार्थे नीलरूपप्रकृत्य-

अभेदस्य संसर्गतामतेऽप्येतादृशानुगताभेदस्यैव तथात्वमुचितम्। तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य विशिष्य तथात्वे घटो न नील इत्यादिवाक्यजन्यबोधे प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमाविति न्यायेन तादृशाननुगतसम्बन्धावच्छिन्नप्रतियोगिताकाननुगताभावा एव भासेरन् न तु नीलवृत्तिरेकोऽभावः, तथा सति यत्किंचित्तादृशाभावतात्पर्येण प्रयुक्तस्य नीलेऽपि न नील इत्यादिवाक्यस्य प्रामाण्यं स्यात्।

इदन्तु बोध्यम्। विशेषणविभक्तेरभेदार्थकत्वे घटो न नील इत्यादौ नञा नीलाद्यभेदाभाव एव प्रत्याययिष्यते न तु नीलादिभेदः। यादृशसमभिव्याहारस्थले येन सम्बन्धेन यत्र धर्मिणि येन रूपेण यद्वत्त्वं नञस-

र्थस्य स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेनान्वयः, तद्व्यक्तित्वरूपप्रत्ययार्थस्य च स्वरूपसम्बन्धेन घटपदार्थेऽन्वयः। एवञ्च नीलवृत्तितद्व्यक्तित्ववान् घट इति शाब्दबोधः। ननु सुन्दरो घटो भविष्यति विद्यावान् पुत्रो भविष्यतीत्यादौ घटपुत्रादिगतभविष्यद्व्यवहारस्य दृष्टिगोचरत्वाऽभावेन विभक्तिशक्तिग्रहस्य कर्त्तुमशक्यत्वात्कथन्तत्र शाब्दबोधविषयत्वमित्याशयेनाह—अपूर्वव्यक्तिनिष्ठेति। नैयायिकमते सामान्यलक्षणाप्रत्यासत्तिस्तथाचैकमात्रवृत्तिधर्मत्वेनैवापूर्वव्यक्तिभानम्।

संसर्गतामतेऽपीति—

तादात्म्यलक्षणाऽनुगताऽभेदस्य संसर्गतावादिमतेऽपि व्यवहारोऽत एव नञ्पदसमभिव्याहारे नीलो न घट इत्यादौ नीलवृत्तितादात्म्याऽभाववान् घट इत्याकारको बोधः। सर्वावयवावच्छेदेन तादात्म्यम्भासते। तेनैव रूपेण नञ्सत्त्वे निषेधः। अत एव यत्किञ्चिन्नीलसत्त्वे नीलो न घट इत्यस्य प्रयोग एव न? सामान्यलक्षणायाः प्रत्यासत्तेरेतदर्थमावश्यकत्वात्।

इदन्तु बोध्यमिति—

अलब्धलाभो योगः लब्धरक्षणन्तु क्षेमम् तयोस्तुल्यमेवेति।

सामान्यलक्षणप्रत्यासत्त्येति—सामान्यं लक्षणञ्चोऽर्थो विषयो यस्याः सा सामान्यलक्षणा प्रत्यासत्तिः सामान्यविषयकं ज्ञानमित्यर्थः। यथा हि एकत्र घटे ज्ञाते सति घटत्वेन सकलघटानां यथा वा एकत्र धूमे ज्ञाते सति धूमत्वेन सकलधूमानां भानम्भवति। न च निरुक्तरीत्या सकलधूमघटमानाभावेऽपि का क्षतिस्सामान्यलक्षणाप्रत्यासत्तिश्च मा स्वीक्रियतामिति वाच्यम्? सामान्यतो धूमो वह्निव्याप्यो न वेतीष्टस्यापि संशयस्य व्याघातापत्तेः। तथाहि प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् अन्यधूमस्य च तदानीमभावात् संशयोच्छेदापत्तेः। अत एव महानुभावयोः कयोश्चित् सामान्यलक्षणाप्रत्यासत्तिविषये प्रचलिते शास्त्रार्थे उक्तिरियमुत्तरपक्षवादिनः श्रूयते "वक्षोजपानकृत् काण संशये जाग्रति स्फुटम्। सामान्यलक्षणा कस्मादकस्मादपलप्यते॥" इति सक्रोधं संशयोच्छेदापत्तिप्रदर्शनेन प्रत्यासत्तेरस्याः समर्थनम्।

त्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृशसंबन्धावच्छिन्नतादृशधर्मावच्छिन्नप्रतियोगिताकतदभावबोधस्य व्युत्पत्तिसिद्धत्वात् । प्रतियोग्यभावान्वयौ चेत्यादेरप्ययमेवार्थः । एवं च नञो भेदबोधकत्वं न कुत्रापि संभवति । अनीलं घटमानयेत्यादौ घटपदसामानाधिकरण्यानुरोधेनानीलपदस्य नीलभिन्नपरतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात् ।

इदं तु तत्त्वम् । असमस्तनीलो घट इत्यादिस्थले ऽभेदस्य संसर्गतोपगमेऽपि गौरवविरहात् तत्र विशेषणविभक्तेर्वृत्तिकल्पनमनुचितम् । न च यत्राभेदे विशेषणविभक्तेः शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र स मत एवाभेदप्रकारकबोधस्य नीलो घट इत्यादिवाक्याद्युत्पत्त्या तादृशसमभिव्याहारज्ञानस्य द्विविधबोधे हेतुताद्वयं कल्पनीयम् अभेदस्य संसर्गतावादिनेति गौरवम् । एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्या भिन्नयोग्यताज्ञानघटितत्वेन द्वैविध्यमिति भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशशाब्दसामग्रीप्रतिबन्धकताया अप्याधिक्यमिति वाच्यम् ?

---

इदन्तु तत्त्वमिति—

नीलो घट इत्यादौ प्रकारतावादिमतेऽपूर्वशक्तिकल्पनरूपगौरवात्संसर्गतावादिमतमेव ज्यायस्तरम् ।

असमस्तनीलो घट इत्यादिस्थल इति—

ननु नीलो घट इति कथनेनैव विभक्त्यन्तश्रुत्याऽसमासरूपार्थलाभेऽसमास इत्युक्तिः किमर्थेति चेन्न ? समासे विशेषणविभक्तेरभावेन तत्र विशेषणविभक्तेर्वृत्तिकल्पनमयुक्तमितिग्रन्थाऽसङ्गतेः स्पष्टार्थमेव तदुपादानात् । किञ्च अत्र पङ्क्तौ असमास इतिपदमेव विशेष्यार्थकम्विशेष्यमिति यावत् । असति प्रतिबन्धक उद्देश्यतावच्छेदकावच्छेदेनान्वय औत्सर्गिकस्तथाच विरुद्धविभक्तिकवाक्ये विशेषणविभक्त्यभावेन तत्र विशेषणविभक्तेर्वृत्तिकल्पनमनुचितमितिसन्दर्भाऽसङ्गतेश्च ।

नच संसर्गतामते नीलो घट इत्यादौ विशेषणविभक्तेरभेदे शक्तिभ्रमे स्वारसिकलक्षणाग्रहे च अभेदप्रकारकोऽपि बोधः अभेदसंसर्गकोऽपि बोधः । विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमितिनियमानुसारेण प्रतिबध्यप्रतिबन्धकभावे हेतुताद्वयङ्कल्पनीयम् । प्रकारतावादिमते तु हेतुरेक एवेति तस्मात्प्रकारतावादिमतमेव युक्तमिति वाच्यम् ? तादृशे स्थलेऽपि अभेदसंसर्गकबोधस्यैव स्वीका-

---

प्रतिबन्धकत्वञ्चेति—प्रतिबन्धकं हि कार्योत्पादने बाधकं भवति अत एव कार्यत्वावच्छिन्नं प्रति प्रतिबन्धकसंसर्गाभावस्य कारणत्वम् । तथा च कारणीभूताभावप्रतियोगित्वम् प्रतिबन्धकत्वम् ।

**अभेदस्य संसर्गतावादिनोक्तस्थलेऽपि तत्संसर्गकबोधस्यैवोपगमादिति दिक् ।**

---

रात् । इत्याशयेनाह उपगमादिति । विशेषणविभक्तिवृत्त्योपस्थितत्वेऽप्यभेदस्य संसर्गत्वमेव मन्यते नतु प्रकारत्वमिति न हेतुताद्वयकल्पनेन गौरवमित्याशयस्संसर्गतावादिमीमांसकानाम् ।

इति दिगिति—

नच विभक्त्यर्थतादात्म्यस्य वृत्तिज्ञानाधीनोपस्थितस्य शाब्दबोधीयविषयताप्रयोजकस्य प्रकारतया भासमानस्य कथमिच्छामात्रेण संसर्गतया भानमिति वाच्यम् ? तात्पर्यज्ञानं शाब्दबोधे प्रधानङ्कारणमेवञ्चाभेदसंसर्गकबोधस्य संसर्गतावादिमतेऽनादितात्पर्यकल्पनात् ।

वस्तुतस्तु—

तत्रापि न नो विद्वेष इति मूलवक्ष्यमाणरीत्या तादात्म्यप्रकारकबोधस्यैवेष्टत्वान्मीमांसकाऽभिमतोऽयं ग्रन्थो न सयुक्तिकः । सूक्ष्मद्रष्टारस्तु अभेदस्य संसर्गत्वमेव नतु प्रकारत्वन्तथाहि, अनेकविभक्त्यर्थकल्पनापेक्षया "द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय" इत्युक्त्या विभक्तीनां द्योतकत्वेनाऽभेदस्य संसर्गतयैव भानमिति ।

निष्कर्षतस्तु—

संसर्गतावादे राज्ञः पुरुष इत्यादौ षष्ठीविधानन्न स्याच्छेषत्वाऽभावात्, यदि न स्वत्वं षष्ठ्यर्थस्तथा "षष्ठी शेष" इतिपाणिनीयसूत्रस्य प्रवृत्तिर्न स्यात् । तथाच कथन्तत्र संसर्गतावादचारितार्थ्यमिति भावना विचारणीयैव ।

केचित्तु

संसर्गतावादिनाम्मते राज्ञः पुरुष इत्यत्र ङस्विभक्तिस्साधुत्वार्थिकैव । अर्थात् 'षष्ठी शेष' इत्यनेन षष्ठ्यास्साधुत्वं सम्पाद्य पश्चात् संसर्गतया आकाङ्क्षाभास्यत्वात्तद्भानम्भवतु नतु ङस्वाच्यत्वेन प्रकारतयेति तत्त्वम् । नच स्वत्वसम्बन्धरूपशेषे षष्ठ्या विधानात् स्वत्वं तदर्थतया प्रकारयैव भासतामिति वाच्यम् ? "पाणिनीयम्महाशास्त्रम्पदसाधुत्वलक्षणमि"तिशिष्टोक्त्या पदसाधनाऽनन्तरं स्वत्वरूपार्थस्यान्वव्यतिरेकगम्यत्वेन लाघवानुरोधित्वेन च लाघवात्संसर्गतावादिपक्ष एव श्रेयानिति मन्थनात् । किञ्च षष्ठीविधानानन्तरं ङस्विभक्तिस्स्वत्वसंसर्गे तात्पर्यग्राहिकैव तेन ससर्गत्वसामान्येनान्यसम्बन्धस्य ग्रहणन्न भवतीत्यपि तात्पर्य्यमुन्नेयम् इति शुक्लाः । किञ्च "षष्ठी शेष"इतिसूत्रे षष्ठ्यर्थस्सम्बन्धत्वेन रूपेण सामान्यरूपेणेति यावत् । तत्तद्रूपेण त्र स्वस्वामिभावादिः । अत एवैकोनशतं षष्ठ्यर्था एकशतं षष्ठ्यर्था इति "षष्ठी स्थाने योगे"तिभाष्यं सङ्गच्छते । षष्ठ्यर्थस्वत्वादयश्च सांसर्गिकविषयतयैव भासन्ते नतु विभक्तिवाच्यत्वेन प्रकारतयेति तात्पर्यम् । अत एव "षष्ठी शेष" इतिसूत्रभाष्ये राजा विशेषणम्पुरुषो विशेष्य इति स्पष्टीकृतम् । यदि प्रकारतया भानमिष्टं स्यात्तर्हि राजनि-

स्तोकं पचति मृदु पचतीत्यादौ विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापि स्तोकमृद्वादेर्धात्वर्थपाकादावभेदान्वयोऽपि व्युत्पत्तिसिद्धः, तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समभिव्याहारस्याप्यभेदान्वयबोधौपयिकाकाङ्क्षात्वमुपगम्यते, क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन तत्र कर्मत्वातिदेशात् ।

---

रूपितस्वत्वे विशेष्यता पुरुषनिरूपितस्वत्वे प्रकारतेत्येवम्भाष्यकृता वक्तव्यमासीत् केवलराज इत्युक्तेऽर्थानुसन्धानेऽपि अग्रे किन्तत् पुरः कः पदार्थ इति विशेषजिज्ञासोदेति, पुरुषादिपदार्थसंयोजनेन च सा जिज्ञासा निवर्तते । भाष्यसम्मन्थनेन षष्ठ्यास्सामान्यसम्बन्धत्वन्तत्तद्रूपेण स्वस्वामिभावादिविशेषसम्बन्धत्वं विशेषणत्वञ्चेत्यर्थद्वयं समायाति । अतो विशेषणात् षष्ठी । राज इत्युक्ते तत्तत्स्वस्वादिसम्बन्धाकाङ्क्षा मुखेन जायते स्वत्वादिसम्बन्धाकाङ्क्षोत्पादकस्वामित्वादिशक्तिरपि षष्ठ्यर्थ इति तत्रैव भाष्ये स्पष्टम् । स्वामित्वस्याऽपि षष्ठ्यर्थत्वेऽपि विशेषणादेव षष्ठी । यदि च पुरुषे स्वामित्वाद्यर्थविवक्षा तदा पुरुषस्य राजेति प्रयोग इष्यत एव । राज इत्यादौ पदान्तरसमभिव्याहारस्थिनैवाध्याहृतसम्बन्धिसामान्यनिरूपितविशेषणत्वप्रतीतिरिति वैचित्र्यम् ।

नच पूर्वोक्तरीत्या सांसर्गिकविषयतया स्वत्वस्य भानेऽर्थात्संसर्गतावादे "षष्ठी शेष" इत्यनेन षष्ठीविधानं कथं स्यात्प्रकारतावादे तु स्वस्वामिभावादिसम्बन्धश्शेष इति षष्ठी भवत्येवेति वाच्यम् ? सम्बन्धसामान्ये षष्ठीत्यस्यानूक्तत्वात् । विषयता त्रिविधा विषयत्वं षष्ठ्यर्थः विषयतापदेन सम्बन्धसामान्यं गृह्यते ग्रामस्य ज्ञानमित्यत्र ग्रामविषयकं ज्ञानमिति प्रतीतेः प्रकारताख्या विशेष्यताख्या संसर्गताख्या चेति । स्वत्वस्य शेषत्वेऽपि शाब्दबोधे प्रकारताख्यविशेष्यताख्यविषयतया न भानमपि तु संसर्गताख्यविषयतयैव भानमिति न पाणिनीयसिद्धान्तविरोध इति । संसर्गतावादिनाम्मताभिप्रायो राजा विशेषणम्पुरुषो विशेष्य इति प्रकृतसूत्रभाष्यात् कारकप्रकरणेऽन्यविभक्त्यर्थस्येव षष्ठ्यर्थस्याऽपि संसर्गमर्यादयैव भानम् । नच प्रकृतिप्रत्ययौ सहार्थम्बूतस्तयोः प्रत्ययार्थः प्रधानमिति न्यायविरोध इति वाच्यम् ? प्रत्ययार्थः प्रधानमित्यत्र प्रधानपदम्प्रकारताऽन्यविषयतावत्परमित्यर्थाश्रयणात् । तथाच संसर्गतावादे शाब्दिकमीमांसकयोश्शुद्धयुक्तिश्रुतयोरैक्यमिति । किञ्च स्वत्वस्य प्रकारतया भाने तत्र निरूपकत्वसम्बन्धादिकल्पनं गौरवमिति संसर्गतावाद एव युक्त इत्यादि शुक्लाः ।

मृदु पचतीति—

क्रियाविशेषणानाङ्कर्मत्वमेकत्वन्नपुंसकत्वञ्चेति नियमस्वरूपम् ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाऽम्रेडितान्तेषु ततोऽन्यत्राऽपि दृश्यते ॥

इति कारिकाघटकततोऽन्यत्रापि दृश्यत इत्यस्यान्यत्र कोऽर्थः क्रियाविशेषणस्थ-

ले द्वितीयेत्यस्य फलितार्थमेतद्वचनन्नाऽपूर्वम्। अत एव पदवाक्यरत्नाकरे स्तोकम्पचतीत्येव तदुदाहरणन्दत्तम्। नच तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन धात्वर्थतावच्छेदकफलशालित्वात्कर्त्तुरीप्सितेत्यनेनैव मुख्यकर्मत्वमलम्बचनेनेति वाच्यम्। स्तोकः पच्यत इत्यत्र कर्मणि लकारापत्तावनिष्टरूपापत्तेः। ननु "लः कर्मणी" तिसूत्रे कर्तृपदसाहचर्याद्धात्वर्थे भेदेनान्वयिनि कर्मणि लकारो नाऽभेदान्वयिनीति विशेषार्थेन तादृशप्रयोगाभावात् अतिदेशस्य लक्ष्यसाधकत्वेन न कर्मणि लकार इत्यपि बोध्यम्। अत एव स्तोकम्पाक इत्यादौ "कर्त्तृकर्मणो" रितिषष्ठी न। फलतावच्छेदकसम्बन्धमात्रेण धात्वर्थतावच्छेदकफलाश्रये कर्मणि लकारविधानेन स्तोकः पच्यते इत्यादीनामनिष्टत्वाच्च। व्यापारस्य फलव्यधिकरणत्वे सकर्मकत्वम् व्यापारस्य फलसमानाधिकरणत्वेऽकर्मकत्वमत एव स्तोकन्तिष्ठतीतिवाक्यन्नानुपपन्नम्। किञ्च मन्दं गच्छति द्रुतं गच्छतीत्यादावपि कर्मत्वन्न स्यात् संयोगात्मकम्फलन्न मन्दद्रुतनिष्ठङ्किन्तु तादात्म्यसम्बन्धेन संयोगानुकूलव्यापारे मन्दादेरन्वयार्थमपि ततोऽन्यत्रापि दृश्यत इति फलितार्थवचनस्वीकार इत्यभिधानाच्च।

नच क्रियाविशेषणनिष्ठद्वितीयाया एवंरीत्या विधाने कारकत्वाऽभावात्स्तोकपक्तेत्यादौ समासो न स्यादिति वाच्यम्। असति विशेषानुशासने कारकविभक्तिभिन्नविभक्त्यन्तेन समासानभिधानात्। कारकाधिकाराऽभावेऽपि लोकभाष्यप्रामाण्येन प्रथमायाः कारकविभक्तिवत्ततोऽन्यत्राऽपीतिविहिते कारकविभक्तित्वसौष्ठवात्। किञ्च स्तोकं पक्तेतिदशायामेकार्थीभावे विवक्षिते कर्मधारयसमास "स्तत्पुरुषस्समानाधिकरणः कर्मधारय" इतिसूत्रे सामानाधिकरण्यञ्च तदर्थयोरेव नतु समानविभक्तिकत्वन्तत्रेष्टमत एव "स्तोकनम्रा स्तनाभ्यामि" तिकालिदासप्रयोगः। 'स्तोकपक्तेत्यत्र कर्मधारय एवे"ति शब्दशक्तिप्रकाशिकाग्रन्थश्च सङ्गच्छेते। अत एव च महाकविर्महाविज्ञ इत्यादावेकदेशान्वयेऽपि समाससाधुतावत्स्तोकादेः पाकादावेकदेशान्वयेऽपि समाससिद्धिसुकरत्वात्। तथाच वैयाकरणानाम्मतन्न युक्तमपि क्रियाविशेषणानामिति वचनन्ततोऽन्यत्राऽपि दृश्यत इति कारिकामूलकन्नाऽपूर्ववचनमिति युक्तियुक्तम्।

नच "उभयसर्वतसोः कार्ये"ति द्वितीयाविधायककारिकायामेकत्वयोश्चर्चैव नास्तीति तयोः कथं संसर्गस्ततोऽन्यत्रापीत्यस्य फलितार्थमेव नाऽपूर्वम्वचनमिति कथं सुसङ्गतमिति वाच्यम्। कारिकाया वार्त्तिकरूपत्वेन "सूत्रकारस्यानुक्तिम्वार्त्तिककारः पूरयती"तिसिद्धान्तात्तावत्पर्यन्तार्थकल्पने क्षतिविरहात् भाष्यप्रामाण्याच्छिष्टैर्लोके तथैवानुशिष्टत्वाच्च।

नच "क्रियाविशेषणानां कर्मत्वन्नपुंसकत्वञ्चे"त्यनुशासने "जगाद मधुराम्वाचं विशदाक्षरशालिनीमि"त्यादौ वाचः क्रियाविशेषणत्वान्नपुंसकत्वाऽपत्तौ विभक्तिलुकि

---

क्रियाविशेषणानामिति—धात्वर्थनिष्ठविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकपदोत्तरं द्वितीया क्लीवत्वादिकञ्चेति तात्पर्यार्थः। उदाहरणन्तु स्फुटतरम्।

न चैवं स्तोकः पाक इत्यादावपि द्वितीयाप्रसङ्गस्तत्रापि स्तोकादेः क्रियायामेव विशेषणत्वात् भावक्तां प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादिप्रतिपादनादिति वाच्यम् ?

क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात्। स्तोकं स्थीयते इत्यादौ आख्यातस्यापि वर्त्तमानत्वार्थकतया सार्थकत्वात्। न च वर्त्तमानत्वाद्यविवक्षायां द्वितीयानुपपत्तिरिति वाच्यम् ? वर्त्तमानत्वादिविवक्षास्थल इव अर्थबोधकप्रयोजकाकांक्षाशालित्वेनैव तदविवक्षास्थलेऽपि भावाख्यातस्यार्थवत्त्वात्।

---

वागितिरूपश्रुत्या च्छन्दोभङ्गादिरापतेदिति वाच्यम् ? अनियतलिङ्गस्थले "ततोऽन्यत्रापि दृश्यत" इति फलितार्थक्रियाविशेषणानाङ्कर्मत्वमेकत्वन्नपुंसकत्वञ्चेत्यस्य प्रवृत्तिस्वीकारेण "गीर्वाग्वाणी सरस्वती" तिकोशबलेन "स्त्रियां क्तिनि" त्यधिकारे "क्विब्वची" तिवार्त्तिकेन तत्सहायकेन च वाक्शब्दस्य स्त्रीलिङ्गे नियतत्वसौष्ठवात्।

ननु स्तोकःपाक इत्यादावपि पचधातोःपाकरूपोऽर्थस्स्तोकपदार्थस्य च तत्रैवान्वयेन क्रियाविशेषणत्वात्कर्मत्वेन द्वितीयेति तात्पर्येणाह द्वितीयाप्रसङ्ग इति। तदुत्तरम्, क्रियाविशेषणानामितिनियमे क्रियापदस्य सार्थकप्रत्ययान्तधातुवाच्यार्थपरत्वेन घञो भावे विधानेनार्थवाचकप्रत्ययाभावेन कर्मत्वाऽप्रवृत्तेः। स्तोकं स्थीयत इति अकर्मकधातुप्रयोगे भावप्रत्ययेऽपि न दोषः ? वर्तमाने लटो विधानेन तत्र सार्थकप्रत्ययसत्त्वात्।

नच वर्त्तमानत्वाविवक्षायान्दोषः ? वर्त्तमानबोधकस्वरूपयोग्यतामादायापि सार्थकत्वसिद्धेः। अथबोधानुकूलाकांक्षापर्याप्त्यधिकरणीभूतप्रत्ययप्रकृतिभूतधातुवाच्यक्रियानिष्ठविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नकर्मत्वप्रयोजकपदाद् द्वितीया भवतीतिनियमात्।

क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात्। स्तोकं स्थीयत इति–अर्थबोधस्वरूपयोग्यतेति—

ननु अत्र सार्थकप्रत्ययत्वं यदि भगवदिच्छीयविलक्षणविषयतावच्छेदकवत्त्वमथवा शक्तिमद्वृत्तिप्रत्ययत्वव्याप्यधर्मवत्त्वं वा, सर्वथापि घञःकरणाधिकरणार्थकत्वेन सार्थकत्वमापद्येतात आकाङ्क्षापर्य्यन्तानुधौतिर्ग्रन्थकृताम्। पाकादयो न संज्ञावाचकाः रागादयस्तु संज्ञावाचका एव योगरूढा वा।

वस्तुतस्तु सामान्यरूपेण घञो न निरर्थकत्वमत एव "अकर्त्तरि च कारके संज्ञायामि"त्यत्र संज्ञायामिति प्रायिकन्तेन को लाभो भवता लब्ध इत्यादीनां सिद्धिः। गम्धातुसमभिव्याहृतक्तप्रत्ययस्य कालकर्माद्यर्थकत्वेन प्रसिद्धत्वात् भावार्थकक्तप्रत्ययविशिष्टगमधातुतदर्थविशेषणस्तोकादिपदोत्तरन्तु द्वितीयाविभक्तिरेव। अकर्मकधातोः क्तप्रत्ययस्य न केवलभावार्थमात्रे विधानम् ? भूतकालादिरूपार्थस्य तत्र सत्त्वात्।

केचित्तु धातोरिव घञन्तस्यापि पाकादौ शक्तिरुपेयते। अन्यथा सुब्विभक्त्यर्थसंख्याकर्मत्वादीनां तत्र पाकादावन्वयानुपपत्तेः। प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेर्धातूनां च सुब्विभक्त्यप्रकृतित्वात् प्रकृत्येकदेशार्थेऽपि प्रत्ययार्थान्वयोगपमे पचन्तं पश्यतीत्यादितः पचमानं पश्यतीत्यादितश्च पाकादौ द्वितीयाद्यर्थकर्मत्वाद्यन्वयबोधप्रसङ्गात्।

एकत्रविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयस्याव्युत्पन्नतया तत्र प्रत्ययार्थविशेषणपाकादेर्न कर्मत्वे विशेषणतयान्वय इति चेत्? तथापि पाकादिविशेषणतया सुबर्थसंख्याया अन्वयसंभवात्। यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितं पाकादेश्च तदबाधितं तत्र पचन्तौ

---

"स्त्रियां क्तिन्नि"तिसूत्रविहितक्तिन्नादीनां केवलभावमात्रार्थकत्वेन न प्राकृतं सार्थकत्वम्। अत्र सूक्ष्मधियः।

नच पाक इत्यादावेकत्वान्वितपाकाद्यर्थविषयकशाब्दबोधस्वरूपयोग्यताम्प्रति घञ्प्रत्ययान्तसमुदायनिष्ठस्वादिसमभिव्याहारःकारणमिति। तस्य घञ्प्रत्ययेऽपि विद्यमानत्वेन घञ्प्रत्ययस्य सार्थकत्वन्दुर्वारमेवेति वाच्यम्? यद्रूपावच्छिन्ने यद्रूपावच्छिन्नाऽव्यवहितोत्तरत्वमर्थबोधस्वरूपयोग्यताप्रयोजकं तद्रूपावच्छिन्नस्य तद्रूपावच्छिन्नान्तत्वमेव हि सार्थकप्रत्ययान्तत्वमिति तात्पर्यात्।

नच पच घञ् एतदुभयाऽव्यवहितोत्तरत्वं सुत्वावच्छिन्ने विद्यत एवेति पूर्वोक्तस्वरूपयोग्यताप्रयोजकत्वं समुदाये तद्घटकघञ्प्रत्ययेऽपि पच्यव्यवहितोत्तरत्वप्रयोजकत्वन्निर्बाधमिति वाच्यम्? समुदायगतप्रयोजकतायाःकेवलविशेषणेऽपि स्वीकारे मानाऽभावात् समुदायस्यैव क्लृप्तत्वेन प्रयोजनविरहाच्चेत्यलम्।

**केचित्तु इति—**

वदन्तीति सम्बद्धम्। अयमाशयः, यथा धातोःपाकादौ शक्तिस्तथा घञन्तस्याऽपि पाकादौ शक्तिर्विनिगमनाविरहात्। यदि घञन्तशक्तिर्न स्यात्तदा संख्याकर्मत्वादीनान्तत्रान्वयो न स्यात् "प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्" प्रकृतिप्रत्ययौ सहार्थंब्रूतस्तयोःप्रत्ययार्थःप्रधानम्" यथा घटमानयेत्यत्र द्वितीयायास्स्वप्रकृत्यर्थघटविशिष्टकर्मत्वबोधकत्वम् नतु घटाऽनन्वितकर्मत्वबोधकत्वम्। घञा व्यवधानेऽपि संख्याकर्मत्वादीनाम्पाके प्रकृत्येकदेशार्थेऽन्वयस्तु वक्तुमशक्यः? पचन्तम्पश्यतीत्यादौ शत्रा व्यवधानेऽपि द्वितीयार्थकर्मत्वस्य पाकेऽन्वयेनाऽनिष्टाऽपत्तेः। तदेवाह अन्वयबोधप्रसङ्गादिति।

**एकत्र विशेषणत्वेनेति—**

ननु पचन्तम्पश्यतीत्यादौ कर्त्तरि विशेषणत्वेनान्वितस्य पाकस्य कर्मत्वेन द्वितीया-

पश्यति पचमानौ पश्यतीत्यादिप्रयोगप्रसङ्गस्य दुर्वारत्वात्। धातूपस्थाप्यार्थे सुबर्थान्वयबोधं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामुपगम्यैतादृशातिप्रसंगवारणे च गौरवात्।

एवं शोभनं पचनमित्यादौ धातुमात्रेण पाकाद्युपस्थितौ च तत्र शोभनाद्यभेदान्वयबोधानुपपत्तिः, विशेषणविभक्तिसजातीयप्रकृत्यनुपस्थाप्यत्वात्। प्रकृत्येकदेशसाधारणतादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे तत्र ल्युडादेरधिकरणपरत्वेऽपि तथाविधान्वयबोधापत्तेः। कस्य चित्प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवात्। न चैवमुपकुम्भार्द्धपिप्पल्यादिरूपपूर्वपदार्थप्रधानसमासपद'त्कुम्भसमीपपिप्पल्यर्द्धादौ विभक्त्यर्थान्वयस्य प्रातिपदिकान्तरार्थाभेदान्वयस्य चानुपपत्तिः। पूर्वपदस्य समासोत्तरविभक्त्यप्रकृतित्वादिति वाच्यम् ? तदनुरोधेनैव तत्र कुम्भपिप्पल्यादिपदानामेव कुम्भसमीपपिप्पल्यर्द्धादौ लक्षणायाः पूर्वपदस्य तात्पर्यग्रहमात्रोपयोगितायाश्च स्वीकारात्।

---

र्थेन साकं विशेषणतया नान्वयः "एकत्र विशेषणत्वेनान्वितस्यान्यत्र विशेषणत्वेन नान्वय" इतिन्यायात्। तथाच कर्मत्वस्य पाके नान्वय इत्याशयेनाह एकत्रेति।

एवमपि यत्र द्वौ कर्त्तारौ त्रयो वा पचन्तौ पश्यत इतिप्रयोग इदानीङ्केवलसुबर्थसंख्यायाः पाकेऽन्वये शत्रा व्यवधानेऽपि पचन्तौ पश्यतीत्याद्यापद्येत। तदेवाह प्रयोगप्रसंगस्येति।

ननु प्रत्ययार्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानम्प्रतिबन्धकमिति प्रतिवध्यप्रतिबन्धकभावं प्रकल्प्य शतृप्रत्ययार्थकर्तृरूपार्थपरत्वज्ञानमेव प्रत्ययार्थसंख्यादीनाम्पाकादौ विशेषणतयाऽन्वयबोधप्रतिबन्धकमिति प्रकृत्येकदेशपाके न संख्याया अन्वय इत्याशयेनाह प्रतिबन्धकतेति। तदुत्तरमाह गौरवादिति। तस्माद् घञन्तस्य पाकादौ शक्तिः कार्य्यैवेति। प्रकृत्येकदेशार्थान्वयश्च न स्वीकार्य्य इत्यभिप्रायः।

ननु यथा पाके इत्यत्र घञन्तस्य पाके शक्तिस्तथा पचनमित्यत्रापि ल्युडन्तस्यैव पाके शक्तिर्न तु धातुमात्रस्येति तदेवाह एवमिति। ल्युडन्तस्य यदि पाके शक्तिर्न किन्तु धातुमात्रेण पाकोपस्थितिः पाक इत्यत्र संख्यादीनामन्वयानुपपत्तिर्यथा तथा धातुमात्रोपस्थितपाके शोभनपादार्थान्वयो न स्यादेवाऽभेदसम्बन्धेन। तत्र हेतुमाह, अयं हि नियमो विशेष्यविशेषणयोरभेदसम्बन्धेनान्वयबोधम्प्रति सजातीयविभक्त्युपस्थाप्यत्वं कारणमेवञ्च विशेषणविभक्तिसजातीयविभक्तिप्रकृत्युपस्थाप्यत्वम्विशेष्यस्यापेक्षणीयम्। पाकपदार्थस्यात्र न विभमिप्रकृत्युपस्थाप्यत्वमेवम्पचनमित्यत्र पचनेतिल्युट्प्रत्ययान्तस्यैव विभक्तिप्रकृतित्वेन धातुमात्रस्य पाकोपस्थापकस्य विभक्तिप्रकृतित्वाऽभावात्। ल्युटा व्यवधानात् इति तात्पर्य्यम्।

वस्तुतस्तु तत्रोत्तरपदार्थविशेषितपूर्वपदार्थसमीपाद्धादौ प्रत्ययार्थान्वयबोधे तादृशसमस्तपदप्रत्ययपदयोरव्यवहितपूर्वापरीभावोऽप्याकाङ्क्षा । एवं तत्र प्रातिपदिकान्तरार्थाऽभेदान्वयबोधे समानविभक्तिकयोस्तादृशसमस्तपदपदान्तरयोश्च समभिव्याहारोऽप्याकाङ्क्षा । तथा सत्यतिप्रसङ्गविरहात् ।

धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे प्रातिपदिकान्तरान्तरार्थाभेदान्वय-

---

ननु प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वम्वचनमित्यत्र प्रत्ययभाग इव धातुभागेऽप्यस्त्येव प्रकृतिप्रकृत्येकदेशोभयसाधारण्येन विशेषणविभक्तिसजातीयविभक्तिप्रकृतित्वमेव विशेष्यविशेषणयोरभेदान्वयप्रयोजकम् । एवञ्च धातुभागेऽपि प्रकृतित्वसत्त्वाच्छोभनपदार्थान्वये न किञ्चिद्बाधकमित्याशयेनाह प्रकृत्येकदेशेति । दूषणमाह शोभनपदार्थान्वय इष्टोऽपि न स्यात् । अतो ल्युडन्तस्यैव पाके शक्तिः कार्य्याधिकरणपदार्थ एव शोभनान्वयो नतु पाकादावित्यभिप्रायः ।

ननु पदान्तरार्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानम्प्रतिबन्धकं शोभनपदार्थस्य धात्वर्थपाकादावभेदान्वयेऽधिकरणार्थपरत्वज्ञानम्प्रतिबन्धकमिति । भावल्युटस्तु निरर्थकत्वमेवैवञ्च शोभनपदार्थस्य धात्वर्थपाकेऽन्वये नानुपपत्तिरिति हृदि निधायाह कस्यचिदिति । प्रतिबध्यप्रतिबन्धककल्पनगौरवमित्युत्तरम् । एवञ्च वचनमिति ल्युडन्तसमुदायस्यैव पाके शक्तिरिति तत्त्वं सिद्धम् ।

स्वप्रकृत्यर्थविशिष्टस्वार्थबोधकत्वमेव प्रत्ययानाम् । प्रत्ययाव्यवहितपूर्ववर्त्तित्वमेव प्रकृतित्वमितिलक्षणे उपकुम्भम् अर्द्धपिप्पली सुन्दरमुपकुम्भम् इत्यादौ विभक्त्यर्थकर्मत्वादीनां सुन्दरादीनामभेदेनान्वयः पूर्वपदार्थेन सह न स्यात् समासोत्तरविभक्तिप्रकृतित्वाऽभावात् इत्याशयेन तदुत्तरमाह नचैवमिति । पूर्वपदस्य तात्पर्य्यग्राहकत्वमेवोत्तरपदस्यैव कुम्भादेस्समीपार्द्धादिरूपार्थकत्वात् । एवञ्चान्वये न किञ्चिद्बाधकम् ।

वस्तुतस्त्विति ।

प्रत्ययार्थनिष्ठप्रकारतानिरूपितपूर्वपदार्थनिष्ठविशेष्यतासम्बन्धेन शाब्दबोधत्वावच्छिन्नम्प्रति विभक्त्यव्यवहितपूर्ववर्त्तिकुम्भपदाऽव्यवहितपूर्ववर्त्त्युपपदज्ञानं कारणम् इत्येवमाकाङ्क्षा । पदार्थान्तरान्वयबोधे तु अभेदसम्बन्धावच्छिन्नसुन्दरत्वाद्यवच्छिन्नप्रकारतानिरूपितसमस्तोपकुम्भादिपदार्थनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति समानविभक्तिकयोस्सुन्दरादिपदोपकुम्भादिपदयोस्समभिव्याहार इत्याकाङ्क्षास्वरूपम् । अतिप्रसङ्गस्यार्थात् विशिष्टे समासे शक्तिस्वीकाररूपातिप्रसङ्गस्याऽभावादित्यर्थः ।

बोधे च ल्युड्घञाद्यन्तसमुदायप्रत्यययोरव्यवहितपूर्वापरीभावस्य समानविभक्तिकयोस्तादृशसमुदायपदपदान्तरयोः समभिव्याहारस्य चाकाङ्क्षात्वोपगमे दर्शिताधिकरणार्थकल्युट्प्रत्ययस्थलीयातिप्रसङ्गस्य दुरुद्धरतया न तत्संभवः।

अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्तसमुदायस्य संयोगविभागत्वादिविशिष्टावाचकत्वं व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वनिराकरणं दीधितिकृतां विरुद्धमिति चेत्का क्षतिः? न हि कस्य चिद्ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम्।

---

धात्वर्थपाकादाविति।

अयमाशयः—उक्तसमासस्थले विशिष्टशक्तिं विहाय विलक्षणाकाङ्क्षाज्ञानम्प्रकल्प्यान्वयबोधः प्रदर्शितस्तथा पाक इत्यादावपि विशिष्टे घञन्ते शक्तिर्न कार्या किन्तु घञो निरर्थकत्वाद्धातोरेव पाकादौ शक्तिःप्रत्ययार्थनिष्ठप्रकारतानिरूपितधात्वर्थपाकनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति ल्युड्घञाद्यन्तसमुदायस्य विभक्तयव्यवहितपूर्ववर्त्तित्वज्ञानं कारणमिति स्वरूपमाकाङ्क्षायाः। अभेदसम्बन्धावच्छिन्नपदार्थान्तरत्वा (सुन्दरत्वा) वच्छिन्नप्रकारतानिरूपितधात्वर्थपाकादिनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वाच्छिन्नम्प्रति ल्युड्घञाद्यन्तसमुदास्य पाक इत्यादेर्विशेषणवाचकसुन्दरादिपदस्य च समानविभक्तिकत्वज्ञानमाकाङ्क्षास्वरूपं कारणम् इत्याशयेनाह धात्वर्थपाकादाविति।

एवम्प्रकारे दोषमाह

यत्राधिकरणार्थको ल्युट् तथाऽप्युक्ताकाङ्क्षाया विद्यमानत्वेन प्रत्ययार्थस्य पदान्तरार्थस्य च धात्वर्थपाकादावेवान्वयापत्तिर्न्न तु प्रत्ययार्थे पाकाधिकरणे, इष्टश्च पाकाधिकरण एवान्वय इति न तत्सम्भवः। एवञ्च पाक इत्यादौ घञाद्यन्तस्यैव पाकादौ शक्तिः कुम्भपदस्योपकुम्भमित्यत्र कुम्भसमीपे लक्षणा तत्र प्रत्ययार्थादीनामन्वये न क्षतिरित्याशयः।

अथ घञन्तसमुदायस्येति।

पाक इत्यादिप्रयोगे घञाद्यन्तस्यैव पाकादौ शक्तिरितिस्वीकारे दीधितिग्रन्थविरोधम्प्रदर्शयति। दीधितिकृता प्रचण्डपदार्थविदा संयोगपदस्य घञन्तस्य विभागपदस्य च संयोगत्वविभागत्वविशिष्टवाचकत्वन्नास्तीति तात्पर्येण संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वन्नास्तीत्युक्तम्। डित्थकपित्थाद्या संज्ञा यदृच्छासंज्ञा, घटपटादिकन्तु नैमित्तिकसंज्ञा तत्र घटत्वं पटत्वञ्च प्रवृत्तिनिमित्तम्। विशिष्टबुद्धौ विशेषणज्ञानं कारणम्। घटत्वपटत्वादिकम्प्रवृत्तिनिमित्तीकृत्यैव प्रवृत्तिविधानात्। यस्यास्संज्ञायाः जातिविशिष्टेऽर्थे सङ्केतस्सा नैमित्तिकसंज्ञेत्युच्यते। अत एव शब्दशक्तिप्र० "जात्यवच्छिन्नसंकेतवती नैमित्तिकी मते"त्युक्तम्। एवञ्च यदि संयोगत्वविभागत्वावच्छिन्ने घञन्तसंयोगविभागादिपदानां शक्तिस्स्यात्तदा संयोगत्वादि प्रवृत्तिनिमित्तीकृत्य

एवं च यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदात् द्वितीयैव, यत्र तु कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभक्तिकमेव। तदुक्तं कातन्त्रपरिशिष्टकृता कथं स्तोकः पाकः ? कृदन्तविशेषणत्वात्। धात्वर्थैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति वदन्ति।

---

नैमित्तिकसंज्ञात्वं स्यात्। संयोगविभागादिपदानान्तु संयोगविभागत्वावच्छिन्ने शक्तिरेव नास्त्यन्यथा संयुनक्ति संयुज्यते विभजते इत्यादौ संयोगविभागपदाऽभावात्संयोगविभागरूपपदार्थयोरुपस्थितिरेव न स्यात्। संयोगविभागरूपार्थोपस्थितिरेव संयुनक्ति-संयोगः विभजते विभाग इत्यादावनुगतस्य धातोरेव लाघवात् संयोगविभागादौ शक्तिस्स्वीकार्य्या न तु घञन्तसंयोगविभागपदयोरित्येवं रीत्या घञस्साधुत्वमात्रार्थकत्वेन निरर्थकत्वमेवेति दीधितिकृतामाशयः। संयोगपाकपदयोस्तुल्यत्वेन घञन्तत्वेन चेति घञो निरर्थकत्वमिति फलति। इत्याशयेनाह घञन्तसमुदायस्येति।

उत्तरमाह—

मया गदाधरभट्टाचार्येण घञन्तसमुदायस्यैव पाकादौ शक्तिः प्रदर्शिता तत्र दीधितिकृतां ग्रन्थो युक्तिबलरहितो बाधको न भविष्यति। एवञ्च संयोगादिपदानामपि घञन्तशक्तिविशिष्टत्वमेव, अधिकरणार्थकल्युट्प्रत्ययस्थले विशेषणीभूतशोभनादिपदार्थस्य पाक एवान्वयस्स्यान्नत्विष्टेऽधिकरणे इति पूर्वोक्तदोषात्पाकादौ घञन्तशक्तिरेव गरीयसीत्याशयः।

ननु घञन्तसमुदायस्यैव पाकादौ यदि शक्तिस्तदा स्तोकम्पाक इत्यादौ कथन्द्वितीयेति तदेवाह एवञ्च यत्रेति।

धात्वर्थमात्रतात्पर्यान्वये स्तोकम्पाकः कृदन्तार्थसमुदायान्वयतात्पर्ये स्तोकः पाक इति मनोरथः।

केचित्तु इति वदन्तीति।

केचिदेवैतद्वदन्ति न वयं वदाम एवम्विधाऽरुचिः।

किञ्च धातुमात्रशक्तेरेव रीतिसम्मतत्वात्कृदन्तसमुदायशक्तिकल्पने महागौरवम्। विवक्षयैव प्रथमाद्वितीयाविभक्त्योर्विधानात्। अत एव कारकविभक्तीनां वैवक्षिकत्वनियमस्सुगतः।

वस्तुतस्तदनिर्देश्यन्नहि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥

इत्युक्तिरपि स्तोकादीनाम्पाकादावभेदान्वयबोधे स्वन्तस्तोकपदसमभिव्याहृतस्वन्तपाकपदत्वरूपाकाङ्क्षाज्ञानं कारणमत एव पचमानावित्यादौ न दोषः। तत्तद्धातूत्तरतत्तत्प्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वकल्पनेन तत्तद्दोषवारणम्।

तदर्थकपदोत्तरविभक्त्या संख्याबोधनेऽभेदसंसर्गावच्छिन्नप्रकारताभिन्नतदर्थविषयताशालिशाब्दबोधसामग्री अपेक्षिता ।

तादृशश्च बोधस्तदर्थविशेष्यकस्तदर्थनिरूपितभेदान्वयविषयकश्च, नीलौ घटावित्यादौ च विशेष्यवाचकपदोत्तरविभक्त्यैव द्वित्वादिकं प्रत्याय्यते ।

---

नच प्रतिबन्धकत्वकल्पनमपि गौरवम् इति वाच्यम् ? एवञ्चेत्तर्ह्याकाङ्क्षाशरीरे प्रथमात्वादिना न प्रवेशोऽपि तु यथावाक्यं सु०अम्०जस्टा०ङे० इत्याद्युपस्थितिकल्पनमाकाङ्क्षाशरीरे तु सुत्वअम्त्वटात्वङेत्वादिनैव प्रथमाद्वितीयादीनाम्प्रवेशो नतु प्रथमात्वादिनेति प्रथमात्वादीनामज्ञानेऽपि क्षतिविरह इतिचेदेतादृशाऽस्वरससूचनायैव वदन्तीत्युक्तमिति बोध्यमेवमरुचिसन्दर्भव्याख्यानात् इत्यलम् ।

तदर्थकपदोत्तरविभक्त्येति ।

परमतम्प्रदर्श्य सिंहावलोकनन्यायेन विशेषणवाचकपदोत्तरविभक्तिस्साधुत्वमात्रार्थेति पूर्वमुक्तमर्थात् विशेषणवाचपदोत्तरविभक्त्यर्थसंख्यायाश्शाब्दबोधे भानन्न भवति । सिद्धान्तस्यैतस्य वचनमात्रेण सिद्धिर्न भवति तदर्थं कार्यकारणभावमाह तदर्थकेत्यादिलेखेन । अयम्भावः, यथा घटोऽस्ति पटोऽस्ति मठोऽस्तीतिवाक्ये घटाद्यर्थकघटादिपदोत्तरसुविभक्तेरेकत्वरूपसंख्यार्थं इतिघटपदजन्यशाब्दबोधे घटे या विषयता भासते सा चाभेदसम्बन्धावच्छिन्नप्रकारताभिन्नैव । तथा च घटपदोत्तरस्वर्थसंख्यायाश्शाब्दबोधे भानम्भवति एको घटः द्वौ घटावित्यादि । नीलो घटःपीतो घट इत्यादौ नीलादौ या प्रकारतास्ति (नीलस्याऽभेदसम्बन्धेन घटेन्वयः) साचाऽभेदसम्बन्धावच्छिन्नैव नत्वभेदसम्बन्धावच्छिन्न प्रकारताभिन्नेति तत्र विभक्त्यर्थसंख्यायाश्शाब्दबोधे भानन्नेति सिद्धम् । एवञ्च किञ्चिदर्थनिष्ठविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताश्रयत्वज्ञानं तद्वाचकपदोत्तरविभक्त्यर्थसंख्याबोधे प्रतिबन्धकमित्येव फलितार्थकार्यकारणभावः ।

तदर्थनिरूपितेति ।

संख्याबोधकविभक्तिप्रकृत्यर्थनिरूपितो यो भेदस्तदन्वयविषयक इत्यर्थः । यथा राज्ञःपुरुष इति । तत्र पुरुषनिष्ठविशेष्यतानिरूपितप्रकारतैव राज्ञि वर्त्तते परन्तु राजनिष्ठा या प्रकारता साऽभेदसम्बन्धाऽनवच्छिन्नैव, भेदसम्बन्धेनैव राज्ञःपुरुषविशेषणत्वम् । एवञ्च तत्र राजपदोत्तरङस्विभक्त्यर्थैकत्वसंख्याया एकराजनिरूपितस्वत्ववान् पुरुष इति शाब्दबोधे भानम्भवत्येव । राज्ञःपुरुष इतिवाक्यजन्यबोधो भेदसम्बन्धविषयक एव । अग्रे प्रत्युदाहरणमाह नीलौ घटाविति ।

केवलान्वयित्वस्यैकत्वनीलो घट इत्यादावपि भानसम्भवाद् द्विवचनान्तप्रयोगमाह नीलौ घटाविति । अत्र अभेदसम्बन्धावच्छिन्ननीलनिष्ठप्रकारतायास्सत्त्वेन नीलपदोत्तरविभक्त्या द्वित्वन्न शाब्दबोधे प्रत्याय्यतेऽपि तु घटपदोत्तरविभक्त्यैव । तथा च

संख्याबोधनेऽभेदसम्बन्धावच्छिन्नप्रकारताभिन्नविषयताज्ञानङ्कारणमितिनियमे सिद्धे क्रियाविशेषणस्तोकादीनां क्रियायामभेदसम्बन्धेनैव प्रकारत्वात्क्रियाविशेषणवाचकस्तोकादिपदोत्तरविभक्त्यर्थसंख्यायाश्शाब्दबोधे भानन्न भवतीति तादृशपदोत्तरं साधुत्वार्थमौत्सर्गिकमेकवचनमेव । स्तोकं स्थीयत इतिवत् अत्र भावे लकारः, स्तोकम्पाकः स्तोकम्पचतीत्यादि सिद्ध्यतीति ।

ननु नीलो घट इत्यादौ नीलाभिन्नो घट इति बोधान्नीलपदार्थघटपदार्थयोरैक्यम् । एवञ्चाभेदसम्बन्धावच्छिन्नप्रकारताभिन्नघटत्वावच्छिन्नविशेष्यताया नीलनिष्ठत्वात् अपि च नीलत्वनिष्ठप्रकारतानिरूपितायास्तस्या नीले विद्यमानत्वादुक्तकार्यकारणभावसत्त्वेन कथन्न नीलपदोत्तरसंख्याप्रतीतिः ? किञ्च नीलो घटः नीलस्येद रूपमितिसमूहालम्बनात्मकशाब्दबोधे नीलपदोत्तरसुप्रत्ययार्थसंख्याबोधस्स्यादेवेति तत्राऽभेदसम्बन्धावच्छिन्नप्रकारताया विद्यमानत्वात् । किञ्च वेदाः प्रमाणमित्यादौ सम्पन्नो व्रीहिरित्यादौ च स्वप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन स्वाश्रयप्रमाणत्ववत्त्वसम्बन्धेन स्वाश्रयाश्रयत्वसम्बन्धेन वा प्रमाणादावेकत्वान्वये प्रमाणादिनिष्ठविषयताया अभेदसम्बन्धावच्छिन्नप्रकारतात्मकत्वात्प्रमाणादावेकत्वसंख्याया इष्टोऽप्यन्वयो न स्यादित्यव्याप्तिरिति वाच्यम् ? तद्धर्मावच्छिन्नबोधकतत्पदोत्तरविभक्तिप्रयोज्यसंख्यानिष्ठप्रकारतानिरूपिततद्धर्मावच्छिन्नबोधकतत्पदप्रयोज्याऽभेदसम्बन्धावच्छिन्नप्रकारताभिन्नविषयतानिरूपकशाब्दसामग्री प्रयोजिकेतिकार्यकारणभावः । नीलनिष्ठाया अपि घटत्वावच्छिन्नविशेष्यताया नीलत्वावच्छिन्नत्वविरहात् नीलत्वनिष्ठप्रकारतानिरूपिताया अपि तन्निष्ठविशेष्यताया नीलत्वावच्छिन्नत्वविरहात् षष्ठ्यन्तपदप्रयोज्यविषयतायाःप्रथमान्तनीलपदप्रयोज्यत्वविरहात् नोक्तस्थलद्वये दोषः । वेदाःप्रमाणं सम्पन्नो व्रीहिरित्यादौ प्रमाणत्वे व्रीहित्वे च विशेषणवाचकपदोत्तरविभक्त्या संख्याबोधार्थं कार्यतावच्छेदककोटीयप्रकारतायाम्पर्य्याप्तिसम्बन्धावच्छिन्नत्वनिवेशान्न दोषः । ननु प्रमाणत्वव्रीहित्ववत् संख्याया एकत्वात्मिकाया नीलत्वेऽप्यन्वयोऽस्तु तथा च नीलो घटा नीलो घटावितिप्रयोगस्स्यादिति चेन्न ? सति तात्पर्ये तादृशान्वयेन तादृशप्रयोगस्येष्टत्वादिति पूर्वमेवोक्तत्वात् ।

ननु समानाधिकरणप्रकारताविशेष्यतयोरभेदसम्बन्ध इति जगदीशमतम् तयोरवच्छेद्यावच्छेदकभावसम्बन्ध इति गदाधरमतमिति पक्षद्वयम् । तत्राद्यपक्षे संख्याया नीलादावन्वयनिषेधेऽपि द्वितीयपक्षे नीलौ घटावित्यादौ नीलत्वादिनिष्ठप्रकारतानिरूपितविशेष्यताया अभेदसम्बन्धावच्छिन्नभिन्नत्वान्नीलादौ संख्यान्वयस्स्यादेवेति चेन्न ? अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकपदप्रयोज्योपस्थितीयविशेष्यताप्रयोज्यभिन्नविषयताकशाब्दसामग्र्या अपेक्षेतिनियमःकार्यकारणभावीयः । उदाहरणञ्च नीलो घटः

पदे पदसामानाधिकरण्यन्तु—तत्पदप्रयोज्यविषयतानिरूपिताभेदसम्बन्धावच्छिन्नविषयताप्रयोजकत्वम् तत्पदे तत्पदसामानाधिकरण्यमिति रीत्याऽवगन्तव्यम् ।

एवं च क्रियाविशेषणवाचकपदोत्तरविभक्त्या अबाधितयोरपि द्वित्वबहुत्वयोः प्रत्यायनासंभवात्तादृशपदोत्तरमौत्सर्गिकमेकवचनमेव भावाख्यातस्थलवदित्यवधेयम् ।

---

इति । संघटनप्रकारश्चेत्थम् नीलत्वप्रकारकनीलविशेष्यता तु नीलप्रकारताप्रयोजकम्पदन्नीलपदन्तत्प्रयोज्योपस्थितीयैवेति तत्प्रयोज्यत्वस्य शाब्दबोधीयविषयतायामिष्टायां सत्त्वेन तद्भिन्नविषयत्वाऽभावात्तादृशापत्तेर्वक्तुमशक्यत्वात् । ननु समानाधिकरणप्रकारताविशेष्यतयोरभेदसम्बन्ध इति जगदीशमतन्तयोरवच्छेद्यावच्छेदकभाव इति गदाधरमतमनयोः किञ्ज्यायस्तरमिति प्रश्नः ? यथा संयोगेन पुरुषाऽभाववान् दण्ड इति बुद्धिं संयोगेन पुरुषवान् दण्ड इति बुद्धिःप्रतिबध्नाति तथा अभेदपक्षे रक्तदण्डवत्पुरुषवानयन्देश इतिबुद्धेरपि प्रतिबन्धकत्वाऽपत्तिस्संयोगसम्बन्धावच्छिन्नपुरुषत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताया रक्तत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताऽभेदात् अवच्छेद्यावच्छेदकभावे तु न प्रतिबन्धकत्वम् । संयोगसम्बन्धावच्छिन्नपुरुषत्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावद्दण्डत्वावच्छिन्नविशेष्यताशालिज्ञानस्यैव प्रतिबन्धकतावच्छेदकत्वेन विरोधाऽभावात् । एवं संयोगेन पुरुषवान् दण्डः संयोगेन पुरुषाऽभाववान् दण्डः रक्तदण्डवत्पुरुषवानयन्देश इति । तस्माद् गदाधरमतमेव सम्यगित्यलम् ।

अबाधितयोरिति ।

यत्र हि कर्त्ता एक एव प्रतीयते स पाकद्वयं पाकत्रयं वा करोति तस्मिन् पाके यद्यपि न द्वित्वबहुत्वयोर्बाधस्तथापि पाकादिक्रियाविशेषणवाचकस्तोकादिपदोत्तरद्विवचनादिविभक्त्या बहुभिःप्रकारैरपि पाकादिक्रियागतद्वित्वबहुत्वयोःप्रत्यायनन्न भवत्यनुभवविशेषविरोधात् । अत एव, "द्विबह्वोर्द्विवचने" इत्येव न्यासःपार्थक्येन "द्व्येकयोर्द्विवचनैकवचने" बहुषु बहुवचन"मितिसूत्रद्वयक्लिमर्थमिति भाष्यकृतोक्तम् । अर्थादेकवचनमुत्सर्गतःकरिष्यत इति सुतरां सिद्धान्तस्समायाति । तथाच भावाख्यातस्थलवत्क्रियाविशेषणवाचकपदोत्तरमेकवचनमेव साधुत्वार्थं सर्वैः प्रयोक्तव्यमिति तेनेतिहेतुम्पचतीत्यादयःप्रयोगा उपपद्यन्ते । अत एवाख्यातस्थले प्रयोगसंस्कारमात्रार्थका अपि शप्श्यनादिविकरणाःप्रतिनियतास्सङ्गच्छन्ते ।

भावाख्यातस्थलवदिति ।

भावाख्यातस्थले साधुत्वमात्रार्थमेकवचनप्रयोगस्तथैव क्रियाविशेषणवाचकपदोत्तरैकवचनमपि ।

अत्र केचित्—

फलावच्छिन्नव्यापारे शक्तिर्धातूनाम् । नच सर्वेषामपि सकर्मकत्वाऽपत्तिरिति वाच्यम् ? फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् फलसमानाधिकरणव्यापारवा-

अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः घटो घटः, दण्डवान् दण्डवान्, पाकं पचतीत्यादौ घटत्वदण्डवत्त्वपाकत्वाद्यवच्छिन्ने तत्तद्रूपावच्छिन्नस्य तथाविधान्वयबोधानुदयात्।

---

चकत्वमकर्मत्वम् इति लक्षणात्। किञ्च कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम् तदनन्वय्यर्थकत्वमकर्मकत्वन्तेनाध्यासिता भूमय इत्यादौ कर्मप्रत्ययसिद्धिः।

"कर्त्तु"रिति सूत्रेण तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन फलाश्रयस्यैव कर्मत्वविधानम्। अत एव स्तोकम्पचतीत्यादौ स्तोकपदार्थस्य तादात्म्येन फलाश्रयत्वात्कर्मत्वम्। एतत्फलितमेव क्रियाविशेषणानां कर्मत्वमिति। अत्र क्रियापदं क्रियत इति व्युत्पत्त्या फलार्थकम्। नच स्तोकःपच्यत इत्येवं कर्मणि लकारापत्तिरिति वाच्यम्? कर्त्तृपदसाहचर्येण भेदेन धात्वर्थान्वितस्यैव कर्मणो लकारादिप्रत्ययविधायकशास्त्रे ग्रहणेनोक्तप्रयोगाऽसिद्धेः। अतः "कर्त्तृकर्मणोःकृती"त्यनेन स्तोकम्पाक इत्यादौ न षष्ठी। ननु मन्दं वहति पवन इत्यादौ व्यापारपदार्थेऽभेदसम्बन्धेनैव मन्दपदार्थान्वयः एवञ्च तत्र कर्मत्वन्न स्यादतोऽपूर्वकर्मत्वविधायकं "क्रियाविशेषणानां कर्मत्वमेकत्वन्नपुंसकत्वञ्चे"ति क्रियापदन्तत्र व्यापारार्थकन्नतु फलार्थकमिति चेन्न? मन्दपदार्थस्य व्यापारेऽन्वयेन व्यापारस्य मन्दत्वे परम्परया तज्जन्यफलस्याऽपि मन्दत्वं युक्तमेवेति कर्मत्वसौष्ठवात्। ननु "कर्मणि द्वितीये"तिसूत्रस्य तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन फलाश्रये प्रवृत्तिस्वीकारे गौरवाधिक्यं गुर्वर्थबोधकत्वञ्चेति चेन्न? कर्मत्वशक्तिमत्त्वेनैव कर्मपदशक्यत्वस्वीकारेण लाघवादित्याहुरित्यलम्।

ग्रन्थारम्भेऽभेदेन प्रातिपदिकार्थे योऽन्वयस्तत्र समानविभक्तिकत्वं कारणमित्यादिनियमप्रबन्धमुक्त्वेदानीमभेदविषयकोऽन्योपि नियम उच्यतेऽभेदान्वयबोधश्चेति। विरूपोपस्थितयोरेवेति।

ननु सर्वत्राऽभेदान्वयश्चैकव्यक्तेरेव भवतीत्युपस्थितयोरितिद्विवचनान्तोपादानं कथङ्कारं सुगतमिति चेन्न? तात्पर्यबलान्मूलभूतत्वाच्च पदयोरित्यद्ध्याह्रियते षष्ठ्यर्थो जन्यत्वम्। तस्य च बोधेऽन्वयः, उपस्थितयोःकोऽर्थ उपस्थापकपदयोः विरूपाभ्यां कोऽर्थो विभिन्नरूपाभ्यामुपस्थिते विरूपोपस्थिते पदे तयोर्विरूपोपस्थितयोःपदयोरिति यावत्। तथाच भिन्नरूपेण तत्तदुपस्थापकपदजन्य एवाभेदान्वयबोध इति। विभिन्नाभ्यां नीलत्वघटत्वधर्माभ्यामुपस्थितयोरेवार्थयोर्नीलघटयोरभेदान्वयबोध इति कृष्णम्भट्टाः।

केचित्तु—

अत्रायमाशयो विभाति, शाब्दबोधीयाऽभेदत्त्वावच्छिन्ना या सांसर्गिकविषयता सा उपस्थितिविषयताविशिष्टा बोध्या। वैशिष्ट्यञ्च स्वभिन्नोपस्थितिविषयतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वोभयसम्ब-

**अथ तत्प्रयोजकसमानविभक्तिकत्वादेः सत्त्वात्कथं न तादृशान्वयबोधः ? अत्राहुः। यादृशं फलं क्वचित्प्रसिद्ध्यति तादृशस्यैवापत्तिः सम्भवति क्लृप्तसामग्रीबलात् ।**

---

न्धेन। विरूपता चात्र यत्किञ्चिद्धर्मापेक्षया बोध्या। तेन विशेष्यताप्रकारतयोरवच्छेदकस्यैकत्वसत्त्वेऽपि न हानिरिति फलति। एको घटशब्दो घट इवाचरति घटति घटतीति घट इत्यर्थकः अपरश्च कम्बुग्रीवादिमद्व्यक्तिरूपार्थकः, उभयोस्समूहालम्बनदशायामभेदान्वयविषयशाब्दबोधप्रसिद्ध्या नात्र षष्ठ्यर्थो विषयत्वमपि तु प्रतियोग्यनुयोगिनिरूपितत्वादिकम्। एतद्भिन्ननिरासार्थमेवपदोपादानम्।

नचैवमपि नीलो घटःघटो घट इत्याकारकस्समूहालम्बनात्मको यत्र शाब्दबोधस्तत्राऽपि घटत्वावच्छिन्नप्रकारता-घटत्वावच्छिन्नविशेष्यतानिरूपिताभेदनिष्ठसंसर्गता निरूपकत्वसत्वेन व्यभिचार इति वाच्यम्? उपस्थितशब्दे भावे क्तप्रत्ययः उपस्थानमुपस्थितम् उपस्थितिः इत्यर्थः। विरूपे विभिन्नप्रकारिके उपस्थिती तत्प्रयोज्या या प्रकारताख्या विशेष्यताख्या विषयता तन्निरूपको योऽभेदस्तद्विषयकबोधः। अस्मिन्कल्पे षष्ठ्यर्थो विषयता तत्रोपस्थितिपदार्थस्य प्रयोज्यत्वसम्बन्धेनान्वयः, तस्याश्च निरूपकत्वसम्बन्धेनाऽभेदेऽन्वयः, विरूपोपस्थितिप्रयोज्यविषयतानिरूपकोऽभेद इति फलति। दोषवारणोपायस्तु उपस्थितिविषयताविशिष्टाऽभेदनिष्ठा शाब्दबोधीया संसर्गता। वैशिष्ट्यञ्च स्वावच्छेदकधर्मेतरधर्मावच्छिन्नविषयताप्रयोज्यविशेष्यतानिरूपितत्वस्वप्रयोज्यप्रकारतानिरूपितत्वोभयसम्बन्धेन। नीलो घटः घटो घटः इति समूहालम्बनेऽभेदनिष्ठायास्संसर्गताभिन्नत्वात्तत्र नियमाऽप्रवृत्तौ तद्वाक्यस्याऽप्रामाणिकत्वात्। अयमाशयः

अभेदसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति समानविभक्तिकत्वं कारणं यथा नीलो घट इति नीलघटयोरभेदान्वयस्तथैव घटो घट इत्यपि प्रयोगस्स्यात्। घटस्य स्वात्मना भेदाऽभावेन योग्यतात्त्वात्स्वात्मन्यभेदसम्बन्धेनान्वयाद् घटप्रकारकघटविशेष्यकशाब्दबोधस्स्यादिति प्रशङ्क्याह अभेदान्वयबोधश्चेति। नीलो घट इत्यादौ नीलत्वघटत्वधर्मयोर्विरुद्धत्वात्ताभ्यामुपस्थितयोर्नीलघटयोरभेदान्वयःपरन्तु घटो घट इत्यत्र घटत्वावच्छिन्ने घटत्वावच्छिन्नस्याऽभेदसम्बन्धेनान्वयो न भवति घटत्वयोर्विरुद्धधर्मत्वाभावात्। एवं संयोगेन दण्डवत्त्वावच्छिन्ने दण्डवत्त्वावच्छिन्नस्य पाकपचतिपदाभ्याम्पाकत्वेन रूपेणोपस्थितस्य चाभेदेनान्वयो न भवति। कर्तृविशेषणतया पाकोपस्थितिःपचतिपदेनाऽपि पाकपदेनाऽपि पाकत्वेन रूपेणैवेति ।

ननु सामग्रीसत्त्वेऽवश्यङ्कार्यञ्जननीयमितिनियमः, घटो घट इत्यत्र समानविभक्तिकत्वाकाङ्क्षायोग्यतातात्पर्याऽसत्त्यादिकारणानाम्विद्यमानत्वेनाभेदसम्बन्धावच्छिन्नघट-

---

सामग्रीत्वञ्च—कार्योत्पत्तिप्रयोजकतावच्छेदकीभूतसमुदायत्वावच्छिन्नत्वम्।

यादृशं च सर्वथैवाप्रसिद्धं तादृशस्य चापादकाप्रसिद्धेरापत्तिरशक्यैवेति घटत्वाद्यवच्छिन्नविशेष्यताकाभेदसंसर्गकघटत्वाद्यवच्छिन्नप्रकार-

---

त्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकश्शाब्दबोधः कथन्नेत्याशयेनशङ्कते-तेऽथेति । तत्प्रयोजकेत्यस्याऽभेदान्वयबोधप्रयोजकेत्यर्थः । यादृशमिति । यथा तन्तुपुञ्जेन पटोत्पत्तिरूपं फलं सम्भवत्येवेति तन्त्वादिपटोत्पादकसामग्रीवलात्पटरूपं फलं सम्भवति । यादृशञ्च

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।

कूर्मक्षीरचये स्नातश्शशशृङ्गधनुर्द्धरः ॥

इत्यादिकं क्वचिदपि न प्रसिद्धन्तदापादककारणसामग्र्यास्सर्वथैवाप्रसिद्धत्वेन शशविषणाद्यापत्तेरशक्यत्वमेवेति । तथैव अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्य कदाचिदपि क्वचिदपि केनाऽप्युपायेनादृष्टचरत्वादश्रुतचरत्वाच्च तदापत्तिर्न सम्भवति कथमपि । तद्धर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयस्याऽप्रसिद्धत्वेन तदापत्तेरशक्यतरत्वात् । तथाहि, अहन्तर्कयामीत्याकारकानुभवसाक्षिकमानसत्वव्याप्यजातिविशेषाश्रयस्तर्कस्तर्क एवापत्तिशब्दार्थ इति केचित् । कतिपयकारणाधिकणे कार्याऽभावप्रयोजकजिज्ञासैवापत्तिरिति गुरवः ।

किञ्च तदभावप्रयोजकीभूताऽभावप्रतियोगिविषया जिज्ञासैवापत्तिपदार्थः । उदाहरणञ्च दण्डाभावे घटाऽभाव इति, घटाभावस्य प्रयोजकीभूतो दण्डाऽभावस्तत्प्रतियोगी दण्डस्तस्य दण्डस्य या जिज्ञासा सैवापत्तिपदार्थः । किमभावप्रयुक्तोऽत्र शाब्दबोधाऽभाव इति प्रश्नकर्त्तुर्जिज्ञासा, सा च सम्भवत्येव नहि, अभेदसंसर्गकघटत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकशाब्दबोधस्य सर्वथैवाऽप्रसिद्धत्वेन तत्कारणसमूहस्यापि सर्वथैवाऽप्रसिद्धत्वात् अभेदसंसर्गकघटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्य योऽभावस्तत्प्रयोजकीभूतस्याऽभावस्य यःप्रतियोगी तद्विषया या जिज्ञासा सैवापत्तिरर्थात्तद्विषयाया एव जिज्ञासायास्सम्भव इति तत्त्वम् । प्रकृते च कारणाभावान्नापत्तिस्सम्भवतीति समाधानम् । कार्यापत्तिविषये कार्यव्याप्यत्वेन कारणकूटस्यैवापादकत्वान्नास्त्येव शुद्धघटत्वावच्छिन्नप्रकारकशुद्धघटत्वावच्छिन्नविशेष्यकशाब्दबोधत्वावच्छिन्नम्प्रति प्रसिद्धेति नापत्तिरिति हृदयम् ।

ननु घटे नीलघटाऽभेदाऽन्वयावगाहनतात्पर्ये दण्डवति रक्तदण्डवदभेदान्वयाऽवगा-

---

तर्क इति--अयथार्थानुभवीयत्रिविधभेदमध्ये एकोऽयम्भेदः । लक्षणञ्चास्य व्याप्यविपयकाहार्यज्ञानजन्यव्यापकविषयकाहार्यज्ञानत्वम् । आहार्यज्ञानञ्चेह वाधकालीनेच्छाजन्यज्ञानम्बोध्यम् । आपाद्यव्याप्यापादकवत्तानिश्चयः आपाद्यव्यतिरेकनिश्चयो वा तर्कजनकोऽत्र मतभेदः । व्याप्तिज्ञानप्रतिवन्धकव्यभिचारशङ्कानिवर्त्तनाय चास्य प्रामाण्यम् स्वीकृतिर्वा । यथा हि यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्यत्र वह्न्यभाव आपादकः धूमाभावश्चापाद्यः । आत्माश्रयान्योन्याश्रयचक्रकानवस्थितितदन्यबाधितार्थभेदात् पञ्चविधो ज्ञेय इति ।

कशाब्दबोधस्य क्वचिदप्यनुदयात्कथं तदापत्तिः ? अथ घटो नीलघटः दण्डवान् रक्तदण्डवानित्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः।

विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति चेत्तर्हि घटाद्यंशे विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघटत्वाद्यवच्छिन्नाभेदान्वयबोधप्रयोजिका, तदभावादेव घटो घट इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित्।

---

हनतात्पर्येण च घटो नीलघटः दण्डवान् रक्तदण्डवानित्यादौ विधेयकोटावर्थाद् विशेषणकोटावधिकावगाहिशाब्दबोधस्याभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकस्य अभेदसम्बन्धावच्छिन्नरक्तत्वावच्छिन्नदण्डवत्त्वावच्छिन्नप्रकारतानिरूपितदण्डवत्त्वावच्छिन्नविशेष्यताकस्य च दर्शनेनात्र घटत्वमेव प्रकारतावच्छेदकं विशेष्यावच्छेदकञ्चैकम्, दण्डवत्त्वम्प्रकारतावच्छेदकं विशेष्यतावच्छेदकञ्चैकमेव। तथाच घटो नीलघट इत्यादावभेदसंसर्गकनीलघटत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकबोधस्या "धिकन्तु प्रविष्टं न तु तद्धानि"रिति न्यायबलेन प्रसिद्धत्वात्तादृशकारणसामग्र्या घटो घट इत्यत्र शाब्दबोधःपूर्ववत्स्यादिति तात्पर्येणाशङ्कतेऽथेति। उत्तरयति तर्हीति। अयम्भावः, घटो नीलघट इत्यत्र शुद्धघटे शुद्धघटस्याभेदेन सम्बन्धेनान्वयो न भवत्यपि तु नीलघटस्यैवान्वयः।

एवञ्च घटे विशेषणीभूतो घटस्तत्र विशेषणीभूतो नीलपदार्थ इतिविशेषणतावच्छेदकत्वेनैव नीलपदार्थप्रतीतिर्नीलपदार्थप्रतीतिनियामकञ्च नीलपदजन्यनीलोपस्थितिस्तत्तात्पर्य्यज्ञानञ्चैतादृशसामग्रीसत्त्वे शुद्धघटत्वावच्छिन्ने नीलघटत्वावच्छिन्नस्याऽभेदेनान्वयः। नीलपदसमभिव्याहारादिकारणकूटाऽभावाद् घटो घट इत्यत्राऽभेदसंसर्गकघटप्रकारकघटविशेष्यकशाब्दबोधाऽभावादित्याह केचिदिति।

नवीनैर्स्वीकारादिति।

उद्देश्यघटकसकलपदार्थानाम्विधेयघटकत्वेनैव भानमितिनियमः। अभेदान्वयबोधस्थले उद्देश्यघटकाश्रयांशात्मकत्वमवश्यमेव विधेयस्येति तात्पर्य्यम्। विधेयत्वञ्च अपूर्वबोध्यत्वम्। अर्थबोधनाय लोके वाक्यप्रयोगः। वाक्यरचनाफलञ्च प्रवृत्तिनिवृत्त्युपयोगिविशिष्टविषयकज्ञानसम्पत्तिस्संशयनिवृत्तिश्चेति सर्वाभिमतःपन्थाः। एवञ्च घटत्वेनावगतेऽप्युद्देश्ये घटे घटो नीलघटो नवेतिसंशयस्य सर्वानुभवसम्पन्नतया नीलघटार्थिनान्तत्र प्रवृत्तिर्न्न स्यात्। नीलाऽभिन्नघटविषयकशाब्दबोधमात्रे तु असमानप्रकारकतयोक्तसंशयेन साकम्प्रतिबध्यप्रतिबन्धकभावो न स्यात्। अतो विधेयांशेऽधिकावगाहिशाब्दबोधो मन्तव्यस्तथाच नीलघटाऽभिन्नो घट इत्येव शाब्दबोधः। एतस्य च घटो नीलघटो नवेतिसंशयप्रतिबन्धकत्वम्भवत्येवेति अगत्या कस्यचिदंशस्या-

पूर्वत्वेऽपि तद्विशिष्टत्वेन पूर्वमवगतोऽप्यपूर्व एवेत्यपूर्वबोध्यत्वरूपविधेयत्वमस्त्येवेत्य धिकावगाहिबोधो नवीनैरङ्गीकृतः । मूले नवीन इतिनामोच्चारणेन प्राचीनानान्नानुमतिरस्मिन्पक्ष इति व्यञ्जना ।

प्राचीनास्तु

अभेदान्वयबोधस्थले उद्देश्यस्य अपूर्वबोध्यत्वरूपविधेयत्वन्नास्त्युद्देश्यस्य घटादेर्घत्वेन रूपेण प्रथमावगतत्वात्पूर्वावगतत्वात् विधेयतयोद्देश्यावगाही शाब्दबोधो न भवतीत्यर्थाद् घटो नीलघट इत्यादौ नीलाऽभिन्नो घट इत्येवमेव शाब्दबोधो न कदाचिदपि नीलघटाऽभिन्नो घट इति तात्पर्य्यम् । नन्वेवमभिधाने नीलो घट इत्यादावपि केवलनैल्यमात्रस्य विधेयत्वमापद्येत नत्वाश्रयांशस्य घटस्याऽपि, घटस्य घटत्वेन रूपेण पूर्वावगतत्वादिति कीदृशो घट इतिप्रश्ने नीलो घट इत्युत्तरणे घटस्य पूर्वमेवानुगतत्वादिति चेन्न ? नैल्यस्य घटपदार्थेन साकमभेदान्वयो वाधितोऽनुभवविरुद्धश्च । नैल्यमात्रान्वयतात्पर्येण लोको नीलो घट इति न प्रयुङ्क्तेऽपि तु नीलघटयोरभेदान्वयतात्पर्येणैव । अभेदान्वयप्रतिभाषणेच्छयैव नीलो घट इति प्रयुङ्क्ते भेदान्वयप्रतिभाषणेच्छया नैल्यमात्रान्वयतात्पर्येण च नीलस्य घट इतिषष्ठ्यन्तघटितमेव प्रयुङ्क्ते । राज्ञःपुरुष इतिवन्नतु राजा पुरुष इतिवत् । अभेदान्वयबोधम्प्रति समानवचनकत्वनियमेनैव नीलो घटःनीलस्य घट इत्येनयोर्वाक्ययोर्वैलक्षण्यम् । यदि नैल्यमात्रस्य भेदसम्बन्धेनाऽपि घटेऽन्वयस्तर्हि शिष्टाभिमतवाक्यवैलक्षण्यानुपपत्तिस्तथाचागत्याऽश्रयांशस्य घटस्याऽपि विधेयकोटौ प्रवेशेन नीलघटयोर्द्वयोरेवापूर्वबोध्यत्वरूपविधेयत्वन्नतु नैल्यमात्रस्येति सिद्धान्तः । घटो नीलघट इत्यादावपि शास्त्रसिद्धान्तविरोधाऽभावाल्लोकविरोधाऽभावाच्च नीलाऽभिन्नो घट इत्येव बोधो नीलमात्रस्यैव विधेयत्वेन भानम् । एवञ्च नीलस्यैवापूर्वबोध्यत्वरूपविधेयत्वान्नीलाऽभिन्नो घट इति सिद्धान्तो नतु नीलघटाऽभिन्नो घट इति प्राचीनाभिमतिः ।

ननु नवीनमतमभिप्रेत्यापत्तिवारणोपायश्च घटो घट इत्यत्र नीलोपस्थापकनीलपदविरह एवेति पूर्वमुक्तं कथं सङ्गच्छते । नीलोपस्थितिविरहेऽपि घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्य पीतो घटःरक्तो घट इत्यादिष्वपि प्रतीतिविषयत्वात् । तथाच नीलोपस्थितिविरहस्याऽकिञ्चित्करत्वाद् घटो घट इत्यादावभेदसंसर्गकघटप्रकारकघटविशेष्यकबोधस्स्यादेवेति चेन्न ? नीलघटो घट इत्युपलक्षणम्पीतो घटो घटः रक्तघटो घट इत्यादीनामपि । तथाहि, घटत्वेतरधर्मोपस्थापकसामग्रीसत्त्वेऽभेदान्वयबोधो घटत्वेतरधर्मोपस्थापकसामग्र्या अभावेनाऽभेदान्वयबोध इति तात्पर्यात् । घटो घट इतिस्थले तु घटेतरधर्मोपस्थापकसामग्र्या अभावेनामेदान्वयबोधो न भवतीत्याशयात् । किञ्च नीलघटो घट इतिस्वरूपे नीलघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वादिरूपमेव तद्धर्मावच्छिन्नकार्यंसत्त्वम्, यच्च नीलघ ो घट इत्याद्याकांक्षाज्ञानजन्यतावच्छेदकन्तदवच्छि-

न्नसामग्रीप्रयोज्यमेव, नीलादिपदजन्यनीलाद्युपस्थितिघटितसामग्र्या अभावेन घटो घट इत्यादावभेदान्वयाऽभावात्। ननु प्रसिद्धव्यक्तेः कस्या अप्यन्यत्रोत्पत्तेरसम्भवो व्यवहारसिद्धस्तदापत्तिः कथमिति प्रश्ने प्रसिद्धो यो धर्मस्तदवच्छिन्नकार्यतानिरूपितकारणताश्रयबलेन तद्धर्मावच्छिन्नकार्यस्याऽपत्तिरिति तात्पर्यकल्पनम्। एवञ्च अभेदसंसर्गकघटत्वावच्छिन्नप्रकारकघटत्वावच्छिविशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति प्रथमान्तघटपदसमभिव्याहृतप्रथमान्तघटपदत्वादिरूपाकाङ्क्षाज्ञानादेरेव कारणत्वेन तादृशसामग्र्याश्च नीलघटो घट इत्यत्रत्यायास्सत्त्वेन नीलाद्युपस्थितिविरहस्य निरर्थकत्वेन घटो घट इत्यत्राऽभेदान्वयस्स्यादेवेति चेन्न ? निर्विशेषस्य सामान्यस्याऽभावेन सामान्यधर्मावच्छिन्ने कार्ये जननीये विशेषधर्मावच्छिन्नकार्योत्पादकसामग्र्या एवापादकत्वमितिनियमस्तथाच घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वरूपसामान्यधर्मावच्छिन्नकार्योत्पत्तिम्प्रति नीलघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वरूपविशेषधर्मावच्छिन्नकार्योत्पादकसामग्र्या नीलाद्युपस्थितिर्घटिताया एवापादकत्वेन नीलाद्युपस्थितेरपेक्षणीयत्वेन तदभावाद् घटो घट इत्यत्रापत्त्यभाव इति तात्पर्यवर्णनात्।

इति परीक्षालेखप्रकारः।

---

## अथ शास्त्रार्थप्रकारः।

शुद्धघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति नीलघटत्वावच्छिन्नप्रकारतया प्रसिद्धा सामग्री कथं घटो घट इत्यादौ शाब्दबोधञ्जनयेदित्येवञ्च नीलाद्युपस्थापकनीलपदघटितसामग्र्या अभावेन घटो घट इत्यादावदोष इति विशिष्टाभिधानाच्च।

ननु व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्र्याः केन रूपेण कारणता, व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्रीकूटत्वेन कारणता, आहोस्वित् यत्किञ्चित्सामग्रीत्वेन ? आद्ये नीलघटो घट इत्यत्र शाब्दबोधो न स्यात्पीताद्युपस्थापकपदाऽभावात् सामग्रीकूटाऽभावात्। अन्त्ये योग्यतातात्पर्यज्ञानयोस्सत्त्वेन घटो घट इत्यादावापत्तिस्तदवस्थैवेति। यत्किञ्चिद्व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्र्या एव कारणत्वमित्यपि न वक्तुं शक्यते ! नीलघटो घट इत्यादौ यत्किञ्चिद्व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्रीसत्त्वेन घटो घट इत्यादौ यत्किञ्चिदसत्त्वेन निर्वाहेऽपि यत्किञ्चित्पदप्रवेशेऽननुगमदोषात्प्रयासो निरर्थकः।

अथ नीलघटत्वावच्छिन्नप्रकारताकशाब्दबोधे नीलघटो घट इत्याकाङ्क्षाज्ञानस्य कारणत्वम्। पीतघटत्वावच्छिन्नप्रकारकशाब्दबोधे पीतो घट इत्याकाङ्क्षाज्ञानस्य कारणत्वम्। एवम्प्रत्येकङ्कार्यकारणभावकल्पनापत्तावनन्तकार्यकारणभावकल्पनापत्तिः। एवञ्च लाघवात् घटत्वावच्छिन्नघटत्वेतरधर्मावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्दबोधे प्रथमान्तघटपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्य

अथ द्रव्यत्वादौ धर्मितावच्छेदकतासंसर्गेण प्रसिद्धस्य शुद्धघटत्वाद्यवच्छिन्नप्रकारकाभेदान्वयबोधस्य घटत्वादावापत्तिसंभवात् । न च तत्रापादकाभावः, तात्पर्यज्ञानविशेषादिघटितया धर्मितावच्छेदकतया द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या एवापादकत्वात् ।

---

हेतुताकल्पनावश्यकत्वेन घटो घट इत्यत्राऽपि तादृशाकाङ्क्षाज्ञानस्य सत्त्वेन घटत्वावच्छिन्नघटत्वेतरनीलत्वाद्यवच्छिन्नप्रकारताकशाब्दबोधाऽपत्तिसम्भवनिरासाय ग्रन्थकारप्रवृत्तिरर्थात् घटत्वेतरधर्मस्योपस्थापकाऽभावान्न शाब्दबोधो घटो घट इत्यत्र, तत्र पदजन्यवृत्तिज्ञानाधीनोपस्थितेः कारणत्वात्पूर्वमुक्त मपि प्रकारान्तरेणैतत्पुनरपि सारल्यार्थं विस्पष्टीकृतम् । आपत्तौ वारितायामपि द्रव्यं घट इतिदृष्टान्तेन घटो घट इत्यत्र पुनरपि दर्शयति अथेति । धर्मितावच्छेदकतेत्यस्य विशेष्यतावच्छेदकतेत्यर्थः । द्रव्यं घट इत्यत्र द्रव्यं धर्मी धर्मितावच्छेदकन्द्रव्यत्वम् , द्रव्यत्वनिष्ठा विषयता च धर्मितावच्छेदकतारूपा । तत्रैव च सम्बन्धत्वम् तेनैव सम्बन्धेन द्रव्यत्वे शाब्दबोधश्शुद्धघटत्वावच्छिन्नप्रकारकाऽभेदान्वयो यथा तथैव घटो घट इत्यत्राऽपि धर्मितावच्छेदकतासम्बन्धेन घटत्वे शुद्धघटत्वावच्छिन्नप्रकारकाऽभेदान्वबोधस्यापत्तिरस्त्येवेत्याह द्रव्यत्वादाविति । नच धर्मितासम्बन्धेन कार्यकारणभावोऽस्त्वलमवच्छेदकत्वनिवेशेन तत्तद्धर्मिणाम्भिन्नत्वेऽप्येकधर्मावच्छिन्नधर्मितया अनुगमेन सकलधर्मिषु धर्मितासम्बन्धेन शाब्दबोधो भविष्यत्येवेति वाच्यम् ? "जात्याकृतिव्यक्तय : पदार्थ" इतिसूत्रबलेन द्रव्यत्वेऽपि शाब्दबोध इति व्यवहारानुपपत्तिस्तेन धर्मितासम्बन्धेन द्रव्यत्वस्य कार्याधिकरणवृत्तित्वाऽभावात् । विषयतासम्बन्धेन द्रव्यत्वस्य कार्याधिकरणवृत्तित्वाभावात् । विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेनोपस्थित्यादिकङ्कारणमिति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे विषयाऽनिवेशप्रयुक्तलाघवबलेनैवापत्तिप्रदर्शनन्तदेवाह धर्मितेति ।

धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादाविति—

कार्यतावच्छेदककारणतावच्छेदकान्यतरसम्बन्धेन कार्यकारणान्यतराधिकरणीभूतो यो देशस्तदवच्छिन्नतद्धर्मावच्छिन्नकार्योत्पत्तिप्रयोजकत्वन्तु तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नघटितसमुदायात्मकसामग्र्या एवेति नियमः । अत एव कपाले घट उत्पद्यत इतिवाक्येऽवच्छेदकत्वं सप्तम्यर्थमादाय लोके व्यवहारस्सार्वजनीनस्तद्वत् पर्वते घट उत्पद्यत इति न भवति तद्देशावच्छिन्नत्वाऽभावात् । किन्तु विशल्याव्रणहन्त्रीवलवह्निकादिमहौषध्यादिकार्यत्वावच्छिन्नम्प्रति तादात्म्यसम्बन्धेन हिमालयविन्ध्यादीनामेव कारणत्वम् । अत एव कुलालगृहे घटा उत्पद्यन्ते हिमालये-विन्ध्यादौ वा महौषधय उत्पद्यन्त इत्येवं सम्प्रदायसिद्धाः प्रयोगाः । तथाच प्रकृते धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादावित्यत्राऽपि कपाले घट उत्पद्यत इत्यादिवत् अवच्छेदकत्वं सम्बन्धावच्छिन्नत्वं सप्तम्यर्थं इति योजना ।

अत्रायमभिसन्धिः, ननु द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मो यद्यपि घटो द्रव्यमित्यत्र घटत्वावच्छिन्नप्रकारकद्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानादौ विद्यतेतरामत एव तद्घटितसमुदायस्य सामग्रीत्वन्तथापि कार्यतावच्छेदकसमवायसम्बन्धेन कारणतावच्छेदकसमवायसम्बन्धेन च पूर्वोक्तकार्यकारणान्यतराधिकरणमात्मैव नान्यःकश्चनेति तदवच्छिन्नकार्योत्पत्तिप्रयोजकत्वमेव नतु द्रव्यत्वावच्छिन्नायां, धर्मितावच्छेदकतासम्बन्धस्य कार्यतावच्छेदकसम्बन्धत्वाऽभावेन द्रव्यत्वस्य तद्देशीयत्वाऽभावाच्च। तथाच कथं ग्रन्थसङ्गतिरिति चेन्न? पूर्वोक्तनियमे हि कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणमित्यंशेऽवच्छेदकता धर्मसंसर्गोभयसाधारणी गृह्यते। तद्धर्मावच्छिन्नकार्यतेत्यत्रावच्छेदकता च पर्याप्तिसम्बन्धेनेति नाग्रहःकिन्तु अपर्याप्त्याऽपि अवच्छेदकता गृह्यत इति विशिष्टव्याख्यावर्णनेन ग्रन्थाऽनुपपत्तिपरिहारात्। तथाच धर्मितावच्छेदकताया द्रव्यत्वनिष्ठायाःकार्यतावच्छेदकघटकत्वं सुघटमेव। तेन सम्बन्धेन द्रव्यत्वस्य कार्याधिकरणदेशत्वमित्यलम्।

## अत्र कार्यकारणभावे प्रकारद्वयम्

आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधः विषयनिष्ठप्रत्यासत्त्या च, प्रत्यासत्तिसम्बन्धः आदौ समवायसम्बन्धः अन्त्ये विषयतासम्बन्धः। समवायसम्बन्धेन शाब्दबोधकारणीभूतोपस्थितियोग्यतातात्पर्यासत्तिज्ञानानां ज्ञानरूपत्वेनात्मनि स्थितिर्भवतीतिशाब्दबोधादिप्रतियोगिकात्मनिष्ठसमवायेन कार्यकारणभावः। समवायेनोक्तकारणानामात्मनिष्ठत्वेन शाब्दबोधरूपकार्यमप्यात्मन्येवोत्पद्यते। समवायसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति समवायसम्बन्धेनोपस्थित्यादिकङ्कारणमितिकार्यकारणभावः। परन्तु समवायेन पटविषयकोपस्थितिसत्त्वे समवायसम्बन्धेनात्मनि घटत्वावच्छिन्नविषयकशाब्दबोधाऽपत्तिस्स्यादतो विषयप्रवेशः। तथाच समवायसम्बन्धेन पटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायसम्बन्धेन पटत्वावच्छिन्नविषयकोपस्थित्यादिकङ्कारणमिति। अत्रानन्तविषयाणामनन्तधर्मितावच्छेदकानाम्वा प्रवेशः। विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावस्तु ज्ञानस्य विषयतासम्बन्धेन विषये स्थितिर्ज्ञानस्य समवाये नात्मस्थितिवत् ज्ञानस्वरूपशाब्दबोधतत्कारणानाम्विषयतासम्बन्धेन विषये सम्भवात्। विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेनोपस्थित्यादिकङ्कारणमिति। परन्त्वत्राऽपि समवायेन देवदत्तात्मन्युपस्थित्यादिकारणसत्त्वे यज्ञदत्तस्याऽपि शाब्दबोधापत्तिरतस्तत्पुरुषीयत्वनिवेशः। तथाच देवदत्तीयघटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति विषयतासम्बन्धेन देवदत्तीयघटत्वावच्छिन्नविषयकोपस्थित्यादिकङ्कारणम्। एवञ्च आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधे विषयप्रवेशः। विषयनिष्ठप्रत्यासत्त्या शाब्दबोधे तत्पुरुषीयत्वनिवेश इत्युभयत्र तुल्यत्वमेव। विशेष्यविशेषणयोस्तुल्यसंख्याकत्वेन लाघवन्नाऽपि गौरवम्। परन्तु यत्र विशेष्यविशेषणयो-

न च धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वाद्यवच्छिन्नविशेष्यकोपस्थितिस्तद्वच-

---

विंषमसंख्याकत्वन्न भवत्यर्थात् विशेषणानि बहूनि नीलो घटः पीतो घटः सुन्दरो घट इति विशेष्यञ्चैकमेव तत्रात्मनिष्ठप्रत्यासत्त्या शाब्दबोधे यदात्मन्युपस्थित्यादिकन्तदात्मन्येव शाब्दबोधः। आत्मनाञ्च नानात्वेन पृथक् पृथक् अनन्तकार्यकारणभावस्तथाहि, समवायसम्बन्धेनाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेनाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नोपस्थित्यादिकङ्कारणम्। एवं समवायेन अभेदसम्बन्धावच्छिन्नपीतत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेनाऽभेदसम्बन्धावच्छिन्नपीतत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नोपस्थित्यादिकङ्कारणम्। एवं समवायेनाऽभेदसम्बन्धावच्छिन्नसुन्दरत्वावच्छिन्नेत्याद्यनन्तकार्यकारणभावाः गौरवग्रस्ताः। विषयनिष्ठप्रत्यासत्त्या शाब्दबोधे तु घटत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषीयशाब्दबुद्धित्वावच्छिन्नम्प्रति घटत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषीयोपस्थित्यादिकङ्कारणमित्येकेनैव कार्यकारणभावेन पूर्वोक्तवाक्ये निर्वाहः। किञ्च यत्र विशेषणमेकमेव विशेष्याणि बहूनि नीलो घटः नीलःपटःनीलो मठ इति अत्रात्मनिष्ठप्रत्यासत्त्या शाब्दबोधे यदात्मन्युपस्थित्यादिकन्तदात्मन्येव शाब्दबोध इति पूर्वोक्तरीत्या समवायेनाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेनाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नोपस्थित्यादिकङ्कारणम्। एवं समवायेनाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितपटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेनाऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितपटत्वावच्छिन्नविशेष्यताकोपस्थित्यादिकङ्कारणमिति। आत्मनामनन्तत्वेन पृथक् २ अनेककार्यकारणभावा गौरवग्रस्ताः। विषयनिष्ठप्रत्यासत्त्या शाब्दबोधेतु अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितविषयता (धर्मितावच्छेदकता) सम्बन्धेन तत्पुरुषीयोपस्थित्यादिकङ्कारणमिति लाघवसम्पन्न एक एव कार्यकारणभावः। तथाच प्रकृते मूलग्रन्थसंलग्नेच्छया आत्मनिष्ठप्रत्यासत्त्या शब्दबोधे चिकीर्षिते विषयप्रवेशाद् द्रव्यघटपदाभ्यान्द्रव्यत्वेन घटत्वेन चोपस्थितिस्तदात्मनि समवायेन तद्विषयकशाब्दबोधस्तत्रैव, घटो घट इत्यत्र द्वाभ्यां घटपदाभ्यां घटत्वेनैकरूपेणैवोपस्थितिरिति वैषम्यात्तादृशदृष्टान्तेन घटो घट इत्यत्रापत्तिर्न सम्भवतीत्याद्ययेनात्मनिष्ठप्रत्यासत्तिं गौरवान्वितामिहाय लाघवोपस्कृतविषयनिष्ठप्रत्यासत्त्या शाब्दबोधमाह धर्मिताव-

च्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव ।

च्छेदकतासम्बन्धेनेति । अयभिप्रायो ग्रन्थकृताम्, धर्मितावच्छेदकतासम्बन्धेन द्रव्यं घट इत्यत्र द्रव्यत्वेऽभेदसम्बन्धेन घटप्रकारको बोधो भवति । तथैव रीत्या घटो घट इत्यत्रापि धर्मितावच्छेदकतासम्बन्धेन घटत्वे घटप्रकारकाऽभेदान्वयबोधो विषयनिष्ठप्रत्यासत्त्या लाघवानुगृहीतयाऽभीष्टस्स कथन्न स्यात् । द्रव्यं घट इत्यत्रत्या घटप्रकारकाभेदान्वयबोधीया या सामग्री साच घटो घट इत्यत्राऽपि वरीवर्त्येव । स्वात्मनाऽभेदस्याऽपि सत्त्वात् योग्यताज्ञानबलेन घटो घट इत्यत्र घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्यापत्तिरस्तीत्येतत्सर्वम्मनसि निधायाह पूर्वपक्षकर्त्ता धर्मितावच्छेदकेति ग्रन्थेनेति ।

इति परीक्षालेखप्रकारः ।

अथ शास्त्रार्थप्रकारः ।

नन्वभेदान्वयविषयकतात्पर्यज्ञानादिघटितसामग्रीबलेन द्रव्यं घट इत्यत्र घटत्वावच्छिन्नप्रकारकाऽभेदान्वयबोधेऽपि तद्बोधानुकूलसामग्र्या घटो घट इत्यत्राभाव एवेति कथमभेदान्वयबोध इत्याशयेनाह नच तत्रापादकाऽभाव इति । सामग्रीकदम्बं वक्ति तात्पर्यज्ञानविशेषादीति । अयमभिप्रायः, द्रव्यं घट इत्यत्र यावती शाब्दबोधप्रयोजिका सामग्री वरीवर्त्ति तावत्येव घटो घट इत्यत्राऽपीति दृष्टान्ते कियती सामग्री घटपदन्द्रव्यपदार्थान्वितस्वार्थम्बोधयत्विति तात्पर्यज्ञानम् । घटत्वावच्छिन्नाऽभेदसंसर्गवान् द्रव्यपदार्थ इति योग्यताज्ञानम् धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानं द्रव्यत्वे विद्यते इयत्यास्सामग्र्या घटो घट इत्यत्रापि निरन्तरम्विद्यमानत्वात्तस्या उत्पादकत्वेन घटत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकाऽभेदसंसर्गकबोधस्स्यादेवेति तात्पर्य्यम् ।

ननु घटोत्पादकत्वेनाऽपि कुलालः पटङ्कर्त्तुं न्न शक्नोतीति न्यायेन द्रव्यं घट इत्यत्र द्रव्यपदजन्यद्रव्यत्वप्रकारकोपस्थितियोग्यताज्ञानादिघटिता सामग्री धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे शाब्दबोधञ्जनयति सा कथं घटो घट इत्यत्र शाब्दबोधञ्जनयेदिति चेन्न ? धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे शाब्दबोधोत्पादिका यादृशी सामग्री तादृशी घटो घट इहाऽपीति तात्पर्यात् । यथा द्रव्यं घट इति वाक्यं घटान्वितद्रव्यपरमितिवत् घटो घट इति वाक्यं घटान्वितपरमिति तात्पर्यज्ञानात् । एवं योग्यताज्ञानादयोऽपि ।

नन्वेवमपि दृष्टान्तदार्ष्टान्तिकयोर्महद् वैषम्यन्तादृशोपस्थितियोग्यताज्ञानादीनामात्मनिष्ठतया धर्मितावच्छेदकतासम्बन्धेन जायमानशाब्दबोधस्य विषयनिष्ठतया सामानाधिकरण्याभावात्कथन्तस्य धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्ववृत्तिशाब्दबोधोत्पादकत्वम् । किञ्चान्यत्र वर्त्तमानस्य तादृशोपस्थितियोग्यताज्ञानादेरन्यत्रापि धर्मिता-

वच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दबोधोत्पादनसामर्थ्यकल्पने तत्र स्थिततादृशोपस्थितियोग्यताज्ञानबलादेव घटो घट इत्यत्राऽपि घटत्वादौ तादृशशाब्दबोधाऽपत्तिर्दुर्वारैव। सत्यमेतत्? घटत्वावच्छिन्नप्रकारताकद्रव्यत्वावच्छिन्नविशेष्यताकाऽभेदान्वयबोधस्यात्मनिष्ठस्य कारणत्वमुक्तयोग्यताज्ञानोपस्थित्यादेर्भवतामभिमतम्। एवञ्च तादृशशाब्दबुद्धित्वाक्रान्तस्य धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे जायमानशाब्दबोधेऽपि सत्त्वेन द्रव्यत्वे घटत्वावच्छिन्नप्रकारताकाऽभेदान्वयबोधस्य घटत्वावच्छिन्नप्रकारताकद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वाक्रान्तत्वेन तम्प्रति तादृशयोग्यताज्ञानादीनां हेतुत्वम्। तादृशशाब्दबुद्धित्वावच्छिन्नधर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे जायमानशाब्दबोधम्प्रति कारणत्वन्नेति किम्बनिगमकमिति भवतैव विचिन्त्यताम्। नहि सम्बन्धकालभेदेन नानास्थले जायमानस्तादृशशाब्दबोधः। समवायसम्बन्धेन जायमानो यश्शाब्दबोधस्तयोः परस्परभेदोपपादनकथनमपि भवितुमर्हति। किञ्च घटत्वेऽपि तदेव ज्ञानं शाब्दबोधञ्जनयत्विति कथमपि न युक्तियुक्तम्? द्रव्यत्ववृत्तिधर्मितावच्छेदकतायास्तादृशयोग्यताज्ञाननिरूपितकार्यतावच्छेदककोटिप्रविष्टतया तादृशशाब्दबोधजनकत्वेऽपि तत्कार्यतावच्छेदकाऽप्रविष्टघटत्ववृत्तितादृशशाब्दबोधजनकत्वे मानाऽभावात्। नच द्रव्यत्वावच्छिन्नविशेष्यताकयोग्यताज्ञाननिरूपितकार्यतावच्छेदकत्वं यदस्ति तदेव घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकाऽभेदान्वयस्याऽप्यस्तु तत्कुक्षिप्रविष्टत्वात्। घटत्वेऽपि तादृशसम्बन्धबलेन तादृशयोग्यताज्ञानादिबलाच्छाब्दबोधस्स्यादेवेति वाच्यम्? तादृशयोग्यताज्ञानादिघटितसामग्र्यास्तादृशशाब्दबोधम्प्रत्यव्यापकत्वेन कारणत्वाऽभावात्।

नन्वेवमपि धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति द्रव्यत्वावच्छिन्नविशेष्यताकयोग्यताज्ञानस्य कारणत्वमित्येव फलितम्भवति। तथा च घटः प्रमेय इत्यादौ प्रमेयत्वेऽपि धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधो न स्यात्। द्रव्यत्वावच्छिन्नविशेष्यकोपस्थितेर्योग्यताज्ञानादेरभावात्। प्रमेयत्वावच्छिन्नविशेष्यकयोग्यताज्ञानादीनामपि कारणत्वकल्पने परस्परजन्यबोधे व्यभिचारापऽत्त्या तद्वारणाय कार्यतावच्छेदककोटौ कारणानन्तर्यनिवेशस्यावश्यकतया गौरवात्। नच धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधम्प्रति योग्यताज्ञानादीनामेवास्तु कारणत्वम्। एवञ्च न गौरवन्नापि परस्परजन्यबोधे व्यभिचार इति वाच्यम्? तथा सति घटो द्रव्यमितियोग्यताज्ञानदशायां घटः प्रमेय इत्यादिवाक्यादपि शाब्दबोधापत्तिः। नच द्रव्यत्ववृत्तिधर्मितावच्छेदकतासम्बन्धेन शाब्दबोध एव तादृशयोग्यताज्ञानस्य कारणत्वमिति वाच्यम्? योग्यताज्ञानाऽभावेऽपि घटपटयोरभेदान्वयाऽपत्तेः। नच धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्ववृत्तिशाब्दबोधे द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानादेः कारणत्वमिति न दोष इति वाच्यम्? तथा सत्यनन्तकार्यकारणभावापत्तौ परस्परजन्यबोधे व्यभिचारवारणायाऽव्यवहितोत्तरत्वनिवेशेऽपि घटो द्रव्यम्, घटः प्रमेयः घटो घट इति

समूहालम्बने व्यभिचारापत्तेरुक्तगौरवस्य दुरुद्धरत्वाच्च ।

अत्र मान्यास्तु—

तत्तत्पुरुषाणान्तत्तद्विषयाणाञ्चानन्त्यात् कथं लाघवगौरवनिर्णय इतिविचिकित्सायां लाघवोपायप्रदर्शनम् । तत्तत्सङ्ख्यापरिमितपुरुषविषयसम्बन्धे लाघवम् । यथा दश पुरुषा दश विषयाश्चाध्यारूढाः । तत्र कार्यकारणभावविचारे लाघवानुगमः । समवायस्य संसर्गत्वपक्षे समवायेन घटवद् द्रव्यमितिशाब्दबुद्धित्वावच्छिन्नम्प्रति घटो द्रव्यमित्याकारकं योग्यताज्ञानं समवायसम्बन्धेन कारणम् । एवमेव समवायेन पटो द्रव्यमित्याकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेन पटो द्रव्यमित्याकारकं योग्यताज्ञानं कारणम् । तथा समवायेन मठो द्रव्यमित्याकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेन मठो द्रव्यमित्याकारकं योग्यताज्ञानं कारणम् । तथा समवायेन कटो द्रव्यमित्याकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति समवायेन कटो द्रव्यमित्याकारकं योग्यताज्ञानङ्कारणम् ।

एवम्प्रकारेण दशविधपुरुषविशेष्यका दशविधकार्यकारणभावास्सम्पद्यन्ते । एवञ्च यथा द्रव्यपदार्थान्वययोग्यता घटादिपदार्थे तथैव पुरुषेष्वपि द्रव्यान्वययोग्यता निराबाधैवेति । समवायेन द्रव्यञ्चैत्र इत्याकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति द्रव्यञ्चैत्र इत्याकारकयोग्यताज्ञानं समवायेन कारणम् । एवम् द्रव्यम्मैत्रो द्रव्यं विष्णुमित्र इत्यादावपि पार्थक्येन विलक्षण एव कार्यकारणभावः सङ्कलने च विंशतिः कार्यकारणभावाः । धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानङ्कारणमिति मते तु धर्मितावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबोधे धर्मितावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकयोग्यताज्ञानङ्कारणम् । एवम् द्रव्यम्मैत्र इत्यत्रापि धर्मितावच्छेदकतासम्बन्धेन मैत्रीयद्रव्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबोधे धर्मितावच्छेदकतासम्बन्धेन मैत्रीयद्रव्यत्वावच्छिन्नप्रकारताकयोग्यताज्ञानङ्कारणम् । एवं रीत्या दशविधपुरुषप्रयुक्ता दशैव कार्यकारणभावा नतु विशेष्यदशभेदप्रयुक्ता अपि कार्यकारणभावाः ।

एवञ्च लाघवस्य विद्यमानत्वात् धर्मितावच्छेदकतायाः प्रत्यासत्तित्वन्निर्विवादम् । एवञ्च द्रव्यत्वावच्छिन्नविशेष्यकत्वावच्छिन्नप्रकारकज्ञानवत् घटत्वावच्छिन्नप्रकारताकज्ञानत्वरूपकारणतावच्छेदकस्य प्रतीतिसिद्धस्य घटत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकज्ञानेऽपि वर्त्तमानत्वात् तद्घटितसमुदायस्यापि कारणसामग्रीत्वं सम्भवत्येवेति धर्मितावच्छेदकताप्रत्यासत्त्या घटत्वे घटत्वावच्छिन्नप्रकारकशाब्दबोधः कथन्नेतिग्रन्थाशयः इत्यूचुः ।

---

समूहालम्बनत्वञ्च—नानाधर्मनिष्ठविशेष्यतानिरूपितत्वविशिष्टनानाप्रकारताशालित्वविशिष्टज्ञानत्वम् ।

धर्मितावच्छेदकतायास्तत्तत्कार्यतावच्छेदकसम्बन्धताविरहेपि द्रव्यत्वादिनिष्ठायास्तत्कार्यतावच्छेदकधर्मघटकत्वात् तादृशसामग्र्याश्चात्मनिष्ठप्रत्यासत्त्या द्रव्यत्वाद्यवच्छिन्नविशेष्यकघटत्वाद्यवच्छिन्नाद्यभेदबुद्धित्वरूपस्वीयकार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव व्याप्यतया घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नाभेदबोधापादकत्वं न सम्भवतीति वाच्यम्?

---

तत्कार्यतावच्छेदकसम्बन्धताविरहेऽपीति।

आत्मनिष्ठसमवायस्यैव तादृशकार्यतावच्छेदकत्वात् द्रव्यत्वनिष्ठाया धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकधर्मघटकत्वात्।

अयमभिप्रायः।

यद्यपि पर्वतो वह्निमानित्यादौ वह्न्यवयवेषु वह्न्युत्पत्तौ चिकीर्षितायां समवायसम्बन्धस्यैव कार्यतावच्छेदकसम्बन्धत्वन्न तु संयोगस्येति। तथापि कार्यतावच्छेदकसम्बन्धत्वाऽभावेऽपि कार्यतावच्छेदकधर्मघटकत्वं संयोगस्याऽस्त्येवेति। किञ्च समवायसम्बन्धेन वह्न्युत्पत्तौ संयोगस्य कार्यतावच्छेदकसम्बन्धत्वाऽभावेऽप्यन्यत्र पर्वतादौ वह्न्युत्पत्तौ पर्वतानुयोगिकवह्निप्रतियोगिककार्यतावच्छेदकसम्बन्धत्वमस्त्येव।

एवञ्च प्रकृतेऽपि द्रव्यं घट इत्यत्राऽभेदान्वयबोधे जननीये समवायस्यैव कार्यतावच्छेदकसम्बन्धत्वन्नतु धर्मितावच्छेदकतायास्तथापि द्रव्यत्वनिष्ठाया धर्मितावच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वमस्त्येव, विषयतारूपा धर्मितावच्छेदकता द्रव्यत्वनिष्ठा स्वनिरूपितविषयितासम्बन्धेन शाब्दबोधे शाब्दबोधत्वस्येवोक्तधर्मितावच्छेदकतावैशिष्ट्यस्याऽपि सत्त्वात् अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबोधत्वमेव कार्यतावच्छेदकन्तथापि स्वनिरूपितविषयितासम्बन्धेन धर्मितावच्छेदकत्वन्तत्र वरीवर्त्त्येव।

नन्वात्मनि विद्यमाना द्रव्यत्वावच्छिन्नोपस्थितियोग्यताज्ञानादिघटिता सामग्री स्वीयकार्यतानवच्छेदकधर्मितावच्छेदकतासम्बन्धेन घटत्वेऽप्यभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोधं कथन्नोत्पादयतीति चेन्न? घटत्वे धर्मितावच्छेदकतासम्बन्धेन जायमानघटप्रकारकाऽभेदबुद्धित्वस्य कार्यतावच्छेदकद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वघटकत्वाऽभावात्। द्रव्यं घट इत्यत्र तु द्रव्यत्वे विद्यमानधर्मितावच्छेदकताया एव कार्यतावच्छेदकधर्मघटकत्वेन तत्रेष्टबोधस्य निर्विवादत्वात्।

न च द्रव्यत्वावच्छिन्नोपस्थितियोग्यताज्ञानादिघटिता या सामग्री तत्कार्यताव-

---

कार्यतावच्छेदकसम्बन्ध इति—येन सम्बन्धेन कार्यस्योत्पत्तिर्भवति स एव सम्बन्धः कार्यतावच्छेदकत्वेन व्यवह्रियते। यथा समवायसम्बन्धेन घटकार्यं कपाले उत्पद्यते इति कार्यतावच्छेदकसम्बन्ध इह समवायः, घटत्वावच्छिन्ना कार्यता च समवायसम्बन्धावच्छिन्नेति।

योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेन अनन्तकारणताकल्पनमपेक्ष्य लाघवाद्धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धौ तादृशसंबन्धेन धर्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात् । घटत्वादिधर्मितावच्छेदकघटत्वाद्यवच्छिन्नप्रकारकयोग्यताज्ञानबलादेव धर्मितावच्छेदकतासम्बन्धेन तदापत्तेः ।

---

च्छेदकं घटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वमेवं स्वीकारे घटत्वनिष्ठधर्मितावच्छेदकतायास्स्वीयकार्यतावच्छेदकधर्मघटकत्वं स्यादेवेति वाच्यम् ? व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्नकार्य्योत्पादकसामग्र्या अपेक्षेति यत्तच्छब्दप्रवेशः । यद्धर्मावच्छिन्नकार्यत्वावच्छिन्नम्प्रति यद्धर्मावच्छिन्नसामग्र्या व्याप्यत्वं स एव धर्मस्तत्सामग्र्याः कार्यतावच्छेदकमिति फलति । द्रव्यत्वावच्छिन्नविशेष्यता अन्या घटत्वावच्छिन्नविशेष्यता अन्येतिकार्यतावच्छेदकभेदान्नापत्तिरिति वर्णनात् ।

अनन्तकारणताकल्पनमपेक्ष्येति ।

नच धर्मितावच्छेदकातासम्बन्धेनैव यदि कार्यकारणभावस्तर्हि यस्य पुरुषस्य घटो द्रव्यमितिवाक्ये द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानन्तदपेक्षयाऽन्यस्य पुरुषस्याऽपि तेनैव योग्यताज्ञानेन शाब्दबोधाऽपत्तिरिति वाच्यम् ? कार्यकारणतावच्छेदककोटौ तत्तत्पुरुषीयत्वस्य निवेशेन दोषाऽभावस्तत्पुरुषीयत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति तत्पुरुषीययोग्यताज्ञानं कारणमिति न पुरुषान्तरस्य शाब्दबोध इति कल्पनात् । नच तत्तद्विषयाणान्तत्तत्पुरुषाणाञ्चानन्तत्वेनाऽपरिमितकार्यकारणभावाऽपत्तौ महद् गौरवमिति वाच्यम् ? देवदत्तादिदशपुरुषान् घटादिदशविषयानहञ्जानामीत्यादौ देवदत्तादिदशपुरुषविषयकघटादिदशविषयविषयकज्ञानवानहमित्येव शाब्दबोधस्तत्र दशैव पुरुषा दशैव विषयाश्चैवञ्चात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे स्वीकृते तत्तत्पुरुषत्वस्याऽपि धर्मितावच्छेदकत्वसम्भवोऽस्त्येवेति दशसंख्याका एव कार्यकारणभावाः । घटादिविषयनिष्ठघटत्वादिधर्मस्यैव धर्मितावच्छेदकत्वेन घटादिविषयाणाभिन्नत्वेन धर्मितावच्छेदकभेदाद्दश कार्यकारणभावा इति विंशतिः कार्यकारणभावाः । धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या, अर्थाद्धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे स्वीक्रियमाणे तु तत्तत्पुरुषीयत्वस्य तत्तत्पुरुषभेदेन भिन्नत्वाद्दशैव कार्यकारणभावा इति दशकार्यकारणभावस्वीकारेण महल्लाघवमितिवर्णनात् ।

अत्र केचिन्मान्याः ।

तत्तद्वाक्यार्थे यथा धर्मितावच्छेदकताप्रत्यासत्त्या कार्यकारणभावस्तथा विनिगमनावैकल्येन प्रकारतावच्छेदकताप्रत्यासत्त्याऽपि कार्यकारणभावो भवेत् । यथैकैकस्मिन् प्रकारे विशेष्यदशकत्वन्तथैवैकस्मिन् विशेष्ये प्रकारदशकत्वमेवैवञ्च धर्मितावच्छेदकतासम्बन्धेन यथा कार्यकारणभावस्तथा प्रकारतावच्छेदकतासम्बन्धेनाऽपीति न गौर-

न च योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे

---

वानुसन्धानमिति ग्रन्थाशयमाहुः ।

आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे ह्यात्मनामनन्तत्वाद् गौरवं लाघवाद्धर्मितावच्छेदकनिवेशंविनैव विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावञ्चिकीर्षुरापत्तिम्पुनरपि दर्शयति धर्मितावच्छेदकमनिवेश्येति ।

नच योग्यताज्ञानस्येति ।

अयमाशयः, यदि योग्यताज्ञानस्य शाब्दबोधम्प्रति हेतुत्वन्धर्मितावच्छेदकतासम्बन्धेनैवेति कथ्यते तर्हि घटः प्रमेय इत्यादौ धर्मितावच्छेदकतासम्बन्धेनाभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोध इव तादृशयोग्यताज्ञानबलादेव द्रव्यत्वावच्छिन्नोपस्थित विनैव धर्मितावच्छेदकतासम्बन्धेन घटो द्रव्यमित्यत्र शाब्दबोधापत्तिस्स्यादित्याशयेनाशङ्कते नचेति । विषयनिष्ठप्रत्यासत्त्या नैव कार्यकारणभाव इति प्रश्नकर्त्तुरभिप्रायः । द्रव्यं घट इत्यत्र शाब्दबोधे घटत्वं घटे प्रकारो घटश्च द्रव्ये प्रकारः द्रव्यत्वञ्च द्रव्ये प्रकारःद्रव्यमेव विशेष्यम् । प्रकारताविशेष्यतयोर्निरवच्छिन्नत्वेनोपस्थितौ प्रकारतावच्छेदकत्वेन विशेष्यतावच्छेदकत्वेन च यद्यपि कस्यचिदपि पदार्थस्य प्रतीतिर्न भवति तथापि द्रव्यप्रकारतयोपस्थितत्वात् द्रव्यत्वस्य प्रकारतायां भानम्भवत्येव तदेव द्रव्यत्वं शाब्दबोधेऽपि द्रव्यप्रकारतया भासते । तथाच द्रव्यत्वनिष्ठा प्रकारता समानप्रकारतया प्राप्नोत्येवेति समानप्रकारतासम्बन्धेनोपस्थितेः कारणत्वात् द्रव्यत्वे प्रकारतासम्बन्धेनोपस्थितिशाब्दबोधयोरुभयोस्सत्त्वेनोपस्थितेरकारणत्वमुपस्थितिराहित्यस्याऽकिञ्चित्करत्वञ्च नास्तीति समाधानम् । प्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति प्रकारतासम्बन्धेनोपस्थितिः कारणमिति कार्यकारणभाव इति फलितार्थः ।

समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थितेश्शाब्दबोधे हेतुत्वोपगमादिति ।

ननु घटो द्रव्यमित्याकारकशुद्धकेवलयोग्यताज्ञानादेव प्रमेयत्वे शाब्दबोधो जायतेतराम् । एवञ्च स्वन्तघटपदसमभिव्याहृतस्वन्तद्रव्यपदत्वरूपाकाङ्क्षाज्ञानस्य न कारणत्वन्न तत्सहकारित्वम् । तथाच द्रव्यत्वे पूर्वोक्तशाब्दबोधाऽपत्तिर्दुर्वारैवेति चेन्न ? सामान्यं विशेषसहितं विशेषरहितसामान्याऽभावात् । एवञ्च निर्विशेषसामान्याऽभावेन तत्तद्धर्मावच्छिन्नकार्योत्पत्तित्वावच्छिन्नम्प्रति स्वीयकार्यतावच्छेदकसंबन्धावच्छिन्नतत्तद्धर्मावच्छिन्नकार्याधिकरणे तत्तद्धर्मव्याप्ययत्किञ्चिद्धर्मावच्छिन्नकारणानि कार्यप्राक्क्षणावच्छेदेनापेक्ष्यन्त इतिनियमानुरोधेन केवलयोग्यताज्ञानस्य न कारणत्वम् अपितु घटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति घटो द्रव्यमितिस्वन्तघटपदसमभिव्याहृतस्वन्तद्रव्यपदत्वरूपाकाङ्क्षाज्ञानस्याऽपि हेतुत्वेनोक्तापत्तिवारणात् ।

द्रव्यत्वाद्यवच्छिन्नस्य पदादनुपस्थितत्वेपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयोग्यताज्ञानात्तत्र तादृशप्रत्यासत्त्या शाब्दबोधापत्तिः। आत्मनिष्ठप्रत्यासत्त्या हेतुभूतां द्रव्यत्वाद्यवच्छिन्नोपस्थितिमन्तरेणापि तादृशप्रमेयत्वाद्यवच्छिन्नोपस्थित्यादिदशायां प्रमेयत्वादौ धर्मितावच्छेदकतासम्बन्धेन ज्ञानस्य फलजनकत्वात्तादृशद्रव्यत्वाद्यवच्छिन्नोपस्थितिविरहस्याकिंचित्करत्वादिति वाच्यम् ?

---

नन्वेवमपि घटः प्रमेय इतिस्वन्तघटपदसमभिव्याहृतस्वन्तप्रमेयपदत्वरूपाकाङ्क्षाज्ञानकालावच्छेदेनाऽपि द्रव्यत्वे शाब्दबोधाऽऽपादनन्दुर्वारमेव। तथाहि घटत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वस्याऽपि व्याप्यत्वेन पूर्वोक्ताकाङ्क्षाज्ञानस्य निरुक्तकारणत्वव्याप्त्या तदवच्छिन्नकारणत्वादिति चेन्न ? द्रव्यत्वे प्रकारतयोपस्थितेरभावेनाऽऽपत्तिवारणसौष्ठवात्।

ननु घटः प्रमेय इति वाक्योच्चारणानन्तरं घटो घटपदवाच्यः प्रमेयः प्रमेयपदवाच्य इति रीत्या शक्तिज्ञानकालावच्छेदेनाकाङ्क्षाज्ञानबहिर्भूतकेवलापदनिष्ठवृत्तिज्ञानजन्यद्रव्योपस्थितिकालावच्छेदेनैव द्रव्यत्वज्ञानेन तदानीमेव द्रव्यत्वे शाब्दबोध आपद्येतेति चेन्न ? शक्तिज्ञानकालीनपदनिष्ठशक्तिज्ञानजन्योपस्थितिकारणतावच्छेदककोटावपि विशेषरूपेण तत्तत्पदानान्निवेशः। एवञ्च घटः प्रमेय इति वाक्यीयशक्तिज्ञानकाले प्रमेयपदसत्ता कारणत्वेनापेक्ष्यते। घटो द्रव्यमित्यत्र तु द्रव्यपदसत्ताऽपेक्ष्यते। एवञ्च घटः प्रमेय इति ज्ञानाद् द्रव्यत्वे शाब्दबोधवारणस्य सुगतत्वात्।

नच विशेषतः कारणतावच्छेदककुक्षौ तत्तत्पदप्रवेशे घटो द्रव्यमित्यत्र घटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वमेव तद्व्याप्यमतस्तदवच्छिन्नकारणसामग्र्या द्रव्यपदनिष्ठशक्तिज्ञानजन्योपस्थितिसहकृतघटो द्रव्यमित्याकारकाकाङ्क्षाज्ञानघटितत्वेन घटो घट इत्यत्र कथमप्यसम्भवात्कथं घटो द्रव्यमितिधर्मितावच्छेदकतासम्बन्धेन घटत्वे आपत्तिप्रदर्शनपरो मूलग्रन्थस्सङ्गच्छत इति वाच्यम् ? घटपदजन्यद्रव्यत्वावच्छिन्नोपस्थितिसहकृतघटो घट इत्याकारकाकाङ्क्षाज्ञानघटितसमुदायस्यैव सामग्रीत्वमत एव नियमेन तत्सामग्र्या घटपदलक्षणाज्ञानजन्योपस्थितिघटितत्वमेव। एवञ्च घटो द्रव्यमित्याकारकाकाङ्क्षाज्ञानस्य द्रव्यपदलक्षणाज्ञानजन्योपस्थितिसहकृतस्य प्रमेयत्वे शाब्दबोधजनकत्ववत्तद्घटितसामग्रीकालावच्छेदेन घटत्वेऽपि धर्मितावच्छेदकतासम्बन्धेनेतिनिरुक्तमुद्रयापत्तिसम्भवेन मूलग्रन्थसौष्ठवात्।

नचोपस्थितिकारणतावच्छेदकदले विशेषरूपेण तत्तत्पदानान्निवेशे कार्यतावच्छेदकदलीयव्यभिचारनिवृत्त्यर्थंतत्तदुपस्थित्यव्यवहितोत्तरत्वनिवेशस्यावश्यकत्वेन योग्यताज्ञानकार्यतावच्छेदकावच्छिन्नव्यापकता तदवच्छिन्नस्य नैव सम्भवतीति येन सम्बन्धेनेतिग्रन्थानुपपत्तिरिति वाच्यम् ? सर्वत्रैव वाक्ये द्रव्यत्वप्रमेयत्वाभिधेयत्वादौ धर्मितावच्छेदके शक्तिलक्षणान्यतरज्ञानजन्यद्रव्यपदप्रयोज्यद्रव्यत्वप्रमेयत्वोप-

समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वोपगमात्। येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तावपेक्षिततया प्रकारतासम्बन्धेन द्रव्यत्वादौ द्रव्यपदजन्यपदार्थोपस्थित्यसत्त्वे तत्र धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधापत्तेरयोगात्।

---

स्थित्यव्यवहितोत्तरशाब्दबुद्धेर्विद्यमानत्वेन व्यापकत्वाऽक्षतेः।

नच शक्तिलक्षणाज्ञानजन्योपस्थितौ परस्परं व्यभिचारवारणाय तत्तदव्यवहितोत्तरत्वनिवेशः परन्तु वृत्तित्वेनानुगमः तद्विषयकशाब्दबोधम्प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनोपस्थितिः 'कारणमिति न कार्यकारणभावद्वयमताऽपि व्यभिचार इति वाच्यम्? वृत्तित्वस्यानुगतानतिप्रसक्तस्य दुर्वचत्वेन घटपदनिष्ठशक्तिज्ञानजन्योपस्थित्यव्यवहितोत्तरजायमानघटविषयकशाब्दबोधम्प्रति घटपदनिष्ठशक्तिज्ञानङ्कारणम्। गङ्गापदनिष्ठलक्षणाज्ञानजन्योपस्थित्यव्यवहितोत्तरजायमानगङ्गापदशक्यसम्बन्धितीरविषयकशाब्दबोधम्प्रति गङ्गापदनिष्ठलक्षणाज्ञानाधीनोपस्थितिः कारणमिति समाधानातिरिक्तसमाधानाऽभावादव्यवहितोत्तरत्वनिवेशस्य गरीयस्त्वात् इत्यलम्।

ननु धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे जननीये प्रकारतासम्बन्धेन द्रव्यत्वोपस्थितेस्सत्यपि सम्भवे कथङ्कारमुपयोग इत्याशङ्क्य विस्पष्टयति येन सम्बन्धेनेति। अस्यायमाशयः, अधिकदेशवृत्तित्वं व्यापकत्वम् अल्पदेशवृत्तित्वं व्याप्यत्वम्. द्रव्यं घट इत्यत्र विशेष्यता केवलद्रव्य एवास्ति प्रकारता तु घटे घटत्वे द्रव्यत्वे च त्रिष्वेवास्ति एवञ्च प्रकारतासम्बन्धेन शाब्दबोधस्य घटघटत्वद्रव्यत्वेषु विद्यमानत्वादधिकदेशवृत्तित्वेन व्यापकत्वं धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधस्तु द्रव्यत्वमात्रेऽस्तीति तस्य व्याप्यत्वम्। व्याप्यधर्मावच्छिन्ने कार्ये जननीये तु व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षेति नियमः। सामान्यधर्मावच्छिन्नस्य शाब्दबोधत्वस्य हि व्यापकत्वम्।

येन सम्बन्धेन यद्धर्मावच्छिन्नकार्य्यम्प्रति इति।

यद्धर्मम्प्रति यस्य धर्मस्य व्यापकत्वन्तद्धर्मावच्छिन्नकार्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तित्वावच्छिन्नम्प्रति तद्धर्मावच्छिन्नकार्यतावच्छेदकसम्बन्धेन कारणतावच्छेदकसम्बन्धेन वा तद्धर्मावच्छिन्नसामग्री अपेक्ष्यत इत्याकारवर्णनेन निर्वाहे येन सम्बन्धेनेत्यादिकथनं कार्यकारणतावच्छेदकसम्बन्धसूचनायैव। इह व्यापकताघटकाऽभावश्च तद्धर्मावच्छिन्नाधिकरणे तद्धर्मावच्छिन्नोत्पत्तिकालावच्छेदेन विद्यते योऽभावस्स एव। अत एव संयोगत्वावच्छिन्नकार्यत्वावच्छिन्नम्प्रति विभागत्वावच्छिन्नस्योत्पत्तिकालावच्छिन्नत्वाऽभावेन व्यापकत्वाभावात्संयोगोत्पत्तौ विभागसामग्र्या नापेक्षेति सार्वजनीनः पन्थाः।

नच यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञानजन्यप्रमेयत्वाद्यवच्छिन्नविशेष्यकोपस्थितावेव उद्बोधकान्तरात् द्रव्यत्वाद्यवच्छिन्नस्य भानं तत्र द्रव्यत्वाद्यवच्छिन्नविषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविशेष्यकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुता वाच्या, तथा च प्रकारविशेषनिवेशस्यावश्यकत्वे विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तम्। तथा सति पुरुषभेदेन कार्यकारणभावबाहुल्यप्रसङ्ग इति वाच्यम्? स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितेर्हेतुतां स्वीकृत्य तादृशापत्तेर्वारणात्।

---

ननूत्पत्तिकालावच्छेदेन घटनिष्ठपाकजरूपत्वावच्छिन्नम्प्रति एको निष्पन्नो भविष्यतीति हृदि निधाय घटगतैकत्वसख्याप्रवेशस्याऽवश्यम्भावाद् घटगतैकत्वसंख्याया अपि व्यापकत्वाऽपत्त्या पाकजरूपत्वावच्छिन्नकार्यत्वावच्छिन्नम्प्रत्यपि संख्यारूपसामग्रया अपेक्षितत्वाऽपत्तिरिति चेन्न ? तदभावाऽप्रतियोगित्वोत्पत्तिकालावच्छिन्नस्वाधिकरणताकत्वस्यैव प्रकृते समाश्रयणात्।

घटत्वावच्छिन्नप्रकारकाऽभेदसम्बन्धावच्छिन्नशाब्दबोधत्वावच्छिन्नस्य व्याप्यत्वम्। घटत्वरूपव्याप्यधर्मावच्छिन्नघटरूपकार्ये जननीये द्रव्यत्वरूपव्यापकधर्मावच्छिन्नकार्योत्पादकसमवायिकारणसमवधानादिरूपसामग्रया एवापेक्षा। प्रकृते च अभेदसंसर्गकघटत्वावच्छिन्नप्रकारकशाब्दबोधत्वरूपव्याप्यधर्मावच्छिन्ने कार्ये जननीये शुद्धशाब्दबोधत्वरूपव्यापकधर्मावच्छिन्नकार्योत्पादिका या सामग्री ( प्रकारतासम्बन्धेनोपस्थितिः ) तस्या एवापेक्षा भवति। एवञ्च प्रकारतासम्बन्धेन द्रव्यत्वे द्रव्यपदजन्योपस्थित्यभावे धर्मितावच्छेदकतासम्बन्धेनाऽपि द्रव्यत्वे शाब्दबोधो न भवतीति प्रकारतासम्बन्धेन शाब्दबोधे उपस्थितेः कारणत्वस्वीकारस्यावश्यकत्वात्। ननु सुन्दरो घटो नील इत्यादौ सुन्दररूपपदार्थे प्रकारतासम्बन्धेनोपस्थित्यभावाद्धर्मितावच्छेदकतासम्बन्धेन कथं शाब्दबोध इति चेन्न ? तादृश्यास्सामग्रया निरवच्छिन्नधर्मितावच्छेदकतासम्बन्धेन शाब्दबोधम्प्रत्येव कारणत्वेनात्र सुन्दरत्वावच्छिन्नत्वेनाऽदोषात्।

प्रकारतासम्बन्धेनोपस्थितेः कारणत्वस्वीकारे दूषणमाह नच यत्र प्रमेयत्वाद्यवच्छिन्नेति। इदन्तात्पर्य्यम्, यदि समानप्रकारताप्रत्यासत्त्योपस्थितेश्शाब्दबुद्धित्वावच्छिन्नम्प्रति कारणत्वमङ्गीक्रियते तदा प्रमेयपदेन प्रमेयत्वावच्छिन्नविषयकोपस्थितिरुद्बोधकान्तराद् द्रव्यत्वावच्छिन्नविषयकोपस्थितिरपि समूहालम्बनात्मकप्रमेयद्रव्योपस्थितौ प्रमेयपदजन्यत्वेन। पदजन्यताऽपि प्रमेयस्य विशेष्यत्वेन द्रव्यस्य प्रकारत्वात्प्रकारतासम्बन्धेनोपस्थितिरपि, तच्छाब्दबोधवारणाय तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थितिः कारणमितिरीत्या तत्पुरुषीयत्वनिवेशेन कार्यकारणभावे गौरवं स्यादित उत्तरमाह स्वजनकज्ञानीयेति। अत्र स्वपदेनो-

पस्थितिः तज्जनकं ज्ञानन्तु प्रमेयः प्रमेयपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावानित्येवं विधम् । विशेष्यता प्रमेये विशेष्यतावच्छेदकता प्रमेयत्वे समानाधिकरण्यसम्बन्धेन तद्वैशिष्ट्यम्प्रमेयत्वनिष्ठोपस्थितीयप्रकारतायामेव नतूद्बोधकान्तराद्वासमानद्रव्यत्वनिष्ठायामिति । द्रव्यत्वे प्रकारतासम्बन्धेन शाब्दबोधो न भवति ? विशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थित्यभावात् ।

ननु प्रमेयत्वावच्छिन्नोपस्थितिजनका अनेकप्रकारास्तथाहि, प्रमेयस्स्वजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतासम्बन्धेन प्रमेयपदवान् । प्रमेयपदं प्रमेयत्वावच्छिन्नविषयताकबोधजनकत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतावत् इत्यादयः । वृत्तित्वस्यानुगतानतिप्रसक्तत्वाऽभावस्य सर्वत्र प्रसिद्धत्वात् शक्तित्वेन लक्षणात्वेन पृथगेव कार्य्यकारणभावः । परस्परजन्यबोधे व्यभिचारवारणायाऽव्यवहितोत्तरत्वनिवेशोऽपि । एवञ्च घटत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नम्प्रति धर्मितावच्छेदकतासम्बन्धेन कस्याऽपि कार्यतावच्छेदकस्य व्यापकत्वाऽभावेन तद्धर्मावच्छिन्नकार्य्यं तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या धर्मितावच्छेदकतासम्बन्धेनापेक्षाऽभावादनुपस्थितिदशायामपि द्रव्यत्वे पूर्वोक्तरीत्या शाब्दबोध आपतेदिति चेन्न ? व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्र्या एवापेक्षेति शुद्धो नियमः । प्रकारतासम्बन्धेन शाब्दबुद्धित्वरूपकार्यत्वावच्छिन्नम्प्रति तत्तदव्यवहितोत्तरत्वशिष्टतत्तद्धर्मस्यैव व्याप्यत्वेन प्रसरात् । प्रकारताख्यसम्बन्धेन शाब्दबोधे तादृशोपस्थितीनामेवापेक्ष्यत्वम् । यत्र च धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधस्तत्र व्यापकसामग्रीविधया तादृशोपस्थितीनामपेक्षेत्येव तात्पर्य्यम् । एवञ्चानुपस्थितिदशायां धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधापत्तिरूपपूर्वोक्तदोषाऽभावात् द्रव्यन्द्रव्यपदशक्यं प्रमेयः प्रमेयपदशक्य इत्येवं समूहालम्बनात्मकवृत्तिज्ञानात्केवलप्रमेयत्वावच्छिन्नोपस्थितौ सत्यामेव विशेष्यतावच्छेदकतासम्बन्धेनोपस्थितिसत्त्वाद् द्रव्यत्वे शाब्दबोधवारणाय प्रकारतासम्बन्धेनेत्यस्य निवेशः । प्रमेयत्वनिष्ठविशेष्यतावच्छेदकतावैशिष्ट्यं कालिकसम्बन्धेनादाय द्रव्यत्वनिष्ठप्रकारतायान्दोषवारणाय सामानाधिकरण्यसम्बन्धेन वैशिष्ट्यस्य विवक्षितत्वात् । घटो घटपदशक्यः पटः पटपदशक्य इत्येवं शक्तिज्ञाने उद्बोधकान्तरवशात्प्रमेयत्वावच्छिन्नस्य कदाचिदुपस्थितिस्तत्र प्रमेयत्वावच्छिन्नप्रकारतायां विशेष्यतावच्छेदकवैशिष्ट्यसत्त्वात्प्रमेयत्वावच्छिन्नप्रकारताकशाब्दबोधनिवृत्तये स्वानवच्छेदकधर्मानवच्छिन्नत्वस्याऽपि वैशिष्ट्यघटकत्वेन संयोजनात् प्रमेयवान् प्रमेयपदशक्य इतिज्ञानानन्तरम्प्रमेयत्वावच्छिन्नप्रकारताकोपस्थितावेवोद्बोधकान्तरवशाद्घटत्वावच्छिन्नस्य भानं कदाचिदायाति । तदा निरवच्छिन्नत्वनिष्ठप्रकारताकशाब्दबोधवारणाय स्वानवच्छेदकधर्मानवच्छिन्नत्वसम्बन्धावच्छिन्नस्वनिरूपितवृत्तित्ववत्त्वस्य निवेशनीयत्वात् । कालिकसम्बन्धेन द्रव्यत्वविशिष्टो द्रव्यपदशक्य इतिज्ञाने उद्बोधकान्तरवशाद् घटत्वविशिष्टघटस्य यदि भा-

न च पदार्थेऽपि प्रकारतासम्बन्धेन शाब्दबोधोत्पत्त्या तत्र प्रकारतासम्बन्धेन पदार्थोपस्थितेर्हेतुता व्यभिचारेण कल्पयितुमशक्येति वाच्यम् ? परामर्शकारणताविचारदर्शितदिशा व्यभिचारस्य वारणीयत्वादिति—

---

नन्तदा समवायसम्बन्धावच्छिन्नघटत्वप्रकारकशाब्दबोधवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्याऽपि निवेश्यत्वात्।

अस्मद्गुरवस्तु

केवलं स्वप्रयोज्यत्वमात्रम्वैशिष्ट्यनियामकम्बोध्यम् इत्याहुः।

ननु द्रव्यं घट इत्यत्र द्रव्यम्विशेष्यं घटश्च प्रकार इति द्रव्ये विशेष्यतासम्बन्धेन द्रव्यत्वे च विशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधो भवति तथा पदार्थे घटेऽपि प्रकारतासम्बन्धेन शाब्दबोध इष्यत एव। परन्तु तादृशोक्तप्रकारतासम्बन्धेनोपस्थितिस्तु नास्त्येव घटपदजन्यघटोपस्थितौ घटपदार्थस्य विशेष्यतयैव भानन्नतु प्रकारतयेति घटे घटपदजन्योपस्थितीयप्रकारतैव नास्तीति प्रकारतासम्बन्धेन कथं घटे उपस्थितिस्स्यादित्याशङ्क्याह नच पदार्थेऽपीति।

परामर्शकारणताविचारदर्शितदिशेति।

परामर्शकारणतायां यो विचारस्तत्र दर्शिता या दिक् तया तद्रीत्या व्यभिचारो वारणीय इत्यभिप्रायः। पर्वतो वह्निमानित्यादौ वह्न्यनुमितित्वावच्छिन्नम्प्रति धूमपरामर्शस्य कारणत्वम्। आलोकपरामर्शस्याऽपि कारणत्वम्। धूमपरामर्शाऽलोकपरामर्शयोः परस्परजन्यबोधे व्यभिचारस्तद्वारणाय धूमपरामर्शाव्यवहितोत्तरत्वविशिष्टानुमितित्वावच्छिन्नम्प्रति धूमपरामर्शज्ञानं कारणम्। एवमालोकपरामर्शाव्यवहितोत्तरत्वविशिष्टानुमितित्वावच्छिन्नम्प्रति आलोकपरामर्शज्ञानं कारणम् इति मुद्रया कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशेन यथा व्यभिचारो निवारितस्तथैव स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थित्यव्यवहितोत्तरत्वविशिष्टशाब्दबोधम्प्रति स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितिः कारणम्। यथा द्रव्यं घट इत्यत्र द्रव्यत्वे।

घटे जायमानशाब्दबोधम्प्रति तु निरुक्तप्रकारतासम्बन्धेनोपस्थितेः कारणत्वमेव नास्ति यतो घटेऽसत्वाद् व्यभिचारित्वं स्यात्। तथाच घटे यादृशप्रकारतासम्बन्धेनोपस्थित्यव्यवहितोत्तरं शाब्दबोधो निष्पद्यते तादृशप्रकारतासम्बन्धेनैवोपस्थितेः कारणत्वमिति व्यभिचाराऽभावः। एवञ्च विषयतासम्बन्धेन कार्यकारणभावे दोषाभावेन योग्यताज्ञाने द्रव्यत्वावच्छिन्नधर्मिकत्वप्रवेशापेक्षाऽभावेन द्रव्यं घट इत्यत्राभेदसंसर्गकघटत्वावच्छिन्नप्रकारकयोग्यताज्ञानं यादृशं शाब्दबोधञ्जनयति तादृशस्यैव योग्यताज्ञानस्य घटो घट इत्यत्राऽपि सत्त्वात्कारणसत्त्वे कार्यावश्यम्भावेनाभेद-

चेत्तर्हि तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्यापि हेतुतायाः स्वीकरणीयतया न घटो घट इत्यादिस्थले शाब्दबोधापत्तिः। स घट इत्यादिवाक्याज्जातित्वादिना घटत्वादिधर्मितावच्छेदककस्य घटः स इत्यादिवाक्यात्स्वरूपतो घटत्वादिधर्मितावच्छेदककस्य जातित्वादिविशिष्टघटत्वावच्छिन्नप्रकारताकस्य शाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये।

---

संसर्गकघटत्वावच्छिन्नप्रकारकघटत्वावच्छिन्नविशेष्यकशाब्दबोधस्स्यादेवेति प्रश्नकर्त्तुराशयः। समाधत्ते—

तर्हीति।

तद्धर्मावच्छिन्नाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदस्य (प्रकारतावच्छेदकधर्मभेदस्य) कारणत्वम्। अत्र तद्धर्मपदेन प्रकारतावच्छेदकघटत्वादिधर्मस्य ग्रहणम्। यत्र हि प्रकारतावच्छेदकविशेष्यतावच्छेदकधर्मयोर्भेदोऽस्ति तत्रैवाऽभेदान्वयो यथा द्रव्यं घटः नीलो घटः। विशेष्यतावच्छेदकन्द्रव्यत्वम्प्रकारतावच्छेदकं घटत्वम्भिन्नम् विशेष्यतावच्छेदकम्प्रकारतावच्छेदकं भिन्नं नीलत्वमित्युभयत्राऽभेदान्वयः।

प्रकृते घटो घट इत्यत्र घटत्वमेव विशेष्यतावच्छेदकं घटत्वमेव हि प्रकारतावच्छेदकमितिविशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्भेदाऽभावान्नाऽभेदान्वयाऽपत्तिरिति तात्पर्य्यम्।

वस्तुतस्तु

द्रव्यं घटः घटो घट इतिदृष्टान्तदार्ष्टान्तिकयोर्महद्वैषम्यम्। तथाहि, द्रव्यं घटः इत्यत्र घटमुद्दिश्य द्रव्यत्वविधानं सार्वजननीनन्तु द्रव्यमुद्दिश्य घटत्वविधानम्। एवञ्च घटे उद्देश्यतासम्बन्ध उद्देश्यता च विशेष्यताऽपरपर्याया प्रसिद्धैव, द्रव्यत्वे च विधेयतासम्बन्धो विधेयता च प्रकारताऽपरपर्याया प्रसिद्धैव। एवञ्च द्रव्यं घट इत्यत्र घटविशेष्यकद्रव्यप्रकारक एव शाब्दबोधस्तथाच द्रव्यं घट इतिदृष्टान्तेन घटो घट इत्यत्र घटप्रकारकशाब्दबोधापत्तिः कथमिति विवेचयन्तु धीधनाः।

केचित्तु

उद्देश्यतायां विशेष्यत्वे विधेयतायाम्प्रकारत्वे पर्वते वह्निरित्यत्र शाब्दबोधप्रलयो वह्नावेव विधेयत्वम्प्रथमान्तार्थमुख्यविशेष्यकबोधश्च तर्काऽभिमतः कथञ्च वह्नौ विशेष्यत्वमिष्टमभिरक्षितं स्यात्। किञ्च सर्वेषु घटेषु रूपमित्यत्राऽपि शक्तिवादे सर्वशब्दार्थविचाराऽवसरे रूपस्यैव विधेयत्वम्विशेष्यत्वञ्च कथङ्कारं सिद्ध्येदेवञ्च क्वचित्प्रकारतायामुद्देश्यतासम्बन्धः क्वचिद्विशेष्यतायां विधेयतासम्बन्धस्तत्तद्वाक्यार्थानुरोधात्। तथाच द्रव्यं घट इत्यत्र घटनिष्ठा या उद्देश्यता तत्रप्रकारतासम्बन्धप्रबन्धानुरोधेना-

पत्तिप्रदर्शनं सयुक्तिकं सङ्गच्छत इति शुक्लाः।

ननु यद्यभेदसंसर्गकशाब्दबोधम्प्रति प्रकारतावच्छेदकविशेष्यतावच्छेदकधर्मभेदः कारणमित्युच्यते चेत्तर्हि यःखल्वत्र जातिमानस्ति स घट आनेतव्यो भवद्भिरितिमहावाक्यघटके स घट इति वाक्ये घटस्स इतिवाक्ये च विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्भेदाऽभावेनाऽभेदान्वयबोध इष्टोऽपि न स्यात्तथाहि, जात्यवच्छिन्ने तत्पदशक्त्या तत्पदेन जातिमानेव गृह्यते जातिमान् पदार्थ एवोद्देश्यस्तस्यैव विशेष्यत्वं घटपदार्थश्च प्रकारः प्रकारतावच्छेदकधर्मश्च घटत्वमेव तत्पदवाच्यजातिमद्विशेष्यपदार्थे विशेष्यतावच्छेदकधर्मस्तु जातिरेव नान्यस्तथाच जातौ घटत्वभेदो नास्त्येव, जातेस्तु घटत्वादिरूपत्वं सार्वत्रिकं, घटत्वस्य घटत्वत्वेन भानन्तु भवत्येव नहि ? जात्यखण्डोपाध्यतिरिक्तपदार्थस्यैव किञ्चिद्धर्मप्रकारेण भानमितिनियमादत्र घटत्वस्य जातित्वेनैव प्रतीतिः तत्पदस्य जातिमत्येव शक्तत्वाद्विशेष्यतावच्छेदकजातिघटत्वपदार्थयोर्भेदाऽभावेनाऽभेदान्वयबोधो न स्यात्। एवं घटस्स इतिवाक्ये घटत्वजात्योर्भेदाऽभावेनाभेदान्वयबोधो न स्यादित्याशयेनाह स घट इति। कार्यतावच्छेदकदले विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च निरवच्छिन्नत्वविशेषणविशिष्टा ग्राह्येति तत्त्वम्।

तथाचायं कार्यकारणभावः तद्धर्मनिष्ठनिरवच्छिन्नावच्छेदकताकाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदःकारणम्। अर्थात् निरवच्छिन्नावच्छेदकताकविशेष्यताकम्, (निरवच्छिन्नविशेष्यतावच्छेदकताकम्, निरवच्छिन्नावच्छेदकताकविशेष्यताकम्, निरवच्छिन्नप्रकारतावच्छेदकताकम्) च शाब्दबोधम्प्रति तद्धर्मभेदस्य कारणत्वमिति फलितम्। द्रव्यं घट इत्यत्र द्रव्यत्वस्य जातित्वेन स्वरूपतो भासमानत्वाद् द्रव्यत्वनिष्ठा या विशेष्यतावच्छेदकता सा निरवच्छिन्नैव घटत्वनिष्ठा या प्रकारतावच्छेदकता साऽपि घटत्वस्य जातित्वेन स्वरूपतो भासमानत्वान्निरवच्छिन्नैवेति। तादृशशाब्दबोधम्प्रति द्रव्यत्वघटत्वधर्मयोर्भेदः परन्तु पूर्वोक्तजातिमान् घट इत्यत्र विशेष्यो जातिमानेव विशेष्यतावच्छेदकता च जातावस्ति जातेश्च जातित्वावच्छिन्नत्वेन सावच्छिन्नत्वमेव। तथाच कार्यकारणभावस्यात्राऽप्रवृत्त्याऽत्र तद्धर्मभेदाऽभावेऽपि शाब्दबोधस्याभेदसंसर्गकस्य निर्विवादत्वात्। द्रव्यं घट इतिवत् विशेष्यतावच्छेदकं घटत्वं प्रकारतावच्छेदकञ्च नीलघटत्वमिति द्वयोर्भेदाच्छाब्दबोधः।

नवीनमते तु विधेयांशेऽर्थात् विशेषणकोटौ घटापेक्षया नीलस्याऽपि प्रवेशान्नीलघटत्वावच्छिन्नप्रकारतानिरूपिताऽभेदसंसर्गावच्छिन्नेतिशाब्दबोधप्रतीतेर्घटत्वं विशेष्यतावच्छेदकन्नीलघटत्वम्प्रकारतावच्छेदकमिति तयोर्भेदान्न शाब्दबोधानुपपत्तिः।

---

निरवच्छिन्नत्वञ्च—अवच्छेदकतानिरूपितत्वाभाववत्त्वम्।

सावच्छिन्नत्वञ्च—सम्बन्धातिरिक्तयत्किञ्चिन्निष्ठावच्छेदकतानिरूपितत्वम्।

अत्रैव प्रसङ्गाज्जातिलक्षणं विचार्य्यते ।

नित्यत्वे सत्यनेकसमवेतत्वञ्जातित्वमितिप्रसिद्धलक्षणन्तु न युक्ततरं ? विभुद्वय-संयोगस्वीकारे संयोगपदार्थेऽतिव्याप्त्यापत्तेः । किञ्च नित्यत्वन्नाम प्रागभावाऽप्रति-योगित्वे सति ध्वंसाऽप्रतियोगित्वम् उत्पादविनाशशून्यत्वं वा । तथा च नित्यत्वस्य गुरुशरीरत्वेन प्रचण्डगौरवाच्च ।

एवञ्च समवेतरहितसर्वाऽन्योऽन्याभावसमानाधिकरणसमवेतं सामान्यञ्जातिरिति फलति लक्षणम् । अभावे समवाये च दोषनिरासाय समवेतेति पदम् । संयोगे द्वित्वा-दौ च दोषवारणाय रहितान्तं समवेतविशेषणम् । विशेषपदार्थे दोषवारणाय सर्वेति विशेषणम् । सर्वान्योऽन्याऽभावसामानाधिकरण्यञ्च उभयावृत्तिधर्मावच्छिन्नप्रतियो-गिताकभेदव्यापकत्वम् । व्यापकत्वञ्च सामानाधिकरण्यसम्बन्धेन बोध्यम् ।

अथात्र विलक्षणाः ।

ननु जातिव्यक्त्योस्समवाय एव संसर्गः परन्तु भेदाऽभेदयोर्विरुद्धत्वेन सैव ततो-ऽन्याऽनन्या च नैव सम्भवति । अत एवोक्तम् ।

पृथक्त्वे व्यक्तितो जातिर्दृश्यते पृथगेव सा ।
अभेदे व्यक्तिमात्रं स्याद् द्विधा चेन्न विरोधतः ॥ इति ।

तथाच जातिव्यक्त्योरभेद एव नतु भेद इति सिद्धान्तः ।

नच यदि जातिपदार्थाऽपेक्षया व्यक्तिपदार्थो भिन्नस्तदा कापत्तिर्जातेस्सर्वत्र सत्त्वाद् व्यक्तेस्त्वेकत्रैव सत्त्वमिति प्रत्यक्षव्याप्तेरिति वाच्यम् ? जातेस्सर्वत्र सत्त्वा-नुपलब्धेः । नच केवलव्यक्तौ तत्सत्तेति वाच्यम् ? केवलव्यक्तौ जातिसत्तायामुत्प-न्नायां व्यक्तौ तद्देशावच्छेदेन प्रागसती जातिर्व्यक्तौ कथङ्कारमुपलभ्या भवेत् इत्य-भिप्रायात् । नच व्यक्तौ जातिरुत्पद्यत इति वाच्यम्, नित्यत्वविशेषणविशिष्टायाः जातेरुत्पत्त्ययोगात् । नच व्यक्त्यन्तराद् व्यक्त्यन्तरे जातिरागच्छति तथाच जाति-सत्तायान्न हानिरिति वाच्यम् ? जातेरमूर्त्तत्वेन तदागमनाऽसम्भवात् । नच जातेरपि मूर्त्तत्वेन न बाधेति वाच्यम् ? व्यक्त्यन्तरे तदुपलब्ध्यभावापत्तेः । नच अंशांशिभावेन व्यक्तौ जातिसम्बन्ध इति वाच्यम् ? जातेर्निरंशत्वात् । नच जातेरं-शवत्वे का बाधेति वाच्यम् ? व्यक्तिनाशे सति तदंशात्मकजातेरपि विशेषानुपल-ब्ध्या जातिरपि विनंक्ष्यतीतिदोषात् । नच जातिरन्यत्रापि यातीति वाच्यम् ? अमू-र्त्तत्वेन जातेर्गमनाऽसम्भवात् इति पूर्वोक्तेः । नच व्यक्त्यन्तरे पूर्वमेव जातिरवस्थितेति न काचित्क्षतिरिति वाच्यम् ? जातेःपुनःप्रवेशे द्विगुणाया जातेरुपलब्ध्यापत्तेः तदेव शिष्टैरुक्तम् पद्यम् ।

---

उभयावृत्तित्वम्—भेदविशिष्टान्यत्वम् । वैशिष्ट्यञ्च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभय-सम्बन्धेन ।

न याति नच तत्राऽसीदस्ति पश्चान्नचांशवत् ।
जहाति पूर्वं नाऽधारमहो व्यसनसन्ततिः । इति ।

नच चक्रभ्रमणवदेकव्यक्तौ विद्यमाना जातिर्व्यक्त्यन्तरेऽपि गच्छेदिति वाच्यम् ! सा जातिर्ह्येकस्याम्व्यक्तौ सर्वावयवावच्छेदेन वर्त्तते चेत्तर्हि व्यक्त्यन्तरेषु तदुपलब्ध्यभावाऽपत्तेः । नह्येका सती युगपदनेकत्र सर्वावयवावच्छेदेन वर्त्तितुं शक्नोतीति व्याप्तेश्च ।

नच जातिस्सावयवा व्यक्तौ गच्छतीति वाच्यम्' जातेस्सर्वथा निरवयवत्वात्कथङ्कारमनेकविधासु अतीताऽनागतवर्त्तमानासु व्यक्तिष्ववयवतो वृत्तिस्सम्भाव्यते । व्यक्तौ च वर्तमानेह प्रत्ययमनुभवेत् । नचाऽपीह गोत्वमिति कस्यचिदपि पुरुषस्य प्रतीतिरनुगुणेति । तथाच जातिव्यक्त्योरभेदे सर्वबाधाऽभाव इति निश्चितस्सिद्धान्तःकेषाञ्चित् । परन्तु जातिर्व्यक्तिभिन्नैव पदार्थःव्यक्तिद्वारा जातिलाभश्च यथा रसालजम्बीरादिफलनिष्ठमाधुर्य्यगुणस्य रसालादिद्वारैव लाभस्तद्वत् । नहि लोके माधुर्य्यं स्वातन्त्र्येणोपलभ्यते, तथैव जातेस्स्वातन्त्र्येणोपलब्धिविषयत्वाऽभावाद् व्यक्तिद्वारैव जातेर्व्यक्तौ समुपलब्धिः । नच गुणगुणिनोरभेद इति वाच्यम् ! यथा रसालादीनां चाक्षुषप्रत्यक्षत्त्वन्तथा तद्गतमाधुर्य्यादेरपि चाक्षुषत्वापत्तेः रसालमाधुर्य्ययोर्गुणगुणिनोरभेदात् ।

एवञ्च तद्गतधर्मस्य तद्द्वारेणैवोपलब्धिरेवम् प्रकारेण गुणगुणिनोःक्रियाक्रियावतोर्जातिव्यक्त्योश्च भेद एव सम्बन्ध इति घटस्य रूपम् चैत्रस्य ज्ञानम् चैत्रस्य क्रियेतिसिद्धान्तवाक्यप्रयोगवत् अभेदप्रत्ययाद् घटत्वं घटःघटो रूपम् ज्ञानं चैत्रःक्रिया चैत्र इत्यादिप्रयोगाणां सम्प्रदायविरुद्धत्वात् । तथाच जातेरमूर्त्तत्वात् विभुत्वाच्च न सा गच्छति नायातीति नोत्पद्यत इत्यपि । जात्यभिव्यञ्जकत्वम्व्यक्तेस्संस्थानस्य च । तथाचोत्पन्नघटे घटत्वं ज्ञायत इति सिद्धान्तमार्गः । अत एव "आकृतिग्रहणा जातिः" इति पातञ्जलं सङ्गच्छते । तत्राकृतिग्रहणेत्यस्याकृतिज्ञानजन्यज्ञानविषयेत्यर्थः । अथवा कस्यचिदपदेशादेकघटविषयके ज्ञाने जातेऽपि घटान्तरविषयकज्ञानमुपदेशान्तरमन्तरेण न भवेदिति व्यवहारलोपप्रसक्तेश्च घटत्वन्तत्रावश्यमुपेयम् । सामान्यलक्षणप्रत्यासत्त्या प्रथमघटज्ञानानन्तरं सकलघटज्ञानमुत्पद्यतेऽत एव व्यवहारसिद्धिः । अथ च विषयानुगमम्विना प्रतीतेरनुगतत्वसम्भवो नास्तीति व्याप्तिः । अयं घट इतिप्रत्ययानामनुगताकारत्वं विषयानुगतत्वमन्तरेण नैवास्ति । अनुगतो विषयश्च घटत्वमेव । तथाच जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोश्च सर्वथैव भिन्नत्वन्नाऽभेदस्संसर्ग इति तत्त्वमूचुः ।

वस्तुतस्तु घटत्वावच्छिन्नाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन घटत्वे शाब्दबोधस्तत्र घटत्वभेदाऽभावात्कार्यकारणभावे व्यभिचारस्स्यादतस्त-

घटो नीलघट इत्याद्यन्वयबोधस्य प्रामाणिकत्वेऽन्यत्र दर्शितरीत्या सोऽप्युपपादनीयः। स स इत्यादिवाक्याज्जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदकताकाभेदान्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधं प्रति तद्धर्मभेदस्यापि पृथक्कारणत्वं कल्पनीयम्।

---

द्धर्मप र्याप्तावच्छेदकताकाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदःकारणम्। प्रकारतावच्छेदकता विशेष्यतावच्छेदकता च यत्रैकधर्मे पर्याप्ता तत्रैवाभेदान्वयबोधे तद्धर्मभेदस्य कारणत्वम्। यथा द्रव्यं घट इत्यत्र प्रकारतावच्छेदकतैकस्मिन्नेव घटत्वे धर्मे विशेष्यतावच्छेदकतापि एकस्मिन्नेव द्रव्यत्वाख्यधर्मे इति। परन्तु नीलघटो घट इत्यत्र तु प्रकारतावच्छेदकता नीलत्वघटत्वैतदुभयधर्मपर्याप्ता विशेष्यतावच्छेदकता तु केवलघटत्वधर्मे पर्याप्तेति विशेष्यतावच्छेदकीभूतघटत्वप्रकारतावच्छेदकीभूतनीलघटत्वयोरधिकावगाहिशाब्दबोधस्वीकृतिपक्षे भेदाऽभावेऽपि अभेदान्वयो निर्बाध एव। तत्र तद्धर्मभेदस्य हेतुत्वाऽस्वीकारदित्यप्यभिप्रायस्तमेवाह दर्शितरीत्येति।

अस्यायमाशयः, निरवच्छिन्ना या घटत्वनिष्ठाऽवच्छेदकता तद्भिन्ना याऽवच्छेदकता तन्निरूपितत्वाऽभाववत्प्रकारताकशाब्दबुद्धित्वावच्छिन्नम्प्रत्येव हि घटत्वभेदस्य कारणत्वस्वीकारेण नीलघटत्वावच्छिन्नप्रकारताकशाब्दबोधस्य तादृशकारणानाक्रान्तत्वेन क्षतिविरहादिति मुद्रया दर्शितरीत्येत्यस्य निरुक्तप्रकारेण पर्याप्तिविवक्षयेति तात्पर्यम्।

न चैवं स्वीकारेऽपि तात्पर्ये नीलत्वघटत्वोभयधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धौ नीलत्वभेदघटत्वभेदयोःकारणत्वेन नीलघटो नीलघट इत्याकारकशाब्दबोधाऽपत्तिः नीलत्वभेदघटत्वभेदयोः कारणत्वेन विधेयांशेऽधिकावगाहिनीलघटो घट इतिशाब्दबोधस्याऽनुपपत्तिश्चेति वाच्यम्? तद्रूपवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्रूपभेदः कारणमिति तात्पर्याऽभिप्रायवर्णनात्।

अत्र मान्याः, जातिमान् जातिमान् जातिमद्घटो जातिमान् जातिमान् जातिमद् घट इत्याद्यनुपपत्तिवारणाय घटत्वगतैकत्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारताविशिष्टभिन्नत्वं कारणम्। वैशिष्ट्यञ्च प्रकारताया भेदे स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। एवञ्च घटो घट इत्यादौ वारणम्। विधेयांशेऽधिकावगाहिनीलघटो घट इत्यादीनां सिद्धिश्च।

नीलघटो नीलघटो द्रव्यम् नीलघटो नीलघटः घटो नीलघट इत्यादिषु वाक्येषु आपत्त्यनुपपत्त्योर्वारणाय नीलत्वनीलघटत्वगतत्रित्ववृत्तिप्रकारतानिरूपितधर्मितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति नीलत्वावच्छिन्ननीलनिष्ठाऽवच्छेदकतानिरूपितनिरवच्छिन्नघटत्वनिष्ठावच्छेदकताप्रकारताविशिष्टभिन्नत्वङ्कारणमिति कार्यकारणभाववर्णनेनेत्यभिधानात् ।

ननु यत्रोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यं न कथमपि भेद एवन्तात्पर्येण कालिकसम्बन्धावच्छिन्नघटत्वविशिष्टपरतच्छब्दघटितं स घट इतिवाक्यन्तत्र शाब्दबोधो न स्यात् । किञ्च कालिकसम्बन्धावच्छिन्नप्रमेयत्वविशिष्टवत्परेण स्वरूपेण प्रमेयत्वविशिष्टवत्परेण तच्छब्देन घटितं "स स" इतिवाक्यन्तत्र शाब्दबोधो न स्यात् उद्देश्यविधेयभावावच्छेदकतावच्छेदकगतरूपस्य तदवच्छिन्नस्य च भेदाऽभावादप्रसिद्धेश्चेति चेन्न ! कालिकसम्बन्धावच्छिन्नघटत्वादिगतरूपभेदस्य समवायघटत्वगतरूपे सम्भवोऽस्त्येव धर्मसंसर्गसाधारणोद्देश्यविधेयभावावच्छेदकत्वतदवच्छेदकत्वादीनां या पर्याप्तिस्तस्या एव विवक्षणात् ।

नन्वेवमपि कालिकसम्बन्धेन घटत्वविशिष्टत्वे सति समवायेन द्रव्यत्वविशिष्टपरेण, समवायेन घटत्वविशिष्टत्वे सति कालिकसम्बन्धेन द्रव्यत्वविशिष्टपरेण च तच्छब्देन घटितं यत् "स स" इतिवाक्यन्तस्माच्छाब्दबोधाऽनुपपत्तिरिति चेन्न ! अत्र विशेष्यतास्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति प्रकारताविशिष्टभिन्नं कारणमितिपरिकल्पनात् । वैशिष्ट्यञ्च स्वनिरूपितत्व स्वनिरूपितावच्छेदकतात्वव्यापकत्वोभयसम्बन्धेन । अत्र व्यापकता च स्वनिरूपितावच्छेदकताविशिष्टत्वसम्बन्धेन । अत्रच्छेदकतावैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वानच्छेदकाऽनवच्छिन्नत्व तत्सम्बन्धावच्छिन्नस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन । तथाचोद्देश्यविधेययोरैक्येऽपि विधेयांशेऽधिकावगाहेऽपि न विवाद इति गूढतत्त्वं विस्पष्टमाहुः ।

वस्तुतस्त्वयमभिप्रायः अभेदसंसर्गावच्छिन्ना या तद्धर्मवृत्तिः प्रकारता तादृशप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदः कारणमित्येव कार्यकारणभावः । तद्धर्मे वृत्तित्वञ्च प्रकारतायाः केन सम्बन्धेन ? स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । अत्र स्वपदेनाऽभेदसम्बन्धावच्छिन्नप्रकारता गृह्यते, घटे या स्वरूपसम्बन्धेनाभेदसम्बन्धावच्छिन्ना प्रकारता सैव स्वरूपसम्बन्धेन घटत्वगतैकत्वेऽपीति घटो घट इत्यत्र घटप्रकारकघटविशेष्यकबोध एवापत्तिविषयस्तत्र विशेष्यतावच्छेदकत्वं घटत्वे विशेष्यतावच्छेदकतायाञ्च पर्याप्तिसम्बन्धावच्छिन्ना प्रतियोगिताऽस्त्येव, विशेष्यतावच्छेदकतायां विशेष्यतात्वमप्यस्त्येवातः प्रतियोगिता विशेष्यतावच्छेदकतात्वावच्छिन्ना भवत्येव, एवञ्च विशेष्यतावच्छेदकतात्वावच्छिन्नप्र-

तियोगिताकपर्याप्तेरनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेव प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेवेति, विशेष्यतावच्छेदकतापर्याप्तिस्तु घटत्वनिष्ठैव वाच्या घटत्वमनुयोगि, अनुयोगितावच्छेदकञ्च घटत्वगतैकत्वमेव नान्यत् । तादृशशाब्दबुद्धित्वावच्छिन्नम्प्रति घटो घट इत्यत्र तद्धर्मभेदः कारणमित्यादिनियमाऽप्रवृत्त्या नाभेदान्वयबोधः । परन्तु घटो नीलघट इत्यत्राऽभेदान्वयो भवत्येव, विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं घटत्वगतैकत्वमेव, प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकञ्च नीलत्वघटत्वैतदुभयगतन्द्वित्वमित्येकत्वद्वित्वयोः परस्परभेदात्तद्धर्मभेदरूपकारणसामग्रीसत्त्वेऽभेदान्वयो नवीनाभिमतस्सयुक्तिक एवेत्यप्यभिप्रायः । अत एव नह्यवयवाऽपर्याप्तन्यायेनोभयपर्याप्ताऽपि प्रकारतावच्छेदकता वस्तुत्वेन प्रमेयत्वेन वाच्यत्वेन च रूपेण घटत्वेऽपि पर्य्याप्तैवेति घटत्वगतैकत्वभेदाऽभावादेवं कार्यकारणभावः कथमिति वदन्तः परास्ताः ।

न च घटस्स इत्यत्र जातिमान् घट इतिप्रतीतौ जातित्वावच्छिन्नघटत्वनिष्ठप्रकारतावच्छेदकताक एवाऽभेदान्वयबोधस्तत्र घटत्वगतमेकत्वमेव तन्निष्ठप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकमिति तद्भेदस्य घटत्वगतैकत्वेऽभावेन कथङ्कार्यकारणभावो निर्दुष्ट इति । निरवच्छिन्नत्वनिवेशेन तु न व्यभिचारवारणम् । नीलघटो घट इत्यधिकावगाहिबोधे विधेयांशे शाब्दबोधानापत्तेरिति वाच्यम् स्वविशिष्टधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपितावच्छेद्यतावदभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपधर्मभेदः कारणमिति प्रबन्धः । वैशिष्ट्यञ्च स्वनिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । एवञ्च घटत्वगतैकत्वे नीलघटत्वोभयगतद्वित्वभेदस्य सत्त्वेनापत्तिविरहात् । नच विधेयांशेऽधिकावगाहिशाब्दबोधस्थले निरुक्तरीत्या वारणेऽपि उद्देश्यांशेऽधिकावगाहिनीलघटो घट इत्यापत्तिर्निष्टाऽपि, तत्र नीलघटत्वोभयगतद्वित्वमेव हि विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकन्तत्र घटत्वगतैकत्वभेदस्य प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकस्य सुतरां विद्यमानत्वेन कथं वारणोपाय इति वाच्यम् । स्वनिरूपिताऽभेदसम्बन्धावच्छिन्नविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति स्वविशिष्टभेदस्यैव कारणत्वात् । वैशिष्ट्यञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वं स्वनिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकत्वमित्युभयसम्बन्धेन । तथाच घटत्वगतैकत्वावच्छेदेन नीलघट-

त्वोभयगतद्वित्वावच्छिन्नप्रतियोगिताकभेदोऽस्त्येव। नीलघटत्वोभयगतद्वित्वावच्छेदेन तु नीलघटत्वोभयगतद्वित्वावच्छिन्नप्रतियोगिताकभेदस्य घटत्वगतैकत्वावच्छिन्नप्रतियोगिताकभेदस्य चाऽविद्यमानत्वात्।

यदि च विधेये विशेष्यता उद्देश्ये प्रकारता नतूद्देश्ये विशेष्यता विधेये प्रकारतेति तदाऽधिकावगाहिविशेष्यकबोध इष्ट एव। कार्यकारणभावे विशेष्यताम्प्रकारताञ्च विहायोद्देश्यताविधेयतयोर्निवेश इति तदा न कोऽपि विवादः।

ननु स घटःजातिमान् घटःघटस्सःघटो जातिमानित्यत्रेष्टाऽभेदान्वयोपपत्तये प्रकारतावच्छेदकताया विशेष्यतावच्छेदकतायाश्च कार्यकारणभावे निरवच्छिन्नाया एव ग्रहणमित्युक्तम्। परन्तु स स इति जातिमान् इत्यर्थकवाक्ये विशेष्यतावच्छेदकतावच्छेदकस्य जातित्वस्य प्रकारतावच्छेदकतावच्छेदकस्य जातित्वस्य च भेदाऽभावेऽप्यभेदान्वयबोधाऽपत्तिः, तत्पदस्य जातिमति शक्तत्वेन प्रकारतावच्छेदिका विशेष्यतावच्छेदिका च जातिरेव नान्य: पदार्थः। जातिनिष्ठा प्रकारतावच्छेदकता, विशेष्यतावच्छेदकता तु जातित्वावच्छिन्नत्वेन सावच्छिन्नैव नतु निरवच्छिन्नेत्यनिष्टोऽभेदान्वयबोधो दुर्वार इति चेन्न? तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदः कारणमितिकार्यकारणभावोऽप्यङ्गीकार्य्यः। एवञ्च जातिमान् जातिमान् इत्यर्थके स स इत्यत्र जातिमान् पदार्थौ विशेष्यो विशेष्यतावच्छेदिका जातिरेव विशेष्यतावच्छेदकतावच्छेदकमेकञ्जातित्वमेव एवम्प्रकारो जातिमान् पदार्थः, प्रकारतावच्छेदिका जातिरेव प्रकारतावच्छेदकतावच्छेदकमेकञ्जातित्वमेव। तथाच प्रकारतावच्छेदकविशेष्यतावच्छेदकतावच्छेदकजातित्वधर्मयोरेकस्वरूपत्वेन भेदाऽभावादभेदान्वयनिवारणस्य सौष्ठवात्। एतत्कार्यकारणभावोदाहरणन्तु जातिमान् प्रमेयवान् इति। अत्र विशेष्यतावच्छेदकतावच्छेदकञ्जातित्वम् प्रकारतावच्छेदकतावच्छेदकम्प्रमेयत्वन्तयोश्च परस्परभेदादभेदान्वयबोध इष्टस्सङ्गच्छते।

अत्र केचिन्मान्याः प्रकारतावच्छेदकताविशेष्यता वच्छेदकता च उभयी यत्र स्थले सावच्छिन्ना निरवच्छिन्ना वाऽस्ति तत्र स्थलेऽभेदान्वयेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदः कारणमित्येक एव कार्यकारणभावः। द्रव्यं घट इत्यत्र प्रकारतावच्छेदकविशेष्यतावच्छेदकघटत्वद्रव्यत्वयोर्निरवच्छिन्नत्वेन सिद्धिः। जातिमान् प्रमेयवानित्यत्र तु जातित्वप्रमेयत्वाभ्यां सावच्छिन्नत्वमेव विशेष्यतावच्छेदकप्रकारतावच्छेदकजातिपदार्थप्रमेयपदार्थयोरिति तयोर्भेदादभेदान्वयस्सम्पन्नः। "स स जातिमान् जातिमान्" इत्यत्र तु नाभेदान्वयबोधः। विशेष्यतावच्छेदकताप्रकारतावच्छेदकतयोर्जातित्वेन सावच्छिन्नत्वेऽपि प्रकारतावच्छेदकविशेष्यतावच्छेदकजातेस्सत्त्वाज्जातित्वधर्मयोर्भेदाऽभावात्। स घट इतिनिरुक्तोदाहरणे तु नाभेदान्वयानुपपत्तिस्तत्र केवलविशेष्यतावच्छेदकतैव

एवं दण्डवान् दण्डवानित्यादिवाक्याद्दण्डसंयोगत्वाद्यवच्छिन्नवति तदवच्छिन्नवदभेदान्वयबोधस्य वारणाय दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितसंयोगत्वाद्यवच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धेन शाब्दबोधे दण्डत्वादिभेदस्यापि पृथक्कारणत्वं कल्पनीयम् । अवच्छेदकतायां निरवच्छिन्नत्वनिवेशोऽपि पूर्ववद् बोध्यः ।

---

सावच्छिन्ना नतु प्रकारतावच्छेदकताऽपि सावच्छिन्नोभयोः प्रकारतावच्छेदकताविशेष्यतावच्छेदकतयोर्यत्र सावच्छिन्नत्वन्निरवच्छिन्नत्वं वा तत्रैव तादृशकार्यकारणभावप्रवृत्तिरित्याशयात् । एवं घटस्स इत्यत्रापि केवलप्रकारतावच्छेदकतैव सावच्छिन्ना नतु द्वे इति कार्यकारणभावाऽप्रवृत्त्या तद्धर्मभेदाऽभावेऽप्यभेदान्वयो युक्ततर इति प्रोचुः ।

"सस" इतिवत् दण्डवान् दण्डवानित्यत्राऽपि नाऽभेदान्वयबोध इष्ट इति कार्यकारणभावान्तरन्तद्वारकमाह दण्डसंयोगत्वाद्यवच्छिन्नेति । दण्डवान् दण्डवानित्यस्य दण्डसंयोगवान् दण्डसंयोगवानित्यर्थः । दण्डसंयोगवान्पुरुषविशेषः पुरुषो विशेष्यस्तत्र दण्डसंयोगः प्रकारो दण्डसंयोगे दण्डः प्रकारो दण्डे दण्डत्वम्प्रकारः । द्वितीये दण्डसंयोगवानित्यत्र पुरुषः प्रकारस्तत्र दण्डसंयोगः प्रकारस्तत्र दण्डः प्रकारस्तत्र दण्डत्वम्प्रकारः । अत्र विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकन्तु दण्डत्वमेव प्रकारतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वमेवेति दण्डत्वस्यैकत्वात्तयोर्भेदाऽभावान्नाऽभेदान्वयबोधः ।

नन्वेवं कार्यकारणभावे जातिमद्वान् दण्डवान् दण्डवान् जातिमद्वानित्यत्राऽभेदान्वयबोधस्सर्वाभिमतो न सिद्ध्येत्तथाहि, जातिमद्वान् दण्डसंयोगवान्पुरुषो विशेष्यस्तत्र दण्डसंयोगः प्रकारस्तत्र दण्डः प्रकारस्तत्र जातिः प्रकारः । एवञ्च विशेष्यतावच्छेदकतावच्छेदकतावच्छेदिका जातिःप्रकारतावच्छेदकतावच्छेदतावच्छेदिकापि जातिरेवेति सा च दण्डत्वमेवेति तयोर्भेदो नास्तीति चेन्न ? निरवच्छिन्नत्वनिवेशात् । निरवच्छिन्नविशेष्यतावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधम्प्रति दण्डत्वधर्मभेदः कारणमितियोजना । एवन्निरवच्छिन्नप्रकारतावच्छेदकतावच्छेदकतावच्छेदकत्वमपि संयोजनीयमतो जातिमद्वान् दण्डवानित्यत्र दण्डत्वजातेर्जातित्वावच्छिन्नत्वेन सावच्छिन्नत्वमेव । विष्यतावच्छेदकतावच्छेदकतावच्छेदकतायाः एव दण्डवान् जातिमद्वानित्यत्र प्रकारतावच्छेदकतावच्छेदकतावच्छेदिकाया जातेर्जातित्वावच्छिन्नत्वेन निरवच्छिन्नत्वाऽभावात्कार्यकारणभावाऽप्रवृत्त्या तद्धर्मभेदाऽभावेऽप्यभेदान्वयस्य निर्विवादत्वात् । यत्र कुत्राऽपि शाब्दबोधस्तत्र ज्ञानमेव प्रधानकारणमेवञ्च ज्ञानस्य शाब्दबोधाऽपेक्षया व्यापकत्वम्व्याप्यधर्मावच्छिन्नकार्ये जननीये व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्री अपेक्ष्यते इति अभिप्रायेणानेककार्यकारणभावे गौरवमिति सर्वानुगतमे-

वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुता लाघवात्। एवं च घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वाद्यवच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नोत्पादकसामग्रीविरहेण न तत्र तादृशविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधापत्तिः। एवं च घटवान्घटवानित्यादिशाब्दबोधकारणानुरोधेन धर्मितावच्छेदकतावच्छेदकादिनिष्ठप्रत्यासत्या कारणत्वान्तरमपि न कल्प्यते। एवमुद्देश्यतावच्छेदकविधेययोरैक्ये-नैको द्वावित्यादिवाक्यादेकत्वद्वित्वाद्यवच्छिन्ने एकत्वद्वित्वादीनां भेदान्वयबोधानुदयाद्, एकत्वत्वद्वित्वत्वाद्यवच्छिन्नसमवायादिसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायादिसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वादिसम्बन्धेन शाब्दबुद्धौ एकत्वत्वद्वित्वत्वादिभेदस्य।

---

कमेव कार्यकारणभावमाह वस्तुतस्त्विति। अत्र विषयतापदेन यत्र यादृशी विषयता वर्त्तते सैव विशेष्यतारूपा विशेष्यतावच्छेदकतारूपा विशेष्यतावच्छेदकतावच्छेदकतारूपा च एवम्प्रकारतारूपा प्रकारतावच्छेदकतारूपा प्रकारतावच्छकतावच्छेदकतारूपेति। द्रव्यं घट इत्यत्र घटत्वाच्छिन्नं द्रव्यत्वन्तन्निष्ठविशेष्यतावच्छेदकताख्यः एव विषयतासम्बन्धःघटत्वद्रव्यत्वधर्मयोर्भेदश्चेत्यभेदान्वयसिद्धः। घटो घट इति प्रत्युदाहरणम्।

वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेनेति।

नच घटो द्रव्यमित्याकारकत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य नैवास्ति व्यापकता, तदपेक्ष्यैतस्याऽल्पदेशवृत्तित्वात् किम्पुनस्समवायेन जातिमान् घटः प्रमेयवान् पटस्समवायेनेत्यादौ जातित्वेन प्रमेयत्वेन वा धर्मित्वप्रकारत्वावच्छेदकत्वेन रूपेण घटत्वावगाहिशाब्दबोधस्य अवच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतानिरूपितधर्मितानिरूपितावच्छिन्नावच्छेदकत्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति च व्यापकत्वन्न स्यादिति वाच्यम्। निरवच्छिन्नत्वविशिष्टघटत्वनिष्ठावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य व्यापकत्वसम्भवात्। जातित्वावच्छिन्नावच्छेदकताप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति प्रमेयत्वावच्छिन्नावच्छेदकताप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति च जातित्वान्यवृत्तिविषयतासम्बन्धेन प्रमेयत्वान्यवृत्तिविषयतासम्बन्धेन च ज्ञानत्वावच्छिन्नस्य व्यापक-

त्ववर्णनात् । नन्वेवमपि जातित्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य नैव व्यापकत्वसिद्धिप्रत्याशा, समवायसम्बन्धावच्छिन्नजातित्वावच्छिन्नावच्छेदकताकप्रकारतानिरूपिता या धर्मिता तादृशधर्मितानिरूपितकालिकसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वस्य जातित्वे प्रमेयत्वे वा विद्यमानत्वादिति कथम्व्यापकत्वलक्षणसमन्वय इति चेन्न ? उभयोरवच्छेदकत्वपदार्थयोरेकसम्बन्धावच्छिन्नत्वस्यैव व्याप्यलक्षणांशे निवेशः । एवञ्च कालिकसम्बन्धसत्तया नापत्तिरिति समाधानात् ।

ननु विधेयांशेऽधिकावगाहिशाब्दबोधो नवीनैस्स्वीकृत एवञ्चास्मिन्पक्षे घटो नीलघट इत्यत्र घटत्वपदार्थेऽपि निरवच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतानिरूपितनिरवच्छिन्नावच्छेदकत्वसम्बन्धेन शाब्दबोधस्य वर्त्तमानतया तत्र घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नप्रतियोगिताकाऽभावात्कथङ्कारम्व्यापकत्वलक्षणसंघटनेति, व्याप्यलक्षणे केवलशुद्धघटत्वमात्रावच्छिन्नत्वनिवेशेन तु नैव निर्वाहोऽभ्युपेयो ? नीलघटो नीलघट इत्येवम्विधशाब्दबोधस्य वज्रलेपायितत्वात् । इति चेन्न ? घटत्वादिगतैकत्वान्यवृत्तिविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानत्वावच्छिन्नम्प्रति घटत्वगतैकत्वभेदस्य कारणत्वाङ्गीकारात् ।

नन्वेवं समाधानेऽपि उद्देश्यांशेऽनिष्टाधिकावगाहिशाब्दबोधस्य जन्मसहस्रेणाऽपि निवारयितुमशक्यत्त्वम् इति चेन्न ? निरवच्छिन्नघटत्वमात्रावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य व्यापकत्वसम्भवेनापत्तिपरिहारात् ।

किञ्च निरवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितनीलत्वावच्छिन्नप्रकारतानिरूपितनीलत्वावच्छिन्नविशेष्यतानिरूपिताऽनवच्छिन्नाऽवच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य व्यापकत्वाच्चेति मुद्राबोधनात् ।

घटत्वस्यैव विशेष्यतावच्छेदकत्वात्प्रकारतावच्छेदकत्वाच्च नाऽभेदान्वयबोध इत्याशयेनाह एवञ्चेति ।

ननु जातिमान् घट इत्यत्र घटत्वे जातित्वसत्त्वात् घटत्वनिष्ठावच्छेदकताकाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधः । एवञ्च घटत्वावच्छिन्नप्रकारताको घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानव्याप्य इति तत्राऽभीष्टोऽभेदान्वयः कथमिति ।

किञ्च नीलघटो घट इत्यत्राऽपि घटत्वे शाब्दबोधः कथमिति चेन्न ? आद्यदोषवारणाय व्याप्यांशे निरवच्छिन्नत्वनिवेशनात् । द्वितीयदोषवारणाय प्रकारतायां घटत्वेतरधर्मानवच्छिन्नत्वनिवेश इति तत्त्वात् । घटत्वेतरनीलत्वेनावच्छिन्नत्वेन नापत्तिरिति यावत् ।

एको द्वाविति ।

एवं कर्म गच्छतीत्यादौ च कर्मत्वत्वाद्यवच्छिन्ने आधेयतासम्बन्धेन तद्वतोऽन्वयबोधवारणाय कर्मत्वत्वाद्यवच्छिन्नावच्छेदकताधेयतासम्बन्धावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे कर्मत्वत्वादिभेदस्य घटो न घट इत्याद्यनुमितेः शाब्दबोधस्य च वारणाय घटत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेनानुमितौ शाब्दबोधे च घटत्वादिभेदस्य हेतुत्वान्तरकल्पनमनादेयमेव। तद्धर्मभेदस्यैकैककारणतयैव सकलातिप्रसङ्गवारणसंभवादिति कृतं पल्लवितेन ।

---

एकपदवाच्या एकत्वेन रूपेण घटादिव्यक्तिरेव तदुत्तरविभक्तेरप्येकत्वमर्थः। एक इत्यस्य एकत्ववान् एकत्ववानित्यर्थः प्रकृत्यर्थप्रत्ययार्थौ एकत्वसंख्याविशिष्टघटव्यक्तिमुद्दिश्यैकत्वविधानम् । उद्देश्या एकव्यक्तिः उद्देश्यतावच्छेदकमेकत्वम् । विधेयमप्येकत्वमेव उद्देश्यातावच्छेदकविधेययोरैक्येन समवायसम्बन्धेनैकत्वसंख्याया उद्देश्यभृतव्यक्तावन्वयस्तद्वारणाय एकत्वनिष्ठेन एकत्वत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वसम्बन्धेन शाब्दबोधम्प्रत्येकत्वत्वभेदःकारणमिति कार्यकारणभावो न कर्तव्यो भवति । एकत्वत्वयोर्भेदाऽभावात्पूर्वोक्तेनैव वारणे लाघवमिति तात्पर्येणाहानुदयादिति ।

एवं कर्म गच्छतीति ।

अयम्भावः, ग्रामङ्गच्छतीत्यत्र शाब्दबोधो भवति ग्रामपदार्थ आधेयतासम्बन्धेन द्वितीयार्थकर्मतायाम्प्रकारः प्रकारतावच्छेदकत्र ग्रामत्वम् विशेष्यतावच्छेदकं कर्मतात्वम्। परन्तु ग्रामस्य कर्मपदार्थत्वेन कर्मपदवाच्यत्वेऽपि कर्म गच्छतीति न भवतीति तात्पर्येणाह एवमिति ।

कर्म गच्छतीत्यत्र कर्मपदस्य प्रकृतिभूतस्य कर्मत्वावच्छिन्ने शक्तिःतदुत्तरलुप्तद्वितीयाविभक्तेःकर्मत्वावच्छिन्ने कर्मत्वे शक्तिः ? प्रत्ययार्थप्राधान्यात् । तत्र शाब्दबोधवारणाय कर्मत्वत्वावच्छिन्नावच्छेदकताकाऽधेयतासम्बन्धावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतालक्षणसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति कर्मत्वत्वभेदः कारणमिति पृथग्लक्षणन्न कर्तव्यम्भवति पूर्वोक्तलक्षणेनैव वारणसम्भवादिति तात्पर्यम् ।

घटो न घट इति ।

नच घटभेदव्याप्यवान् घट इत्याकारको यदि परामर्शस्स्यात्तदैव घटत्वावच्छिन्नधर्मिकघटत्वावच्छिन्नप्रतियोगिताकभेदानुमितिस्स्यात्परन्तु तादृशपरामर्शस्तु भवत्येव नहि आरोपादिना यदि कथञ्चिद्भविष्यति तादृशोऽपि परामर्शस्तर्हि तादृशस्यानुमितिजनकत्वानर्हत्वमिति कथं ग्रन्थ इति वाच्यम् ? भेदव्याप्यवान् घट इत्येवंविधे परा-

---

मूर्त्तत्वम्—पृथिव्यप्तेजोवायुमनांसि मूर्त्तानि तद्वृत्ति । अपकृष्टपरिमाणवत्त्वञ्च तद् ज्ञेयम् ।

मर्शे भेदसामान्यापेक्षया घटभेदस्य लघुत्वेन लाघवज्ञानानुमित्यापत्तिसम्भवेन ग्रन्थस्य सयुक्तिकत्ववर्णनात्। अस्मिन्वाक्ये पदार्थनिर्देशःधर्मी घटः, घटभेदस्यत्र प्रकारः, प्रकारतावच्छेदको घटःप्रकारतावच्छेदकतावच्छेदकं घटत्वमेव धर्मितावच्छेदकमपि तदेव घटे घटत्वं समवायेन भासत इति नियमात्। समवायेन घटत्वं घटे प्रकारः। घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटभेदे घटपदार्थःप्रकारः, भेदश्च स्वरूपसम्बन्धेन विशेष्यभूतघटे प्रकार इति। घटे च घटभेदस्याऽसम्बन्धःघटे घटभेदानुमितेर्निवारणाय घटत्वनिष्ठेन घटत्वावच्छिन्नभेदनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकतालक्षणसम्बन्धेन शाब्दबोधम्प्रति घटत्वभेदःकारणमिति पृथक् कार्यकारणभावो न कर्तव्यो भवति तद्धर्मान्यवृत्तिविषयतासम्बन्धेनेति कार्यकारणभावेनैव गतार्थत्वात्। प्रकारतावच्छेदकं विशेष्यतावच्छेदकञ्च घटत्वमेवेत्यभिमानः। दण्डवान् दण्डवान् घटो घट इत्यादिसकलापत्तिवारणं लाघवेन जातमिति विविच्याह सकलात्तिप्रसङ्गेति।

ननु येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ता येन वाक्येन नञ्रहितेन प्रतीयते तेन वाक्येन नञ्घटितेन तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाऽभावस्तद्धर्मावच्छेदेनैव प्रत्याय्यत इतिनियमेन स्वरूपसम्बन्धेन घटो घट इति वाक्याद् घटत्वावच्छेदेन घटाऽभेदवत्ताप्रतीतेरसत्त्वात्तदवच्छेदेन घटाऽभेदाऽभावप्रतीतेरकिञ्चनत्वात्कथं लाघवकल्पनं ग्रन्थकृतामिति चेन्न? येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ताप्रतीतौ यद्वाक्यं साकाङ्क्षं तेन वाक्येन नञ्घटितेन तेन सम्बन्धेन तदवच्छेदेन तदभावःप्रत्याय्यत इत्याकारको नियमः। यद्यपि घटो घट इति वाक्यन्न तादृशशाब्दबोधजनकन्तथापि तादृशशाब्दबोधाय तद्घटो घट इति वाक्यं साकाङ्क्षमस्त्येवेति व्याख्यानात्।

अत्रास्मद्गुरवः,

ननु कालिकादिसम्बन्धेन समवायसम्बन्धेन घटत्वविशिष्टस्य घटत्वविशिष्टेऽभेदान्वयः प्रतीतिसिद्धः, एवञ्च तत्र घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधस्य घटत्वेऽपि विद्यमानत्वाद् घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानव्यापको नैव स बोध इति चेन्न? घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताविशिष्टावच्छेदकतासम्बन्धेन शाब्दबोधस्य व्याप्यत्ववर्णनात्। अवच्छेदकतावैशिष्ट्यञ्च स्वनिरूपितावच्छेद्यतावदभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितत्व स्वावच्छेदकसम्बन्धावच्छिन्नत्वमित्युभयसम्बन्धेन। उद्देश्यपदार्थे प्रकारत्वम्विधेयपदार्थे विशेष्यत्वं यत्र तत्र तु शाब्दबोध इष्ट एव विशेष्यांशेऽधिकावगाहिशाब्दबोधेऽपि। तथाच तत्र दोषवारणाय व्याप्यकोटौ प्रकारताविशेष्यतयोस्स्थाने विधेयतोद्देश्यतयोःप्रवेशेन क्षतिविरहादित्याहुः।

---

नञ्समभिव्याहार इति—नञोऽसमभिव्याहारे येन सम्बन्धेन येन रूपेण यत्र यद्वत्त्वम्प्रतीयते नञ्समभिव्याहारे तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वन्तत्र प्रतीयते इति नियमो घटवद् भूतलम् घटाभाववद् भूतलं घटवन्न भूतलमित्यादौ कल्प्यः।

भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते न त्वन्येन। सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकारणकलापे राजा पुरुषः भूतलं घट इत्यादौ पुरुषाद्यंशे राजभूतलादेः स्वत्वाधेयतासंबन्धेन।

तण्डुलः पचति चैत्रः पच्यते इत्यादौ कर्मत्वकर्तृत्वादिसंबन्धेन तण्डुलचैत्रादौ पाकादेः स्वकर्मकत्वकर्तृकत्वादिसंबन्धेन पाकाद्यंशे वा तण्डुलचैत्रादेरन्वयाबोधान्निपातातिरिक्तप्रातिपदिकार्थयोः क्रियातादृशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वात्।

---

भेदान्वयबोधश्चेति।

अभेदान्वयबोधप्रकारम्परिसमाप्य सम्प्रति भेदान्वयबोधप्रकारम्प्रवक्तुमारभ्यते भेदान्वयेति। अयं ग्रन्थाशयः, भेदसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विभक्तिनिपातान्यतरपदजन्योपस्थितिः कारणम्। उदाहरणञ्च राज्ञःपुरुष इति, अत्र राजपुरुषयोर्भेदलक्षणस्स्वस्वामिभावसम्बन्धः। केवलस्वत्वस्यैव षष्ठयर्थत्वे तु राज्ञःपुरुषे भेदलक्षणस्स्वत्वसम्बन्ध इति। तथाच भेदसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति ङस्विभक्तिजन्यतदर्थोपस्थितिःकारणम्। अत एव राजा पुरुष इत्यत्र न तादृशभेदलक्षणश्शाब्दबोधः। निपातोदाहरणन्तु घटो न पट इति, अत्र घटपटयोर्भेदलक्षणःप्रतियोग्यनुयोगिभावस्सम्बन्धः।

किञ्च पटस्य घटे स्वप्रतियोगिकभेदविशिष्टत्वाख्यसम्बन्धः पटप्रतियोगिकभेदवान् घट इतिशाब्दबोधात्। एवञ्च भेदसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नम्प्रति नञ्पदजन्यतदर्थोपस्थितिःकारणम्। राजा पुरुष इति, अत्र स्वत्वसम्बन्धेन राजविशिष्टःपुरुष इति बोधो न भवति। भूतले घट इति, अत्र आधेयत्वसम्बन्धेन भूतलविशिष्टो घट इति बोधो न भवति तस्मादुक्तनियमःप्रतीतिबलेनाङ्गीकरणीय इत्याशयः। प्रातिपदिकार्थयोर्दोषम्प्रदर्श्य धात्वर्थप्रातिपदिकार्थयोर्वक्तुमारभते तण्डुलः पचतीति। नचायम्प्रयोग एव न भवति अनभिहिताधिकारेण कर्तरि लटो विधानेन तण्डुलगतकर्मत्वस्यानुक्तत्वात्, चैत्रःपच्यत इत्यत्र कर्मणि लकारविधानेन कर्तृत्वस्यानुक्तत्वादुभयत्र द्वितीयातृतीययोरेव विधेयत्वादिति वाच्यम्। प्रतिपदिकार्थाऽपेक्षया कर्मत्वकर्तृत्वयोर्यत्र विशेष्यतयाऽन्वयबोधतात्पर्य्यन्तत्रैव "कर्मणि द्वितीया" "कर्तृकरणयोस्तृतीया" इतिसूत्राभ्यां द्वितीयातृतीययोर्विधानमुक्तप्रयोगयोस्तु कर्मत्वकर्तृत्वयोस्संसर्गतया बोध एव तात्पर्यन्नतु विशेष्यतया। तथाच प्रातिपदिकार्थस्योक्तसम्बन्धेन धात्वर्थेऽन्वयःकुतो नेति प्रश्नाशयेनोक्तप्रयोगयोस्सौष्ठवात्।

विभक्त्यर्थमन्तरा कृत्य तयोरप्यन्वयबोधात्साक्षादिति । निपातातिरिक्तत्वादिविशेषणाद् भूतले न घटः घटो न पट इत्यादौ घटादेर्नञर्थाभावेन, मुखं चन्द्र इवेत्यादौ मुखचन्द्रादीनामिवार्थसादृश्यादिना,न कलञ्जं भक्षयेदित्यादौ नैयायिकमते नञुपस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थाभावेन धात्वर्थभक्षणादेरनुयोगितया,

---

साक्षादन्वयबोधस्याऽव्युत्पन्नत्वादिति ।

निपातविभक्त्यर्थद्वयातिरिक्तनामार्थनिष्ठा या भेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति विशेष्यतासम्बन्धेन नामपदवृत्तिज्ञानजन्योपस्थितिःप्रतिबन्धिकेति कार्यकारणभावम्प्रकल्प्य राजा पुरुष इत्यादौ भेदान्वयस्याऽशक्यत्वमिति ग्रन्थाशयः ।

न कलञ्जम्भक्षयेदिति ।

विषाक्तेनैव बाणेन हतौ यौ मृगपक्षिणौ ।
तयोर्मांसङ्कलञ्जं स्याच्छुष्कमांसमथाऽपि वा । इति कोशः ।

अत्र नञर्थोऽभावस्तत्र लिङर्थस्य बलवदनिष्टाऽननुबन्धित्वविशिष्टेष्टसाधनत्वरूपस्य स्वप्रतियोगिकत्वसम्बन्धेनाऽन्वयस्तस्याभावस्य स्वरूपसम्बन्धेन धात्वर्थभक्षणेऽन्वयः । एवञ्च बलवदनिष्टाऽननुबन्धित्वविशिष्टेष्टसाधनत्वप्रतियोगिकाऽभावविशिष्टं कलञ्जभक्षणमिति बोधः । बलवदनिष्टाऽजनकत्वस्य विशेषणस्य इष्टसाधनत्वविशेष्यस्य चाऽभावप्रयुक्तो विशिष्टाऽभावः । एवञ्च बलवदनिष्टजनकत्वन्नैयायिकमते भक्षणरूपधात्वर्थे प्रतीयते ।

नच बलवदनिष्टाऽननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वज्ञानन्न तद्विषयकप्रवृत्तिम्प्रति तद्विषयकेष्टसाधनत्वप्रकारकज्ञानङ्कारणमिति नियमानुरोधेन कारणम् । विशेष्यविशेषणभावे विनिगमनावैकल्येन गुरुधर्मावच्छिन्नकारणत्वाऽपत्तेः । एवञ्च बलवदनिष्टाननुबन्धित्वज्ञानमिष्टसाधनत्वज्ञानं कृतिसाध्यत्वज्ञानञ्च पार्थक्येन कारणम्परस्परसहकारित्वेन नैकैककारणसत्त्वे कार्याऽपत्तिदोषः । एवञ्च शक्यतावच्छेदकगौरवभयेन कलञ्जभक्षणे कृतिसाध्यत्वेष्टसाधनत्वरूपविध्यर्थसत्त्वान्न तयोर्विध्यर्थत्वं येन नञा तदभावो वक्तुं शक्य इति युक्तिसिद्धव्याख्यानेन च बलवदनिष्टाननुबन्धित्वस्यैव विध्यर्थत्वेन नञा तदभाव एव युक्ततर इति विशिष्टस्य विध्यर्थस्य नञाऽभावो ग्रन्थकृतां कथमिति वाच्यम् ? विशेष्याऽभावप्रयुक्तविशिष्टाऽभावो विशेषणाऽभावप्रयुक्तविशिष्टाऽभाव उभयाऽभावप्रयुक्तविशिष्टाभाव इति नियमस्य सार्वजनीनत्वेन तत्तद्विशिष्टा-

---

विशिष्टाभाव इति—अयमभावस्त्रिविधो भवति, विशेषणाभावविशेष्याभावोभयाभावप्रयुक्तभेदात् । यथा हि अयोध्यास्थे ब्राह्मणे काशीस्थत्वविशिष्टब्राह्मणत्वाभावो हि काशीस्थत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावेन । काशीस्थे शूद्रे काशीस्थत्वविशिष्टब्राह्मणत्वाभावो विशेष्याभावप्रयुक्तः । अयोध्यास्थे पशौ चोभयाभावप्रयुक्त इति रीत्या सर्वत्रैव विशिष्टभावोऽवगन्तव्यः ।

गुरुमते तु विध्यर्थापूर्वांशे विशेषणतयान्वितेन नञुपस्थाप्याभावेन धात्वर्थभक्षणादेः प्रतियोगितयान्वयेऽपि न क्षतिः।

राजपुरुष इत्यादिसमासस्थले तु पुरुषादिपदार्थेन समं राजादिपदार्थस्य न भेदान्वयबोधः किन्तु तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिकराजादिपदोपस्थाप्यराजसम्बन्ध्यादेरभेदान्वयबोध एवेति न दोषः। एवं मुखं चन्द्र इत्यादिरूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशलक्षणया चन्द्रादिसदृशाभेदान्वयबोध एव न तु सादृश्यादिसंबन्धेन चन्द्रादेर्मुखादावन्वय इति न तत्र व्यभिचारः।

---

ऽभावानां बलवदनिष्टानुबन्धित्वाभावरूपत्वेन प्रकृते विरोधाऽभावादेतदुत्तरस्य सामान्यरूपेण पूर्वमेवोक्तत्वात्।

गुरुमते त्विति।

प्रभाकरनामकमीमांसकमत इत्यर्थः। तन्मते धात्वर्थभक्षणस्य स्वप्रतियोगिकत्वसम्बन्धेन नञर्थाऽभावेऽन्वयः, अभावस्य च प्रयोज्यत्वसम्बन्धेन लिङर्थाऽपूर्वेऽन्वयः, तन्मतेऽपूर्वपदेन पुण्यं गृह्यते। एवञ्च कलञ्जभक्षणप्रतियोगिकाभावप्रयोज्यमपूर्वमिति शाब्दबोधः। अस्मिन्मते कलञ्जभक्षणाऽभावजन्यम्पुण्यमेव कलञ्जभक्षणमनिष्टजनकमिति न भवति। नैयायिकमते तु कलञ्जभक्षणमनिष्टजनकम्भवति कलञ्जभक्षणाऽभावःपुण्यजनको न भवतीति मतद्वयवैलक्षण्यम्। विध्यर्थश्चाऽपूर्वम् क्रिया क्षणविनाशिनी न कालान्तरभाविनस्स्वर्गादेस्साधनायोपपद्यते इति कालान्तरस्थायिक्रियातो भिन्नं कार्यमपूर्वं लिङादयो बोधयन्ति कार्याभिधानं कृतिमनभिदधतां लिङादीनान्नोपपद्यतेऽतः कृतिमप्यभिदधति अपूर्वञ्च इति तद्ग्रन्थः। इष्टसाधनत्वन्न लिङर्थः। "अहरहस्सन्ध्यामुपासीत"प्रत्यहं शुचिस्सन्ध्यामुपासीते"त्यादिश्रुतिप्रतिपाद्यनित्यकर्मणःफलजनकत्वाऽभावेन सन्ध्योपासनमिष्टजनकमितिव्यवहाराऽप्रतीतेः। कलञ्जभक्षणप्रतियोगिकाऽभाववदपूर्वमुत्पादयेदिति बोधः।

राजपुरुष इति।

अयमभिप्रायः, पीतमम्बरं यस्येतिविग्रहवाक्यात् यत्सम्बन्धिपीताऽभिन्नाऽम्बरमिति बोधः। पीताम्बर इतिबहुव्रीहिसमासाच्च पीताऽभिन्नाम्बरवानिति बोधः। तथा च समासविग्रहवाक्ययोर्विभिन्नाकारकबोधोदयदर्शनेन समासविग्रहवाक्ययोर्न समा-

---

नित्यकर्मेति—कर्म त्रिविधम् १ नित्यम् २ नैमित्तिकम् ३ काम्यंचेतिकर्मकाण्डोपासकाः। तत्र यस्मिन् कृते किमपि फलन्न अकृते च प्रत्यवायो महान् भवतीत्येतादृशङ्कर्म सन्ध्योपासनादिकन्नित्यम्। द्वितीयं निमित्ताज्जातन्नैमित्तिकन्तत्र न पूर्ववद् वैलक्षण्यम्। किन्तु करणे पुण्यमकरणे पापं यथा राहूपराग (चन्द्रादिग्रहण) स्नानादिकम्। तृतीयं यत्किमपि कमनीयं साफल्यवाञ्छया मनसिकृत्यानुष्ठीयते तत्। यथा पुत्रादिलिप्सया पुत्रेष्टियागादिकम्।

केचित्तु रूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे न लक्षणा किन्तु तत्र मुख्यार्थचन्द्रादेरेवाभेदभ्रमो मुखादौ। मुखं न चन्द्र इत्यादिविशेषदर्शनदशायां च न तत्र शाब्दोऽभेदप्रत्ययः, अपि तु शब्दजन्यविशकलितपदार्थोपस्थितिमूलको मानस एवाहार्य्याभेदभ्रम इत्याहुः।

परे तु तादात्म्यातिरिक्तसंबन्धेन नामार्थयोर्नान्वयबोधः। तादात्म्यं च प्रकृते तद्वृत्तिधर्मवत्वम्। एवं च नीलो घट इत्यादौ स्ववृत्तिनीलत्वादिमत्त्वसम्बन्धेन घटाद्यंशे नीलपदार्थस्यैव मुखं चन्द्र इत्यादौ स्ववृत्त्याह्लादकत्वादिमत्त्वसम्बन्धेन मुखादौ चन्द्रादेरन्वयबोधः, तादृशार्थान्वयबोधेऽपि समानविभक्तिकत्वं तन्त्रमित्यतो नातिप्रसङ्ग वदन्ति।

---

नाकारकानुभवजनकत्वं सार्वत्रिकन्तथा च राजपदस्य राजसम्बन्धिनि लक्षणोपगमेन राजसम्बन्ध्यभिन्नःपुरुष इत्यभेदान्वयबोध एव न भेदान्वय इति न कोऽपि विरोध इति तत्त्वम्।

न च वैयाकरणमतानुसारेण समासे राजपुरुष इत्यादौ विशिष्टशक्तिरेवास्तु राजसम्बन्धिपुरुषरूपार्थे तथा च सम्बन्धिनि लक्षणाश्रयणङ्किमर्थमिति वाच्यम्? "एष वन्ध्यासुतो याति खपुष्पकृतशेखरः। कूर्मक्षीरचये स्नातश्शशशृङ्गधनुर्द्धरः" इत्यादिवाक्ये शशशृङ्गादिपदार्थस्य मिथ्याभूतत्वेन समासप्रातिपदिकसंज्ञयोरसिद्धत्वापत्तेरसत्ख्यातिभूते शशशृङ्गादिपदार्थे शक्त्यसम्भवात्। असत्पदार्थे ज्ञानकरणेन्द्रियव्यापारो न भवतीति सर्वप्रसिद्धो व्यवहारः। विशिष्टशक्त्यभावे तु स्वार्थपर्यवसायिनाम्पदानामाकाङ्क्षावशात्परस्परसम्बन्धरूपव्यपेक्षात्मकसामर्थ्याश्रयणेन नोक्तदोषौ। तथा च न विशिष्टशक्तिरिति वर्णनात्।

वस्तुतस्तु स्वप्नाद्यनुरोधेन बौद्धपदार्थस्यावश्यकत्वेन शशशृङ्गादौ बौद्धशक्तिमादाय विशिष्टशक्तिस्वीकारे क्षतिविरहः। अत एव "अत्यन्ताऽसत्यपि ह्यर्थे ज्ञानं शब्दः करोतिचे"तिहर्य्युक्तिः। असत्ख्यातेरपि आरोपादिना प्रमात्मकत्वेन तत्त्वसम्भवात्।

केचित्त्विति।

आलङ्कारिकमतमाह सादृश्ये लक्षणायां रूपकोपमयोर्भेदो न स्यात्? उपमायामपि चन्द्रसादृश्यस्य विद्यमानत्वात्।

विशकलितेति।

परस्परं सम्बन्धरहिता मुखपदार्थस्य चन्द्रपदार्थस्य चोपस्थितिः। बाधकालीनेच्छाजन्यज्ञानमाहार्यमिति सामान्यरूपेण बाधज्ञानकाले भ्रमो न भवति बाधज्ञानकालेऽपि यो भ्रमो भवति स आहार्यभ्रमः। मानस एवाहार्यभ्रम इति।

परे त्विति तादात्म्येति।

तद्वृत्ति प्रतियोगिवृत्तीति। नीलो घट इत्यत्र स्ववृत्तिनीलत्ववत्त्वमेवात्र तद्वृ-

अथ राजा पुरुष इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथन्न भेदान्वयबोधः, सामग्र्या कार्यजनने उक्तनियमभङ्गरूपायाः प्रयोजनक्षतेरकिंचित्करत्वात्। सामग्रीसत्त्वे अवश्यं कार्यमिति नियमात्। न च तत्र भेदान्वयबोधौपयिकाकाङ्क्षाविरहाच्छाब्दसामग्र्येवासिद्धेति वाच्यम्? समभिव्याहाररूपाकाङ्क्षायास्तत्रापि सत्त्वात्।

---

त्तिधर्मवत्त्वम्। तदेव तादात्म्यरूपसम्बन्धः। नीलोऽपि घट एवेति नीलवृत्ति नीलत्वं घटवृत्ति भवति। नीलत्ववत्त्वं घटे वर्तमानं तेनैव सम्बन्धेन। घटे यथा नीलपदार्थस्याऽभेदान्वय एवमुखञ्चन्द्र इत्यादावपीति।

नन्वेवं नीलस्य घट इत्यादावपि गुणरूपनीलत्वस्य घटे विद्यमानत्वात् तेन सम्बन्धेनाऽभेदान्वयबोधस्स्यादित्याशयेनाह समानविभक्तिकत्वन्तन्त्रमिति। इति वदन्तीति।

अत्रारुचिप्रकारः प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमाविति न्यायेन मुखं चन्द्र इत्यत्र यदि स्ववृत्त्याह्लादकत्वरूपाऽभेदसम्बन्ध एव स्यात् "न पद्मम्मुखमेवेदन्न भृङ्गौ चक्षुषी इमे" मुखन्न चन्द्र इत्यत्र नञा तत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभाव एव प्रत्येतव्यः? प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमत्वात्। एवञ्च पद्मादिसदृशाह्लादजनकमुखे पद्मादिवृत्त्याह्लादजनकत्वं पद्मादिभ्यो भेदश्च कथं सिद्ध्येत् स्ववृत्त्याह्लादकत्वरूपाऽभेदसम्बन्धेन पद्मस्य मुखे विद्यमानत्वात् इत्येवमुक्त्या पूर्वोक्तप्रकार एव ज्यायान्नायमिति गदाधरभट्टाचार्याणामभिप्रायः।

नच सम्बन्धान्तरावच्छिन्नाऽभाव एव बोधविषय इति वाच्यम्? नीलञ्जलम् नीलन्न जलमितिवाक्ययोरेककालावच्छेदेनैवाभ्रान्तानामपि शाब्दबोधापत्तेरित्यलम्। अथ राजापुरुष इति।

अत्र राजपदजन्यराजोपस्थितिः पुरुषपदजन्यपुरुषोपस्थितिश्चास्त्येव, पुरुषे राजसम्बन्धयोग्यताया विद्यमानत्वेन योग्यताज्ञानमप्यस्त्येव, राजा पुरुष इति वाक्यं राजसम्बन्धिपुरुषविषयकशाब्दबोधञ्जनयत्वित्याकारकतात्पर्यज्ञानं विद्यत एव, भेदाऽन्वयसम्पादकसामग्रीसत्त्वे स्वत्वसम्बन्धेन राजवान्पुरुष इत्याकारकशाब्दबोधे निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधोऽव्युत्पन्न इतिनियमभङ्गस्य नैव बाधकत्वम्, तत्तदाव्यहितोत्तरतत्पदत्वरूपाऽसत्तिऽज्ञानमिति सभप्रकारणसत्त्वे भेदान्वयबोधस्स्यादेवेत्याशयेनाशङ्कते अथेति।

ननु समभिव्याहाररूपाकाङ्क्षायाश्शाब्दबोधप्रयोजकत्वे घटः कर्मत्वम् आनयनम् कृतिरित्यादावपि तादृशसामग्रीसत्त्वाद् घटनिष्ठकर्मतानिरूपकानयनमिति शाब्दबोधआपतेदत आनुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वं वाच्यं सा च भेदान्वयबुद्धौ यादृशी सामग्री अपेक्ष्यते न राजापुरुष इत्यादौ तादृशीति नापत्तिरित्याश-

न च तादृशाकाङ्क्षायास्तत्र सत्त्वेऽपि राजादिपदार्थप्रकारकभेदान्वयबोधे राजादिपदार्थप्रकारकराजादिपदाऽव्यवहितोत्तरङसपदत्वादिरूपानुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वात् तदभावादेव न तत्र शाब्दसामग्रीति वाच्यम् ? सम्बन्धादिविशेष्यकराजादिप्रकारकान्वयबोध एव तादृशाकाङ्क्षाज्ञानस्य हेतुतया पुरुषादौ राजादिपदार्थप्रकारकान्वयबोधोत्पत्तौ तादृशाकाङ्क्षाज्ञानरूपकारणविरहस्याकिंचित्करत्वात् ।

अत्र केचित् । नामार्थप्रकारकभेदान्वयबोधं प्रति समानविशेष्यताप्रत्यासत्त्या प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनात् नामार्थप्रकारकभेदान्वयबोधे विशेष्यतया प्रत्ययार्थस्यैव भानं न तु नामार्थान्तरस्य, तत्र विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरसत्त्वात् ।

---

येनाशङ्कते नचेति ।

ङसन्तराज्ञ इत्यानुपूर्व्या एव तादृशान्वयबोधम्प्रति मुख्यकारणत्वादिति हृदयम् ।

ननु राज्ञ इत्याकारकानुपूर्वीज्ञानस्य राजप्रकारकभेदान्वयबुद्धौ कारणत्वस्वीकारे राजानौ राजानमित्यादौ भेदान्वयबुद्धेरिष्टत्वेनानिष्टाऽपत्तेः । नच राजानमित्यानुपूर्वीज्ञानस्यापि पार्थक्येन कारणत्वस्वीकारान्न दोष इति वाच्यम् ? तादृशानुपूर्व्या अभावेऽपि राज्ञा राज्ञीत्यादौ भेदान्वयस्येष्टत्वेनासिद्धियापत्तेः । तथा च स्वत्वसम्बन्धेन राजप्रकारकपुरुषविशेष्यकशाब्दबोधम्प्रति राज्ञ इत्याकारकानुपूर्वीज्ञानस्य कारणत्वम् । एवञ्च तादृशकारणत्वाऽभावात् तदसत्त्वमकिञ्चित्करमिति तत्त्वम् ।

अयमाशयः, निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितस्वत्वत्वावच्छिन्नविशेष्यत्वाऽवच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकबोध एव तादृशानुपूर्वीज्ञानस्य कारणत्वाद्राजा पुरुष इत्यादौ भेदान्वयबोधः कुतो नेति ।

नामार्थप्रकारकभेदान्वयबोधम्प्रति इति ।

निपातातिरिक्तविशेष्यकेत्याशयः, तेन घटो नास्तीत्यादौ विशेष्यतासम्बन्धेन घटप्रकारकबोधस्य नञर्थाऽभावे प्रतीतावपि दोषाऽभाव इति । विशेष्यतासम्बन्ध एव कार्यतावच्छेदक इति बोधनार्थमाह समानेति । नतु नामार्थान्तरस्येति ।

अत्र नामार्थस्येत्येतावन्मात्रोक्तौ नीलो घट इत्यादौ घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताया भानाद्दोष इत्याशयेनाह नामार्थान्तरस्येति । अयमर्थः, पदार्थपदार्थतावच्छेदकयोरेकस्या एव शक्तेर्विद्यमानत्वेन न नामार्थान्तरत्वमिति तात्पर्यात् अत्र केचिदिति ।

नामार्थप्रकारकभेदान्वयविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति समानविशेष्यताप्र-

त्यासत्या प्रत्ययजन्योपस्थितिःकारणमितिकार्यकारणभावकल्पनाद्राजा पुरुष इत्यत्र राजप्रकारकपुरुषविशेष्यकभेदान्वयवारणात्। नामार्थयोस्साक्षाद् भेदेनान्वयो न भवति नामार्थप्रकारकनामार्थविशेष्यकभेदान्वयो न भवतीति सिद्धान्तधारा। राज्ञःपुरुष इत्यादौ तु नामार्थपुरुषेण राजपदार्थस्य न साक्षादन्वयोऽपि तु राजपदार्थस्य निरूपितत्वसम्बन्धेन स्वत्वषष्ठ्यर्थेऽन्वयः, स्वत्वस्य चाश्रयत्वसम्बन्धेन विशेष्यभूतपुरुषेऽन्वयः। तथाच निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपिताश्रयत्वसम्बन्धावच्छिन्नस्वत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकश्शाब्दबोधः। किञ्च निरूपितत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितस्वत्वनिष्ठविशेष्यतासमानाधिकरणप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकश्शाब्दबोध इति। अथवा निरूपितत्वसम्बन्धावच्छिन्ना राजत्वावच्छिन्ना राजनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या स्वत्वत्वावच्छिन्ना स्वत्वनिष्ठा विशेष्यता तादृशविशेष्यत्वाऽभिन्ना या आश्रयत्वसम्बन्धावच्छिन्ना स्वत्वत्वावच्छिन्ना स्वत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या पुरुषत्वावच्छिन्ना पुरुषनिष्ठा विशेष्यता तादृशविशेष्यताकश्शाब्दबोधः। किञ्च निरूपितत्वसम्बन्धावच्छिन्ना राजत्वनिष्ठा या निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना राजनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या स्वत्वनिष्ठासावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना स्वत्वत्वावच्छिन्ना स्वत्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या स्वत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या पुरुषत्वनिष्ठा सावच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता या स्वरूपसम्बन्धावच्छिन्नावच्छेद्यता तादृशावच्छेद्यतावती या पुरुषनिष्ठा विशेष्यता तादृशविशेष्यताकश्शाब्द इति।

किञ्च "जात्याकृतिव्यक्तयः पदार्थ" इतिसूत्रानुरोधेन राजराजत्वसमवायानाम्पुरुषपुरुषत्वसमवायानां स्वत्वस्य चोपस्थित्या सप्तपदार्थास्सम्भाव्यन्ते। तत्र शाब्दबोधप्रकारश्चेत्थम्, समवायत्वनिष्ठावच्छेदकतानिरूपिता या समवायनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती समवायनिष्ठसंसर्गता तन्निरूपिता समवायसम्बन्धावच्छिन्नपुंस्त्वत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना पुंस्त्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता च या समवायसम्बन्धावच्छिन्ना राजत्वनिष्ठा निरवच्छिन्नावच्छेदकता तादृशावच्छेदकतानिरूपितावच्छेद्यतावती या राजत्वनिष्ठाप्रकारता तादृशप्रकारतानिरूपिता या राजनिष्ठा विशेष्यता तादृशविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती या निरूपितत्वसम्बन्धावच्छिन्ना राजत्वावच्छिन्ना राजनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या प्रत्ययार्थस्वत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना स्वत्वनिष्ठा विशेष्यता तादृशविशेष्य-

न च सम्बन्धादेरपि नामार्थतया तत्प्रकारकान्वयबोधे पुरुषादिपदार्थस्य विशेष्यतया भानानुपपत्तिः।

---

तासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृविशेष्यत्वाऽभिन्ना वा या स्वत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या आश्रयत्वसम्बन्धावच्छिन्ना समवायत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती समवायनिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितावच्छेद्यतावती या समवायनिष्ठा संसर्गता तन्निरूपिता या पुरुषत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना पुरुषनिष्ठविशेष्यतानिरूपितपुरुषत्वनिष्ठा प्रकारता तन्निरूपिता या किञ्चित्सम्बन्धनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती अवच्छेदकता तादृशावच्छेदकत्वानिरूपिता पुरुषनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपको बोधो भवति। यथा घटोऽस्तीत्यादौ बोधस्तथाहि, समवायसम्बन्धावच्छिन्नपुंस्त्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना पुंस्त्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती घटनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना घटनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता च या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना अथवा कर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परिच्छिन्नत्वसम्बन्धावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नवर्तमानकालत्वावच्छिन्नवर्तमानकालनिष्ठप्रकारतानिरूपिताऽस्त्यर्थक्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः।

एवञ्च प्रकृते राज्ञ इत्यत्र राजपदेन राजपदार्थोपस्थितिः ङस्प्रत्ययेन स्वत्वोपस्थितिः राजपदार्थस्य स्वत्वपदार्थे भेदलक्षणेन निरूपितत्वसम्बन्धेनान्वयोऽस्ति। नामार्थराजप्रकारकस्वत्वविशेष्यकभेदान्वयबोधम्प्रति प्रत्ययजन्योपस्थितेः कारणत्वम्। एवञ्च राजा पुरुष इत्यत्र प्रातिपदिकार्थे प्रथमाविधानात्प्रत्ययजन्योपस्थित्यभावान्न राजप्रकारकभेदान्वयबोधसम्भवः, नामार्थान्तरे प्रत्ययजन्योपस्थितेरसम्भव इत्याशयेनाह नामार्थेति।

नच सम्बन्धादेरपीति।

अयमभिप्रायः, यदि नामार्थप्रकारकभेदान्वयबोधम्प्रति प्रत्ययजन्योपस्थितेः कारणत्वन्तर्हि राजनिरूपितस्वत्वप्रकारकपुरुषविशेष्यकशाब्दबोधो राज्ञःपुरुष इत्यत्र न स्यात् षष्ठ्यर्थस्वत्वमेव सम्बन्धस्तदपि ङस्प्रत्ययार्थो यथा तथा स्वत्वरूपनाम्नस्सम्बन्धरूपनाम्नश्चार्थो भवत्येव। एवञ्च स्वत्वरूपसम्बन्धस्याऽपि नामार्थत्वेन स्वत्वप्रकारकशाब्दबोधे विशेष्यतासम्बन्धेन पुरुषस्य प्रतीतिर्न स्यात् प्रत्ययजन्योपस्थित्यभावादिति।

तत्तन्नामपदजन्यतत्तन्नामार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति प्रत्ययजन्योपस्थितित्वेन हेतुत्वेऽपि राजसम्बन्धः प्रमेयः राज्ञः पुरुष इत्येतादृशवाक्यद्वयजन्यवाक्यार्थद्वयान्वयबोधे पुरुषस्य राजसम्बन्धविशेष्यतया भानानुपपत्तिरिति वाच्यम् ?

प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतदर्थप्रकारकशाब्दत्वावच्छिन्नं प्रत्येव प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुत्वोपगमात् ।

अथैवमपि यत्र राजा पुरुष इत्यत्र पुरुषपदाधीनपुरुषोपस्थितौ प्रत्ययवशात्कश्चित्प्रत्ययार्थोऽपि विषयीभूतः तत्र प्रत्ययजन्यतथाविधसमूहालम्बनोपस्थितेर्विशेष्यतासम्बन्धेन पुरुषेऽपि सत्त्वात्तस्य राजप्रकारकान्वयबोधे विशेष्यतया भानापत्तिर्दुर्वारैव ।

---

तत्तन्नामपदजन्येति ।

योऽसौ नामार्थप्रकारकशाब्दबोध इष्यते स यदा प्रकारीभूतनामार्थवाचकनामपदजन्योभवति तदा तादृशशाब्दबोधम्प्रत्येव प्रत्ययजन्योपस्थितेः कारणत्वं स्वत्वोपस्थितिर्ङसूपदजन्यैव नतु नामपदजन्येति पुरुषे प्रकारीभूतं यत्स्वत्वन्तस्य तद्वाचकस्वत्वादिनामपदजन्यत्वाऽभावान्नात्र प्रत्ययजन्योपस्थितेःकारणत्वमतःपुरुषस्य प्रत्ययजन्योपस्थितिविषयत्वाऽभावेऽपि विशेष्यतासम्बन्धेन बोधे न क्षतिरित्याशयेनाह तत्तदिति । निवेशेऽपि दोषमाह—राजसम्बन्धेति । अयमभिप्रायः, तत्तन्नामपदजन्येतिनियमस्वीकारेऽपि राजसम्बन्धःप्रमेयः राज्ञःपुरुष इत्याकारको यत्समूहालम्बनात्मकशाब्दस्तत्र पुरुषस्य राजसम्बन्धविशेष्यत्वेन या प्रतीतिरिष्यते सा न स्यात् सम्बन्धपदजन्यत्वङसूपदजन्यत्वयोस्तुल्यत्वात् । सम्बन्धेति नामपदजन्यत्वे सम्बन्धेति नामार्थस्वत्वप्रकारकत्वाच्च । प्रत्ययजन्योपस्थित्यभावेन पुरुषपदार्थस्य विशेष्यतासम्बन्धेन भानन्न स्यादितिपूर्वपक्षिणामाशयः । परिहारन्दर्शयति प्रत्ययाधीनेति । कार्यकारणभावे तन्नामपदजन्यत्वन्न देयम् किन्तु प्रत्ययाधीनतदर्थोपस्थित्यजन्यो यस्तन्नामार्थप्रकारकश्शाब्दबोधः, विशेष्यतासम्बन्धेन तदुत्पत्तौ विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिःकारणम् । एवञ्चोक्तसमूहालम्बनबोधे सम्बन्धरूपनामार्थसत्त्वेऽपि ङस्प्रत्ययाधीनस्वत्वोपस्थितिजन्यत्वस्यैव विद्यमानत्त्वेन कार्यतावच्छेदकानाक्रान्तत्वेन तत्र पुरुषस्य विशेष्यतासम्बन्धेन भाने क्षतिविरहात् ।

किञ्च प्रत्ययाधीनोपस्थितिविषयत्वाऽप्रयोज्यभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावे तात्पर्यम् ।

अथैवमपि यत्र राजेति ।

कार्यतावच्छेदकं विचार्य कारणकोटिविचारम्प्रस्तौति, ननु राजा पुरुष इत्यादौ

न च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासम्बन्धेनोपस्थितेर्हेतुत्वोपगमान्नानुपपत्तिः । तादृशसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यताया नाम्न एव जन्यतावच्छेदकत्वादिति वाच्यम् ? ज्ञानभेदेन विशेष्यताभेदाभावात् ।

---

निरुक्तरीत्या राजप्रकारकभेदान्वयबोधे निवारितेऽपि कदाचिद्राजा पुरुष इत्यत्र पुरुषपदेन पुरुषत्वावच्छिन्नोपस्थितिस्तदुत्तरसुप्रत्ययेनैकत्वोपस्थितिस्तदा पुरुष एकत्वञ्चेति समूहालम्बनात्मिकोपस्थितिरेवञ्च सा यथा पुरुषपदजन्या तथा सुप्रत्ययजन्याऽपि, तादृशप्रत्ययजन्योपस्थितिविषयत्वं यथा प्रत्ययार्थैकत्वस्याऽस्ति तथा पुरुषस्याऽप्यस्त्येवेति प्रकारेण प्रत्ययजन्योपस्थितेर्विशेष्यतासम्बन्धेन पुरुषेऽपि विद्यमानत्वात्तस्य पुरुषस्य राजप्रकारकभेदान्वयबोधे विशेष्यतासम्बन्धेन भानं स्यादेव । राजा पुरुष इत्यत्र राजपदार्थप्रकारकपुरुषविशेष्यकभेदान्वयबोधापत्तिर्दुर्वारैवेत्याशयेनाशङ्कते अर्थं गर्माप यत्र राजा पुरुष इति । भेदान्वयबोधाऽपत्तिन्निवारयति नचेत्यादिग्रन्थेन । इदमाकूतम्, नामार्थप्रकारकभेदान्वयबोधत्वावच्छिन्नम्प्रति प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासम्बन्धेनोपस्थितिः कारणमर्थात् यत्र प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासम्बन्धेन विशेष्यत्वेनाश्रीयमाणपदार्थे प्रत्ययजन्योपस्थितिर्भवति तत्रैव तत्पदार्थविशेष्यककिञ्चिन्नामार्थप्रकारकभेदान्वयबोधो भवतीतिनियमः । प्रत्ययजन्यतावच्छेदकीभूतेत्यस्यार्थस्तु प्रत्ययजन्या या उपस्थितिस्तन्निष्ठा या प्रत्ययजन्यता तदवच्छेदकत्वमत्र विशेष्यनिष्ठविशेष्यतायामस्त्येव । स्वनिरूपितविषयतासम्बन्धेन विशेष्यपदार्थनिष्ठा विशेष्यता चोपस्थितौ विद्यते । एवञ्च शाब्दबोधीयविशेष्यतासम्बन्धेन प्रतीयमाना विशेष्यता स्वनिरूपितविषयितासम्बन्धेनोपस्थिताविति सामानाधिकरण्यसम्बन्धेनोपस्थितिनिष्ठप्रत्ययजन्यताया अवच्छेदिका जातेति । एवञ्च राजा पुरुष इत्यत्र पुरुषोपस्थितिः पुरुषेति नामपदजन्यैव न प्रत्ययजन्येतिपुरुषविषयकोपस्थितौ प्रत्ययजन्यतैव नास्तीति पुरुषनिष्ठा विशेष्यता स्वनिरूपितविषयितासम्बन्धेनोपस्थितौ विद्यमानाऽपि कथम्प्रत्ययजन्यतावच्छेदिका स्यात् नाम्न एव जन्यतावच्छेदकत्वेन प्रवृत्तत्वादिति । पुनः प्रतिवादी परिहरन्नुक्तभेदान्वयबोधमादर्शयति ज्ञानभेदेनेत्यादिग्रन्थेन ।

अयमभिप्रायः, देवदत्ताद्यनेकपुरुषैर्घटे एकस्मिन् ज्ञातेऽपि देवदत्ताद्यनेकपुरुषसमवेतैकघटविषयकज्ञानस्य देवदत्तादिपुरुषभेदेन भेदेऽपि यथा नैव घटभेदो भवति तथा ज्ञानभेदेन घटनिष्ठा या विशेष्यता तस्या अपि भेदो न भवति 'विशेष्यभेदेनैव विशेष्यताया भेद' इतिनियमात् । अयमाशयः, कदाचित् ङसुप्रत्ययेन पुरुषत्वावच्छिन्नोपस्थितिर्लक्षणादिना जाता तत्र प्रत्ययजन्यतावच्छेदकीभूता पुरुषत्वावच्छिन्ना विशेष्यता, सा च समूहालम्बनोपस्थितीयपुरुषत्वावच्छिन्ना विशेष्यता अवच्छेदकैक्यादेकै-

यत्र कुत्रचित्प्रत्ययादेव लक्षणादिना पुरुषाद्युपस्थितिनिरूपितप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतातः पुरुषादिपदजन्यपुरुषाद्युपस्थितिविशेष्यताया अभिन्नतया तावताप्युक्तातिप्रसङ्गवारणासम्भवादिति चेन्न ? स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासम्बन्धेनैवोपस्थितेर्हेतुतयोक्तसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यतायाश्च तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतासामानाधिकरण्यविरहान्नातिप्रसङ्ग इति वदन्ति ।

तदसत् । प्रत्ययत्वस्यानुगताननतिप्रसक्तस्य दुर्वचतया उक्तकार्यकारणभावकल्पनाया असम्भवात् ।

राज्ञसम्बन्धः पुरुष इत्यादौ सम्बन्धादिपदे ङस्पदत्वादिभ्रमदशायां संबन्धादिविशेष्यकराजादिपदार्थप्रकारकान्वयबोधानुपपत्तेः । राज्ञः पुरुष इत्यादौ ङस्पदादिषु संबन्धादिपदत्वभ्रमदशायां सम्बन्धांशे राजादिप्रकारकान्वयबोधापत्तेश्च । न च प्रत्ययत्वेन ज्ञातं यत्पदं तत्पदजन्योपस्थितेः कारणत्वादेतद्दोषद्वयस्य नावकाश इति वाच्यम् ? राज्ञः पुरुष इत्यादौ षष्ठ्यादेः प्रत्ययत्वाद्यनुपस्थितिदशायामपि आनुपूर्वीविशेषप्रकारकज्ञानाधीनतदर्थोपस्थितिसत्त्वे शाब्दबोधोत्पत्त्या प्रत्ययत्वप्रकारकज्ञाननिवेशासंभवात् । इदं पुनरत्र तत्त्वम् । राजा पुरुष इत्यादौ पुरुषादिविशेष्यकराजादिप्रकारकभेदान्वयबोधस्याऽप्रसिद्ध्यैव नापत्तिसंभवः ।

---

वास्ति तन्निरूपकोपस्थितिभेदेऽपि विषयताभेदे मानाऽभावात् । एवञ्च प्रत्ययजन्यतावच्छेदकीभूता पुरुषत्वावच्छिन्ना, तेन सम्बन्धेन प्रत्ययजन्यपूर्वोक्तसमूहालम्बनोपस्थितेः पुरुषे सत्त्वाद्राजभेदान्वयाऽपत्तिदुर्वारैवेति ।

आपत्तिन्निवारयति स्वजनकज्ञानीयेतिग्रन्थेन । अर्थाद्राजा पुरुष इत्यत्र नामार्थप्रकारकनामार्थविशेष्यकभेदान्वयबोधो नैव भविष्यतीत्याशयेनोक्तम्नातीति । नामार्थप्रकारकभेदान्वयबोधम्प्रति स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासम्बन्धेनोपस्थितिः कारणम् । स्वं समूहालम्बनोपस्थितिःतज्जनकं वाच्यतासम्बन्धेन वृत्तिज्ञानं पुरुषः पुरुषपदवान् इति ज्ञानम्प्रत्ययार्थः । उक्तकार्यकारणभावेन पुरुषे प्रत्ययजन्योपस्थितिर्नास्ति नातः पुरुषे राजपदार्थान्वय इति भावः । प्रत्ययत्वस्यानुगताननतिप्रसक्तस्येति ।

नचोक्तरूपेण प्रत्ययत्वाऽज्ञानेऽपि वास्तविकरूपेण प्रत्ययवृत्तिप्रकारता वर्तत एव, तन्निरूपितविशेष्यतासम्बन्धेनेति कथने दोषमाह राजसम्बन्धः पुरुष इत्यादि । अत्र सम्बन्धपदे ङस्त्वभ्रमेऽपि तद्वृत्तिप्रकारतायां प्रत्ययवृत्तित्वाऽभावात् ।

यत्र षष्ठ्यादिविभक्तेरेव स्वारसिकलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिस्तत्र तद्विशेष्यकराजादिपदार्थप्रकारकभेदान्वयबोधः प्रसिद्ध इति चेत्तर्हि ? तादृशबोधे तथाविधप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसङ्कृततत्तद्विभक्तिजन्यपुरुषाद्युपस्थितिघटितसामग्र्या एव तादृशबोधोत्पत्तिनियामकतया तदभावादेव न तदापत्तिः।

अत एव स्वत्वादिसम्बन्धेन राजादिविशिष्टपुरुषादितात्पर्यकतदादिपदघटितात् स सुन्दर इति वाक्यात्पुरुषादिविशेष्यकस्वत्वादिसंसर्गकराजादिप्रकारकशाब्दबोधस्य च प्रसिद्ध्या राजा पुरुषः सुन्दर इत्यादौ पदार्थोपस्थितियोग्यताज्ञानादिबलात्तादृशशाब्दबोधापत्तिरित्यपि निरस्तम्। स सुन्दर इत्यादिवाक्याधीनशाब्दबोधसामग्र्यास्तत्पदत्वाद्यवच्छिन्नविशेष्यकसुन्दरादिपदसमभिव्याहारज्ञानसहकृततदादिपदजन्यतादृशविशिष्टार्थोपस्थितिघटिततया तदभावादेवापत्त्यभावात्।

अथैतादृशरीत्यापत्तिवारणे राज्ञः पुरुष इत्यादौ स्वत्वादिसम्बन्धेन पुरुषादौ राजाद्यन्वयबोधस्वीकारेऽपि क्षतिविरहादुक्तव्युत्पत्तिर्निर्युक्तिका। विभक्तीनां सम्बन्धादिवाचकत्वमपि निर्युक्तिकं, नीलो घट इत्यादौ विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यौचित्यात्।

---

क्वचित्प्रसिद्धस्यैव पदार्थस्याऽऽपत्तिस्सम्भवति अन्यत्र यथा घटपटादेर्नतु शशविषाणादेः। नामार्थप्रकारकनामार्थविशेष्यकभेदान्वयबोधःक्वाऽपि न प्रसिद्धः, नामार्थयोस्साक्षाद्भेदान्वयबोधस्याऽव्युत्पन्नत्वात् नामार्थस्य प्रत्ययार्थेन निपातार्थेन च भेदान्वयबोधस्सर्वप्रसिद्धः। एवञ्च राजपदार्थस्य पुरुषपदार्थेन साकं कथम्भेदान्वय इति तात्पर्य्यम्।

ननु राज्ञ इत्यत्र ङस्विभक्तेरेव स्वारसिकलक्षणया शक्तिभ्रमेण वा यत्र पुरुषोपस्थितिर्जायते तत्र पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधःप्रसिद्ध इति तत्प्रसिद्धेरेव राजा पुरुष इत्यत्राऽऽपत्तिस्स्यादित्याशयेनाह यत्र षष्ठ्यादिविभक्तेरिति।

चेदिति।

अन्वयव्यतिरेकाभ्यामेव कार्यकारणभावोऽवधार्य्यते इतिनियमः। राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधे राज्ञ इत्याकारकप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षासहितङस्विभक्तिजन्यपुरुषोपस्थितिविशिष्टसामग्र्या एवापादकत्वं सम्भवति तदभावान्नापत्तिः, कारणसत्त्व एव कार्यसम्भवात् सामग्र्यनुरोधेनैव शाब्दबोधो नान्यादृश इत्याशयवानाह अत एवेति।

अथेति ।

न हि तत्र तथाविधान्वयबोधोपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादिष्वपि तथाविधान्वयबोधप्रसङ्गः संभवति । तत्स्थलीयसामग्र्याः षष्ठ्यन्तराजपदत्वाद्यवच्छिन्नधर्मिकपुरुषादिपदसमभिव्याहाररूपाकाङ्क्षाज्ञानघटिततया तदभावादेव तत्र तादृशसामग्र्या अभावात् ।

एवं च राजपुरुष इत्यादिसमासे राजादिपदस्य राजसम्बन्ध्यादिलक्षणास्वीकारोऽपि व्यर्थः, तत्र भेदान्वयबोधस्वीकारेऽपि क्षतिविरहात् ।

न च तत्र भेदान्वयबोधाभ्युपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादावपि तादृशान्वयबोधापत्तिरिति वाच्यम् ? तत्स्थलीयशाब्दबोधे राजपदाव्यवहितोत्तरपुरुषादिपदत्वरूपानुपूर्वीविशेषज्ञानस्य हेतुतयाऽसमासस्थले पुरुषादिपदस्य विभक्त्या राजादिपदव्यवहितत्वात्तादृशानुपूर्वीविशेषज्ञानासम्भवेन तत्र तादृशबोधसामग्र्या असिद्धेः ।

न च प्रकृतिप्रत्यययोरानुपूर्वीविशेषरूपस्याकाङ्क्षात्वात्प्रातिपदिकद्वयाव्यवधानघटितोक्तानुपूर्वीविशेषज्ञानस्य हेतुत्वमेव निष्प्रामाणिकमिति वाच्यम् ?

---

यत्र यादृशशाब्दबोधसामग्री तत्र तादृशशाब्दबोधो जायते इतिरीत्येति । उक्तव्युत्पत्तिः—नामार्थप्रकारकभेदान्वयबोधम्प्रति प्रत्ययजन्योपस्थितिःकारणमिति व्युत्पत्तिनिर्युक्तिकैव । स्वाभिप्रायम्प्रकाशयति नहीति ।

एवञ्चेति

यथा राज्ञः पुरुष इत्यत्र भेदान्वयबोधस्तथा राजपुरुष इत्यत्राऽप्यस्तु, भेदान्वयबोधे लक्षणास्वीकारो व्यर्थ इति ।

तत्स्थलीयेति—ङसा व्यवधानादिति ।

न च विभक्तेर्निरर्थकत्वाऽभिधानं कथं घटमित्यादिद्वितीयाद्यन्तमात्रप्रयोगोच्चारणस्थले कर्मत्वं घटीयमितिशाब्दबोधस्येष्टस्याऽसिद्धिः कर्मत्वस्य विशेष्यविषयैव प्रतीतेरतश्च विभक्तेःकर्मत्वादौ शक्तिरावश्यकीति वाच्यम् ? एकविभक्त्यन्तस्थले मानसबोध एवेति सामञ्जस्यात् प्रत्ययानां कर्मत्वादौ शक्तिभ्रमो वा तस्माद् बोध इत्यभिधानाच्च ।

राजपुरुष इत्यत्राकाङ्क्षानुपपत्तिःप्रकारतावादिभिराशङ्क्यते नच प्रकृतीत्यादि । निष्प्रामाणिकमिति । एवञ्च समभिव्याहाररूपाकाङ्क्षैव शाब्दप्रयोजिका सा हि राजपुरुष इत्यादाविव राजा पुरुष इत्यत्राऽप्यस्तीतिभेदान्वयापत्तिरित्याकूतम् ।

भवन्मतेऽपि राजपुरुष इत्यादौ तादृशसामग्रीबलाद्राजपदार्थराजसंबन्धिपुरुषपदार्थयोरभेदान्वयबोधस्तादृशसामग्रीबलाद्राज्ञः पुरुष इत्यादावपि राजादिपदस्य राजसंबन्ध्यादौ लक्षणाग्रहसत्त्वे तादृशाभेदान्वयबोधप्रसङ्गवारणाय तथाविधानुपूर्वीविशेषज्ञानस्य समासजन्यबोधे हेतुताकल्पनस्यावश्यकत्वात् ।

अस्माभिर्भेदान्वयबोध एव तादृशानुपूर्वीविशेषज्ञानस्य हेतुतायाः कल्पनीयत्वात् ।

न चोभयमत एव राजसंबन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहेण राजपुरुष इत्यत्र राजसंबन्धिपुरुषयोरभेदान्वयबोधो भवति ।

इयांस्तु विशेषो यदस्मन्मतेऽसौ समासः षष्ठीतत्पुरुषो भवन्मते कर्मधारय इति । एवं च पुरुषविशेष्यकाभेदसंसर्गकराजसम्बन्धिप्रकारकबोधे राजपदाव्यवहितोत्तरवर्तिपुरुषपदत्वप्रकारकज्ञानत्वेन हेतुत्वमुभयवादिसिद्धमेव, भेदान्वयबोधे तादृशानुपूर्वीज्ञानहेतुताकल्पनमधिकमिति वाच्यम् ?

---

भवन्मतेऽपीति ।

प्रकारतावादिमतेऽपीति । तादृशभेदान्वयबोधेति । राजसम्बन्धी पुरुष इत्यन्वयबोधेत्यर्थः । अस्माभिरिति । संसर्गतावादिभिरित्याशयः । कल्पनीयत्वादिति । एवञ्च प्रकृतिप्रत्ययानुपूर्वीरूपविशेषस्यैव नाकाङ्क्षात्वमपि तु प्रातिपदिकद्वयाऽव्यवधानघटितानुपूर्वीविशेषस्याऽपीत्याशयः ।

पुनःप्रकारतावादिभिराशङ्क्यते नचोभयमत इति ।

अस्मन्मत इति-प्रकारतावादिमिते, भवन्मत इति–संसर्गतावादिमत इति ।

प्रकारतावादिनाम्मते यत्र स्वघटकपदार्थविशेष्यकत्वे सति स्वघटकपदानां स्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थाश्रये लक्षणांविनैव सामानाधिकरण्यन्तत्र कर्मधारयत्वम् । यत्र स्वघटकपदानां स्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थाश्रये लक्षणयैव सामानाधिकरण्यन्तत्र तत्पुरुषत्वम् इति कर्मधारयतत्पुरुषयोर्लक्षणम् । राजपुरुष इत्यत्र यद्यभेदसंसर्गकराजप्रकारकपुरुषविशेष्यकबोधस्तदा कर्मधारयत्वं लक्षणाक्रान्तम् । यदि राजसम्बन्धिप्रकारकाभेदसंसर्गकपुरुषविशेष्यकबोधस्तदा षष्ठीतत्पुरुषत्वं लक्षणाक्रान्तम् । स्व घटकपदार्थविशेष्यकत्वे सतीत्यस्य बहुव्रीहिव्यावृत्तिः फलम् । संसर्गतावादिनाम्मते तु यत्र स्वघटकपदार्थविशेष्यकत्वे सति स्वघटकपदानां शक्तिलक्षणाभ्यां सामानाधिकरण्यन्तत्र कर्मधारयत्त्वम् । यत्र तादृशसामानाधिकरण्यन्नास्ति तत्र समासविशेषे तत्पुरुषत्वमिति तयोर्लक्षणम् । राजा पुरुषः राजसम्बन्धी पुरुष इति वा यद्यभेदसंसर्गको बोधस्तदा कर्मधारयत्वं लक्षणाक्रान्तम् । राजपुरुष इत्यत्र यदि स्वत्वसंसर्गकराजप्रकारको राजवान्पुरुष इति बोधस्तदा षष्ठीतत्पुरुषसमासत्वम् उक्तंलक्षणाक्रान्तम् । एव-

उक्ताभेदान्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायां पर्यायशब्दान्तरघटितानुपूर्वीज्ञानजन्यतथाविधान्वयबोधे व्यभिचारवारणाय तादृशानुपूर्वीज्ञानानन्तर्यस्य कार्यतावच्छेदककोटाववश्यं निवेशनीयतया तत्र विषयनिवेशे प्रयोजनाभावेन तादृशकार्यतावच्छेदकस्यैव भेदान्वयबोधसाधारण्येनानुपूर्वीज्ञानस्य भेदान्वयबोधे हेतुताया अनाधिक्यात्।

एवं तण्डुलं पचतीत्यादावपि पाकादिरूपधात्वर्थे कर्मत्वादिसम्बन्धेन तण्डुलादेरन्वयबोधः स्वीकर्तुमुचितः। कर्मत्वस्य पाकाद्यंशे प्रकारत्वे तत्र तत्र द्वितीयादेः शक्तिकल्पने तादृशवाक्यजन्यशाब्दबोधे कर्मत्वादिसंसर्गस्याधिकस्य विषयताकल्पने च गौरवात्। तण्डुलं पचतीत्यादिवाक्यजन्यशाब्दबोधसामग्रीबलात्तण्डुलः पचतीत्यादावपि तथाविधान्वयबोधापत्तिस्तु न सम्भवति। तादृशान्वयबोधे द्वितीयान्ततण्डुलपदत्वाद्यवच्छिन्नधर्मिकपचतीत्यादिसमभिव्याहारज्ञानस्य हेतुतया तण्डुलः पचतीत्यादौ तादृशसामग्र्या अप्रसिद्धेः।

---

प्रकारेण हि मतद्वयवैलक्षण्यम्।

एवञ्च संसर्गतावादिमते राजपदस्य राजसम्बन्धिनि लक्षणायान्द्वयोः पदयोस्सामानाधिकरण्यात्पुरुषविशेष्यकत्वाच्च कर्मधारयत्वमेवेति। ययोः पदजन्यार्थयोरभेदेनान्वयबोधस्तयोः पदयोरपि सामानाधिकरण्यव्यवहारो भवतीति तत्त्वम्।

नन्वभेदसंसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति राजपुरुष इत्याकारकाकांक्षाज्ञानत्वेन कारणता न सम्भवति नृपपुरुष इत्यादौ तादृशबोधस्य सत्त्वेऽपि आकाङ्क्षाया एव व्यभिचारात्। आकाङ्क्षाज्ञानमात्रमखण्डोपाधिरूपमन्यतमत्वेनाऽपि न कारणत्वम्। नृपराज इत्यानुपूर्वीमच्छब्दानाम्भिन्नत्वात् परस्परजन्यबोधवारणायाऽव्यवहितोत्तरत्वनिवेशेन गुरुभूततादृशशाब्दबोधस्यावच्छेदकत्वकल्पनाऽनर्हेति विशिष्टाशयेनाह उक्ताऽभेदान्वयबोध इत्यादीति। स्वत्वसंसर्गकराजप्रकारकः अभेदसंसर्गकराजसम्बन्धिप्रकारकश्च पुरुषविशेष्यको यो हि शाब्दबोधस्तत्रोभयत्राव्यवहितोत्तरत्वस्य विद्यमानत्वेन कार्यकारणताभेदो नास्तीत्यभिप्रायेणाह अनाधिक्यादिति। निरुक्तरीत्या राज्ञः पुरुष इत्यत्र यथा स्वत्वस्य संसर्गत्वन्तथैव रीत्या तण्डुलम्पचतीत्यत्राऽपि द्वितीयार्थकर्मत्वस्य संसर्गत्वमेव न प्रकारत्वमित्याशयेनाह एवमिति। कर्मत्वसम्बन्धेन पाकादावन्वय इति मानसी वृत्तिः।

द्वितीयार्थःकर्मत्वम् कर्मत्वे द्वितीयाविभक्तेश्शक्तिकल्पनम् प्रकारभूतकर्मत्वादेरपि सम्बन्धस्याश्रयत्वादिरूपस्य कल्पनेति विशिष्टं गौरवम्। संसर्गतावादे तु अनुपस्थितस्य कर्मत्वस्य संसर्गतया भानमाश्रयत्वादिकल्पनञ्च न कर्तव्यम्भवतीति महालाघवमिति। नच तया सामग्र्या तण्डुलः पचतीत्यत्राऽपि विशेषाऽऽपत्तिरिति वाच्यम्। पाके तण्डुलान्वयबोधम्प्रति द्वितीयान्ततण्डुलपदसमभिव्याहारस्य कारणत्वाङ्गीकारात्।

एवं पचति चैत्र इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्रेऽन्वयबोधस्वीकार उचितः। अन्यथोक्तरीत्या गौरवात् तत्र तादृशान्वयबोधस्वीकारे तत्स्थलीयसामग्रीबलात्, पच्यते चैत्रः, पाकश्चैत्र, इत्यादौ तथाविधान्वयबोधापत्तेरप्युक्तरीत्या वारणसंभवादिति ।

मैवम् । राज्ञः पुरुष इत्यादौ षष्ठ्यादेः स्वत्वादिवाचकत्वमावश्यकम् । अन्यथा पुरुषो न राज्ञ इत्यादौ पुरुषे राजस्वत्वाद्यभावबोधानुपपत्तेः ।

---

एवमिति ।

नैयायिकमते प्रथमान्तार्थमुख्यविशेष्यको बोधस्तथाच कृतिसम्बन्धेन पाकपदार्थस्य चैत्रादावन्वय इति कृतेस्संसर्गत्वमेवोचितन्नतु वाच्यत्वेन प्रकारत्वम्। अन्यथा द्वितीयार्थकर्मत्ववदिहापि कृतेराश्रयत्वसम्बन्धकल्पनेन गौरवमतः कृतेरपि संसर्गत्वमेवेति । पाकश्चैत्र इत्यादौ तु नापत्तिस्तत्र तिबन्तपचतिपदसमभिव्याहारस्य कारणत्वात् तथाच संसर्गतावाद एव लघीयानिति प्रश्नाशयः ।

अत्र तदादिपदस्य वृत्तिग्रहमुख्यविशेष्यपरामर्शकत्वमत एव "नहि प्रजावतीयम्मे त्वं तस्मै देहि कम्बलमि"त्यत्र तत्पदेन प्रजावतीशब्दार्थभ्रातृजायाघटकभ्रातृपरामर्शाभावस्सङ्गच्छते । तथाच

दृश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ।
चैत्रो ग्रामगतस्तत्र मैत्रः किं क्रियतेऽधुना ॥

इतिश्लोकघटकराजमातङ्गा इत्यादौ राजादिपदस्य राजसम्बन्ध्यादौ लक्षणास्वीकारे तत्पदेन वृत्तिग्रहमुख्यविशेष्यत्वाऽभावेन राजादिपदार्थपरामर्शो न स्यादतोऽपि संसर्गतावाद एव गरीयान् । इति केचित्तन्न ? "दाणश्च सा चेच्चतुर्थ्यर्थे" इतिपाणिनिसूत्रे तत्पदेन "समस्तृतीयायुक्तादि"तिसूत्रीयाऽप्रधानतृतीयापदार्थपरामर्शदर्शनेन सर्वनाम्नामुत्सर्गतो बुद्धिस्थमात्रपरामर्शकत्वमेव नतु वृत्तिग्रहमुख्यविशेष्यपरामर्शकत्वम् । एवञ्च पूर्वोक्तलाघवप्रकार एव मूलग्रन्थं संयोजयतीति शुक्लाः ।

मैवमिति ।

संसर्गतावादिमतं लाघवानुगृहीतमपि प्रतिक्षिपन् प्रकारतावादिमतम्परिष्कुरुते मैवमिति । अयमाशयः, अनुपस्थितस्य प्रकारतया भानन्न भवतीति तदुपस्थितये षष्ठ्यास्स्वत्वे शक्तिकल्पनं कर्त्तव्यं येन स्वत्वस्य प्रकारत्वमिष्टं सिद्ध्येत् । नन्वितः पूर्वग्रन्थविषयदर्शनेन सम्बन्धत्वेनैव वाच्यतोपलभ्यते नतु स्वत्वेनात्र स्थले तु स्वत्वेनैवेति कथं ग्रन्थसङ्गतिरिति चेन्न ? सम्बन्धत्वेन तत्तद्रूपेण चेति "षष्ठी शेष" इतिसूत्रभाष्योक्त्या सामान्यरूपेण विशेषरूपेण च षष्ठ्यर्थप्रतीतिर्यद्यपि तथापि लोकार्थबोधनाय विशेषरूपेण स्वत्वादिनैव वाच्यता युक्ता । सामान्यरूपेण सम्बन्धत्वेन वाच्यत्वे तु राज्ञो नेदं स्वमिति निश्चयम्प्रति राज्ञः पुरुष इति सामान्यसम्बन्धवत्ताबुद्धेः प्रतिबन्धकत्वानापत्तेः । विशेषरूपेण स्वत्वाऽभाववत्तानिश्चयम्प्रति सामान्यसम्बन्धवत्ता-

न हि तत्र स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाव एव प्रतीयते न तु राजस्वत्वाद्यभाव इति संभवति स्वत्वादिसंबन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः। अत एव स्वामित्वादिकं परित्यज्य स्वत्वादेः षष्ठ्यर्थत्वं नवीनाः स्वीकुर्वन्ति ! स्वामित्वादेः षष्ठ्यर्थत्वे तस्य निरूपकतासंबन्धेन पुरुषांशेऽन्वयसंभवेऽपि तादृशसंबन्धस्य वृत्त्यनियामकतया संसर्गाभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नाभावस्य नञा प्रत्यायनासंभवात्।

आश्रयतासंबन्धाद्यवच्छिन्नाभावबोधस्यैतादृशसमभिव्याहारस्थलेऽभ्युपगमे चैत्रादिसंबन्धिनि धनेऽपि आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकचैत्रवृत्तिस्वामित्वाभावसत्त्वान्नेदं चैत्रस्येति प्रयोगापत्तिः। न च नञ्समभिव्याहारस्थलानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वेऽपि राज्ञः पुरुष इत्यादौ षष्ठ्याद्यर्थस्य संसर्गमर्यादया भानमुचितम्। तस्य प्रकारत्वोपगमे तत्संबन्धस्याधिकस्य भानकल्पनेन गौरवात्। नञ्समभिव्याहारस्यैव तत्प्रकारकबोधनियामकत्वाभ्युपगमेन सामग्रीबलात् तत्प्रकारकबोधस्य तदसमभिव्याहारस्थलेऽसंभवादिति वाच्यम्?

---

बुद्धेरप्रतिबन्धकत्वात्। किञ्च राज्ञो नेदं स्वमिति निश्चयस्य राज्ञः पुरुष इतिसामान्यनिश्चयम्प्रति प्रतिबन्धकत्वानापत्तेः।

अथ स्वत्वस्य संसर्गत्वेन प्रतीतौ नञ्घटितवाक्ये राजस्वत्वप्रतियोगिकाऽभावबोधो न स्यात्। स्वत्वस्य संसर्गत्वेन प्रतियोगितावच्छेदकसम्बन्धत्वेनैव प्रतीतेः। प्रकारतापक्षे तु स्वत्वस्याऽपि पदार्थत्वेन स्वत्वप्रतियोगिकाऽभावप्रतीतिर्ज्यायस्येवेति। नहीति। समवायस्वरूपकालिकदिक्कृतविशेषणताश्रयत्वसंयोगादीनामेव वृत्तिनियामकसम्बन्धानां प्रतियोगितावच्छेदकसम्बन्धत्वं भवति। येन सम्बन्धेन यः पदार्थो यत्र वर्त्तते तेनैव सम्बन्धेन तत्रैव तत्पदार्थस्याऽभावोऽपि नञा प्रत्येतव्यः। प्रकृते स्वत्वसम्बन्धेन राज्ञः पुरुषे नहि स्थितिर्भवति येन स्वत्वस्य वृत्तिनियामकत्वं स्यात्। तथा च वृत्तिनियामकत्वाऽभावेन स्वत्वस्य प्रतियोगितावच्छेदकत्वाऽभावात् स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्य क्वचिदपि प्रसिद्धत्वाऽभावाच्च।

एवञ्च स्वत्वस्य प्रकारत्वमेव नैव संसर्गत्वम्। आश्रयतासम्बन्धेति। आश्रयत्वप्रतीतिनियामकस्वरूपसमवायादिसम्बन्धेत्याशयः। वस्तुतस्तु वह्निमानयन्देश इति निश्चयदशायां समवायसम्बन्धेन संयोगसम्बन्धेन वा अत्र वह्निरितिसंशयदर्शनात् आश्रयत्वं सम्बन्धविशेष इति शास्त्रयुक्तिसिद्धान्तः। अत एवेति। वृत्त्यनियामकसम्बन्धानां प्रतियोगितावच्छेदकसम्बन्धत्वाऽभावादेवेत्यर्थः।

एवं सति नञ्पदं विना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यस्य विशेषणतया भानं तत्र नञ्समभिव्याहारे तत्र धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति सर्वजनानुभवस्यापलापापत्तेः । राज्ञः पुरुष इत्यादिवाक्यजन्याप्रामाण्यज्ञानानास्कन्दितबोधदशायां पुरुषो न राज्ञ इत्यादिवाक्यादपि शाब्दबोधापत्तेः, स्वत्वाभावबुद्धौ स्वत्वसंसर्गकज्ञानस्य विरोधित्वे मानाभावात् ।

---

यदि स्वामित्वं षष्ठ्यर्थस्तदा स्वामित्वनिरूपकत्वेन पुरुषेण निरूपकतासम्बन्धेन स्वामित्वान्वयेऽपि राजनिष्ठस्वामित्ववान्पुरुष इति रीत्या पुरुषविशेष्यकबोधसम्भवेऽपि निरूपकतासम्बन्धस्य वृत्तिनियामकत्वाऽभावेन संसर्गाऽभावप्रतियोगितावच्छेदकसम्बन्धत्वाऽसम्बन्धात् पुरुषो न राज्ञ इत्यत्र नञ्पदेन निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वामित्वाऽभावप्रतीतिर्न सम्भवत्यतो न स्वामित्वस्य षष्ठ्यर्थतेति । स्वत्वस्य षष्ठ्यर्थत्वस्वीकारे त आश्रयतासम्बन्धेन स्वत्वम्पुरुषेऽस्तीति आश्रयत्वसम्बन्धश्च वृत्तिनियामक एवेति पुरुषे आश्रयत्वसम्बन्धेन राजस्वत्वाभावस्सम्भवत्येवेति आश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजनिरूपितस्वत्वाऽभाववान्पुरुष इति बोधसम्भवादित्याशयः । वृत्त्यनियामकस्य तादात्म्यसम्बन्धस्यान्योन्याभावप्रतियोगितावच्छेदकत्वं सम्भवतीत्याशयेनाह संसर्गोऽभावप्रतियोगितानवच्छेदकत्वादिति । संसर्गमर्यादया भानमुचितमिति । यदि नञ्समभिव्याहारे षष्ठ्यास्स्वत्ववाचकत्वस्वीकृतिस्तदा नञ्पदाऽभावेऽपि षष्ठ्यर्थस्वत्वस्य प्रकारतयैव भानम्प्रपद्येत । लाघवानुरोधेनोपस्थितार्थस्य यदि संसर्गतया प्रतीतिस्स्यात्तर्हि पूर्वोक्तरीत्या राजपुरुष इत्यादावपि पुरुषपदोत्तरवर्त्तमानसुप्रत्ययार्थैकत्वसंसर्गांशे राजादिपदार्थान्वयाऽनन्तरं स्वसमानाधिकरणराजस्वत्वसम्बन्धेनैकत्वप्रकारकपुरुषविशेष्यकशाब्दबोधापत्तिरनिष्टा स्यात् । तथाच यत्पदार्थविषयकशाब्दबोधे यद्यदर्थोपस्थितेर्नैयत्यन्तत्तदर्थोपस्थितेस्संसर्गमर्यादया भानन्नैव भवतीति नियमोऽङ्गीकर्त्तव्यः । एवञ्च षष्ठ्योपस्थितस्वत्वस्य न कथमपि ससर्गतया भानं युक्तमिति तत्त्वानुसन्धानम् । अत्र प्रसङ्गे परिहरति एवं सतीति । नञ्पदं विनेत्यस्य फलन्तु चैत्रे पचत्यपि न पचतीतिप्रयोगवारणमेव । उक्तनियमाऽभावे समवायेन चैत्रे पाकानुकूलकृतिमत्त्वे सत्यपि संयोगसम्बन्धेन पाकानुकूलकृत्यभावबोधापत्तिः । नन्वेवमपि नञ्पदं विना भूतले घट इत्यत्र भूतलनिरूपितवृत्तित्ववान् घट इत्येव बोधः परन्तु स्वरूपसम्बन्धेन घटरूपधर्मिणि वृत्तित्वस्य सप्तम्यर्थस्य न विशेषणत्वम् । नञ्समभिव्याहारे तु स्वरूपसम्बन्धावच्छिन्नवृत्तित्वावच्छिन्नाऽभाव एवास्तु कथं घटाऽभावो भूतलवृत्तिरिति चेन्न ? नञ्समभिव्याहारे यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नप्रकारताप्रयोजकत्वं सम्भवति तस्य नञ्समभिव्याहारे नञर्थाऽभावनिष्ठविशेष्यतानिरूपितप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन यदि सञ्जिघृक्षितस्तदा तत्सम्बन्धावच्छिन्नतद्धर्माव-

वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि राज्ञः पुरुष इत्यादौ राजस्वत्वादेः प्रकारताऽभ्युपगमः समुचितः। अन्यथा तादृशसमभिव्याहारज्ञानघटितशाब्दसामग्रीकाले राजस्वत्वाभाववान् पुरुषः सुन्दर इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणाय तत्र

---

च्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजक एव भवतीत्यर्थः। तथाच भूतलवृत्तिता न तादृशप्रकारताप्रयोजकत्वेनेष्टेति तत्त्वम्। राज्ञःपुरुष इत्यत्र स्वत्वस्य संसर्गतया भानम्पुरुषो न राज्ञ इत्यत्र च स्वत्वस्य प्रकारतया भानमिति वैषम्यन्न सम्भवति ? प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ भवत इति न्यायात्। उदाहरणम् घटवद्भूतलमित्यत्र धर्मिणि भूतले संयोगसम्बन्धेन घटपदार्थस्य विशेषणतया भानमत एव भूतलन्न घटवदित्यत्र तस्मिन्नेव धर्मिणि भूतले संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाऽभावप्रतीतिरुपपद्यते तद्वत् राज्ञः पुरुष इत्यत्र यदि नञोऽसत्त्वे स्वत्वसम्बन्धेनैव पुरुषपदार्थे राजपदार्थस्य विशेषणतया प्रतीतिस्स्यात्तर्हि विनिगमनाविरहेण "यश्चोभयोस्सम' इति न्यायेन च नञ्सत्त्वे पुरुषो न राज्ञ इत्यत्रापि स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रतियोगिताकाभावस्यैव पुरुषपदार्थे प्रतीतिरनिष्टापतेस्सा च नैव युक्ता, स्वत्वस्य वृत्त्यनियामकत्वेन प्रतियोगितावच्छेदकत्वाऽसम्भवात्। किञ्चोक्तवाक्ययोर्वैषम्ये दूषणान्तरमाह समानप्रकारकसमानसंसर्गकज्ञानस्यैव विरोधित्वमितिनियमोऽत एव घटवद्भूतलम् पटाऽभाववद्भूतलमितिवाक्ययोर्न विरोधः परस्परं विभिन्नविषयत्वात्। एवञ्च संससर्गतावादिमते राज्ञः पुरुष इत्यत्र स्वत्वसम्बन्धेन राजवान् पुरुष इत्येव स्वत्वसंसर्गको बोधः। पुरुषो न राज्ञ इत्यत्र राजस्वत्वाऽभाववान्पुरुष इति स्वत्वप्रकारकबोध इति समानप्रकारकसमानसंसर्गकज्ञानस्यैव विरोधित्वनियमेन राज्ञःपुरुष इति बोधकालेऽपि पुरुषो नं न राज्ञ इति वाक्याच्छाब्दापत्तेरनिवार्य्यत्वात्।

एवं हि विशिष्टनियमःप्रतिबध्यप्रतिबन्धकभावीयः पूर्वोक्तः, तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिलौकिकसन्निकर्षाजन्यदोषविशेषाजन्याऽनाहार्यबुद्धित्वावच्छिन्नम्प्रति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशाल्यनाहार्य्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वेन प्रतिबन्धकतेति। अत एव संयोगेन वह्निमान्पर्वत इतिनिश्चयम्प्रति समवायेन वह्न्यभाववान्पर्वत इतिनिश्चयस्य न प्रतिबन्धकत्वम्। तथा च प्रकृते स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकनिश्चयस्य राजस्वत्वाऽभाववान्पुरुष इतिज्ञानम्प्रति न प्रतिबन्धकत्वमिति स्वच्छतात्पर्य्यम्। वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वकल्पे दूषणप्रदर्शनपूर्वकं स्वत्वस्य प्रकारत्वम्प्रवर्ण्य प्रतियोगितावच्छेदकत्वकल्पेऽपि दूषणपुञ्जम्प्रदर्शयति वृत्त्यनियामकसम्बन्ध-

तादृशसामग्र्याः प्रतिबन्धकताकल्पनाधिक्ये गौरवात् । अस्मन्मते तादृशसमभिव्याहारघटितसामग्र्या राजस्वत्वाभाववान् पुरुष इत्यादिबाधाभावघटिततया तत्सत्त्वे विशेष्यतावच्छेदकादिप्रकारकनिश्चयरूपकारणविरहादेव तथाविधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यसम्भवेन तादृशसामग्र्यास्तत्र प्रतिबन्धकत्वस्याकल्पनात् ।

---

स्येति । अयम्भावः, यथा दण्डाद् घटस्तथा गगनन्न पारिमाण्डल्यादितिवाक्यप्रामाणिकत्वं सार्वजनीनम् । तत्र दण्डजन्यो यथा घटस्तथा पारिमाण्डल्यजन्यो नाकाश इत्येवम्बोधो नैव स्यात् "पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्पारिमाण्डल्यमणुपरिमाणं कारणत्वन्तद्भिन्नानामेव" तथाचाणुपरिमाणरूपपारिमाण्डल्यस्य कारणत्वाऽभावेन तन्निष्ठजनकतानिरूपितजन्यत्वस्याऽप्रसिद्धत्वेनोक्तवाक्यस्याऽप्रामाणिकत्वभीत्या जन्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकपारिमाण्डल्याऽभाववद् गगनमितिबोधापादनम् । तथाच प्रकृते वृत्त्यनियामकस्य जन्यत्वसम्बन्धस्य यथा प्रतियोगितावच्छेदकत्वन्तथा विनिगमनाविरहेण सम्बन्धान्तरस्य वृत्त्यनियामकस्याऽपि प्रतियोगितावच्छेदकत्वं सुदृढम् । द्रव्यं गच्छति नाऽभावमित्यादिवाक्यसिद्धये वृत्त्यनियामकसम्बन्धस्याऽप्यभावप्रतियोगितावच्छेदकत्वमिति विचारो द्वितीयायां स्फुटीकरिष्ये । किञ्च कुण्डलादिस्वामिन्यपि कुण्डलाऽसंयुक्ते कुण्डली देवदत्त इति भवत्यपि तु न कुण्डली देवदत्त इत्येव । तत्र संयोगसम्बन्धस्य वृत्त्यनियामकत्वेन कुण्डली न देवदत्त इत्यस्य कथङ्कारं सिद्धिरतो वृत्त्यनियामकस्याऽप्यभावप्रतियोगितावच्छेदकत्वमित्यपि केषाञ्चिन्महानुभावानामनुभवः ।

अथ प्रकृतग्रन्थाशयः, स्वत्वस्य वृत्त्यनियामकस्याऽभावप्रतियोगितावच्छेदकत्वस्वीकारेऽपि स्वस्य प्रकारत्वमेव युक्तन्तु संसर्गत्वम् । तथाहि, विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दबोधसामग्र्याःप्रतिबन्धकत्वमिति नियम उभयवादिसम्मतः । विषयैक्ये बाध्यबाधकभावो भवति नतु विषयभेदे । बाधाऽभावो योग्यता राज्ञः पुरुषः राजस्वत्वाऽभाववान्पुरुषस्सुन्दर इतिज्ञानयोःपरस्परं विभिन्नविषयत्वमस्ति राजस्वत्वाऽभावविशिष्टे पुरुषे सुन्दरत्ववैशिष्ट्यम् । विशिष्टवैशिष्ट्यावगाहि राजस्वत्वाऽभाववान्पुरुषस्सुन्दर इति प्रत्यक्षम् । एवञ्च राज्ञःपुरुष इतिशाब्दबोधसामग्रीकाले राजस्वत्वाऽभाववान्पुरुषस्सुन्दर इत्येवम्विधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षन्नेष्यते परन्तु संसर्गतावादिमते राज्ञःपुरुष इत्यत्र स्वत्वसम्बन्धेन राजवान्पुरुष इत्येव शाब्दबोधःराजस्वत्वाऽभाववान्पुरुषस्सुन्दर इतिप्रत्यक्षञ्च । सामग्रीद्वयसम्पत्तौ राज्ञःपुरुष इत्यत्रत्यशाब्दबोधसामग्र्यास्संसर्गतावादिमते प्रतिबन्धकत्वकल्पनेन गौरवम् । प्रकारतावादिमते तु राज्ञः पुरुष इतिशाब्दबोधसामग्र्यास्तादृशराजस्वत्वाऽभाववान्पुरुष इतिबाधाऽभावघटितत्वेन शाब्दबोधकाले प्रत्यक्षसामग्र्याश्चैव नास्तीति कथम्प्रतिव-

अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते निर्वाहः। अन्यत्रान्यविधप्रत्यक्षेच्छानामुत्तेजकतया तादृशेच्छायामसत्यां चोपदर्शितविशिष्टवैशिष्ट्यबोधत्वप्रकारेच्छाबलादुपदर्शितविशिष्टवैशिष्ट्यबोधोपपत्तये अन्यादृशविषयतायाः एव प्रतिबध्यतावच्छेदकत्वोपगमावश्यकत्वात्।

न च स्वत्वादेः प्रकारतामतेऽपि स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टपुरुषादवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवम्। तत्संसर्गतामते तादृशसामग्र्याः स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया तत्सत्त्वे कारणविरहादेव तथाविधप्रत्यक्षवारणसंभवादिति वाच्यम्?

---

ध्यप्रतिबन्धकभाव इति लाघवम्। अतस्स्वत्वस्य प्रकारतयैव भानमिति प्रकारतावादिमतज्ज्यायस्तरमिति।

ननु विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याःप्रतिबन्धकत्वमितिनियमे किम्प्रमाणम्फलञ्चेति प्रश्नः? प्रत्यक्षत्वशाब्दबोधत्वयोस्साङ्कर्य्यभीत्या प्रत्यक्षशाब्दबोधोभयसामग्रीसम्पत्तावपि समूहालम्बनन्न भवति तथा ज्ञानेच्छादीनामेककालावच्छेदेनाऽसम्भवादेककालावच्छेदेन ज्ञानद्वयन्न सम्भवति। एकज्ञानस्य प्रतिबध्यत्वं यदि मन्यते यथा प्रत्यक्षसामग्री शाब्दबोधम्प्रतिबध्नातीति कथ्यते चेत्तर्हि अखिलशाब्दसामग्रीकाले मानसप्रत्यक्षसामग्र्या योग्यताज्ञानादेस्सत्त्वेन शाब्दबोधत्वावच्छिन्नमेवोच्छिन्नं स्यात्तथा च शाब्दसामग्र्या एव प्राबल्येन प्रत्यक्षप्रतिबन्धकत्वमिति 'विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याःप्रतिबन्धकत्वमि''ति सिद्धो नियमस्सर्वैर्व्यवहृतश्च फलञ्च स्फुटतरमेव।

अन्यादृशप्रत्यक्षेति।

अयमभिप्रायः, राज्ञःपुरुष इत्याकारकशाब्दबोधसामग्रीसत्त्वे घटप्रत्यक्षसामग्रीसत्त्वे यदि घटप्रत्यक्षेच्छा जायते तदा घटप्रत्यक्षम्भवत्येव। शाब्दबोधस्तु नैव भवति किन्तु घटप्रत्यक्षमेव। पटादिप्रत्यक्षन्तु नैव भवति। एवञ्च घटप्रत्यक्षेच्छाविरहविशिष्टशाब्दबोधसामग्र्याःपटप्रत्यक्षम्प्रति प्रतिबन्धकत्वम्। पटप्रत्यक्षस्य च प्रतिबध्यत्वम्। एवञ्च पृथगेव विशिष्य कार्यकारणभावोऽङ्गीकार्य्यः।

राजस्वत्वाऽभाववान्पुरुषस्सुन्दर इत्याकारकप्रत्यक्षेच्छाविरहविशिष्टशाब्दबोधसामग्र्या एतत्प्रतिबध्यत्वम्। एवञ्च पृथगेव प्रतिबध्यप्रतिबन्धकभावाऽपत्तिसत्त्वेन संसर्गतावादिनाम्मते गौरवन्दुर्वारमेव।

अग्रे प्रकारतावादिमते संसर्गतावादी प्रतिवन्दिभावेन दोषं समुद्घाटयति न च स्वत्वादेःप्रकारतामतेऽपीति। पराऽभिमतसमाधिसमावेयमुत्तरम्प्रतिवन्दिरिति हेतुलक्षणम्। अयमाशयः, यथा संसर्गतावादिमते राजस्वत्वाऽभाववान्पुरुषस्सुन्दर इत्ये-

मन्मते तादृशप्रत्यक्षं प्रति तथाविधसामग्र्याः प्रतिबन्धकताधिक्येऽपि निरूपितत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टस्वत्वादिवैशिष्ट्यबोधे तथाविधसामाग्र्याः प्रतिबन्धकत्वाऽकल्पनेन तदंशे साम्यात्। तथाच पूर्वोक्तराजस्वत्वाभाववान् पुरुषः सुन्दरः इत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षं प्रति राज्ञः पुरुष इत्यादिसामग्र्याः प्रतिबन्धकत्वकल्पनं संसर्गतावादिनां मतेऽधिकमिति।

न च स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकं प्रति तादृशसामग्रीप्रतिबन्धकतायां विभक्तिजन्यस्वत्वाद्युपस्थितिनिवेशाधिक्येन राजस्वत्वाभाववान्पुरुष इत्यादिबाधाद्यभावनिवेशाधिक्येन च गौरवम्।

---

वम्विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षम्प्रति राज्ञःपुरुष इतिशाब्दसामग्र्याःपृथक् प्रतिबन्धत्वकल्पने गौरवन्तथैव प्रकारतावादिनोऽपि मते स्वत्वसम्बन्धेन राजाऽभाववान्पुरुषस्सुन्दर इति प्रत्यक्षम्प्रत्यपि राज्ञःपुरुष इत्येवम्विधशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनाऽपत्तौ गौरवं सममेव। संसर्गतावादिनस्तु न गौरवं राज्ञःपुरुष इत्यत्राऽपि स्वत्वसम्बन्धेन राजवान्पुरुष इत्येव बोधस्साम्प्रदायिकस्तथाचैतच्छाब्दम्प्रति स्वत्वसम्बन्धेन राजाऽभाववान् पुरुष इत्येव बाधः बाधाऽभावो योग्यता, बोधसामग्री च सदा बाधाऽभावघटिता सती तिष्ठति। राज्ञःपुरुष इतिशाब्दबोधसामग्र्याश्च स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाऽभावघटितत्वेन कारणाऽभावादेव न प्रतिबन्धकत्वम्। प्रकारतावादिमते तु प्रतिबन्धकत्वकल्पनेन साम्यमेव कथं संसर्गतावादिमते गौरवमिति वाच्यम्? एवं सन्देहे प्रकारतावादी प्रत्युत्तरम्प्रवक्ति मन्मत इति। निरूपितत्वसम्बन्धेन राजाऽभाववत्स्वत्वम्प्रमेयमिति निरूपितत्वसम्बन्धेन राजाभावविशिष्टे स्वत्वे प्रमेयत्ववैशिष्ट्यावगाहिप्रत्यक्षम्प्रति राज्ञःपुरुष इतिशाब्दसामग्र्यास्संसर्गतावादिमते प्रतिबन्धकत्वकल्पनेन गौरवम्। प्रकारतावादिनान्तु न गौरवन्निरूपितत्वसम्बन्धेन राजाऽभाववत्स्वत्वमिति ज्ञानस्यैव बाधत्वेन तदघटितत्वान्न प्रतिबन्धत्वकल्पनम्। संसर्गतावादिनां तु स्यादेवेति तत्त्वम्।

प्रकारतामते संसर्गतावादी पुनरपि गौरवम्प्रकाशयति नच स्वत्वादेःप्रकारतामते इति।

स्वत्वस्य प्रकारत्वस्वीकारेऽनुपस्थितपदार्थस्य प्रकारत्वाऽसम्भवात् ङस्पदेनैव स्वत्वोपस्थितिरेवञ्च विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याःप्रतिबन्धकत्वमिति नियमानुरोधेन शाब्दसामग्र्याःप्रतिबन्धकत्वं सर्वसम्मतमिति शाब्दसामग्रीघटकानां सर्वेषामेव पदार्थानाम् प्रतिबन्धकत्वं समायाति। अर्थाद्राजपदजन्यराजोपस्थितिङस्पदजन्यस्वत्वोपस्थितिपुरुषपदजन्यपुरुषोपस्थितिसमुदायस्य प्रतिबन्धकत्वम्प्राप्नोति। एवम्बाधाऽभावरूपयोग्यताज्ञानस्य हि शाब्दसामग्रीघटकत्वेन निरू-

अस्मन्मते तादृशोपस्थितितथाविधबाधाभावादीनां तथाविधवाक्यजन्यशाब्दबोधं प्रत्यहेतुतया तादृशवाक्यघटितसामग्रीप्रतिबन्धकतायां तेषामनिवेशादिति वाच्यम्? भवन्मतेऽपि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इत्यादिनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्यजन्यशाब्दधीविरोधितया तादृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवेशनस्याधिक्येन लाघवानवकाशात्। मन्मते राजस्वत्वाभाववान् पुरुष इत्यादिबाधकाभावनिवेशेनैव तादृशनिश्चयकाले प्रत्यक्षाभ्युपपत्तेस्तदभावानिवेशात्।

---

पितत्वसम्बन्धेन राजाऽभाववत्स्वत्वमित्येवंविधो यो बाधस्तदभावज्ञानस्याऽपि प्रतिबन्धकत्वम्। आश्रयतासम्बन्धेन राजस्वत्वाऽभाववान्पुरुष इत्येवंविधो यो बाधस्तदभावज्ञानस्याऽपि प्रतिबन्धकत्वं लभ्यत इति उपस्थितित्रयस्य बाधाऽभावद्वयस्य च प्रतिबन्धकत्वं प्राप्तं मिलित्वा पञ्चानां पदार्थानां प्रकारतावादिमते प्रतिबन्धकत्वं प्राप्नोतीति गौरवानुसन्धानम्।

प्रकारतावादिमते पञ्चानाम्पदार्थानाम्प्रत्यक्षप्रतिबन्धकत्वं संसर्गतावादिमते तु द्विविधोपस्थितेरेकविधबाधाऽभावस्य च प्रतिबन्धकत्वेन त्रयाणामेव पदार्थानाम्प्रतिबन्धकत्वं प्राप्नोतीति तत्त्वविमर्शः। संसर्गतावादी स्वकीयमते लाघवं स्पष्टयति अस्मन्मत इति।

राज्ञः पुरुष इत्यादौ प्रकारतावादिनाम्मते स्वत्वं षष्ठ्यर्थः, राजनिरूपितं यत् स्वत्वं तादृशस्वत्ववान् पुरुष इति बोधो जायते। संसर्गतावादिनान्नये तु न स्वत्वं षष्ठ्यर्थः किन्तु संसर्गः। स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकबोधसम्पत्तिः। तत्र बाधादिमहागौरवभीत्या संसर्गतावाद एव युज्यते तथा हि, अत्र मिथिलादेशालङ्कारभूता विद्वज्जनमुकुटायमानाः श्रीबच्चाझामहोदयास्तु प्रकारतापक्षे राजस्वत्वाभाववान् पुरुषः १ राजस्वत्वव्यापकाभाववान् पुरुषः २ राजस्वत्ववदवृत्तिमान् पुरुषः ३ स्वत्वाभाववान् पुरुषः ४ स्वत्वव्यापकाभाववान् पुरुषः ५ स्वत्ववदवृत्तिमान् पुरुषः ६ निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वम् ७ राजव्यापकाभाववत्स्वत्वम् ८ राजवदवृत्तिमत्स्वत्वञ्च ९ इति नवविधबाधा जायन्ते। तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिव तद्व्यापकाभाववत्तानिश्चयस्य तद्वदवृत्तिधर्मवत्तानिश्चयस्य तदसमानाधिकरणधर्मवत्तानिश्चयस्य तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयस्य तद्व्यापकतावच्छेदकतया गृहीतधर्मावच्छिन्नाभाववत्तानिश्चयत्वेन च प्रतिबन्धकत्वात्। संसर्गतावादिनां मते च स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुषः १ राजव्यापकाभाववान् पुरुषः २ राजवदवृत्तिमान् पुरुषः इति बाधत्रयमेव। एवञ्च प्रकारतावादिनां मते नवविध-

बाधधियामभावा अपि नवेति । एवम् उक्तनवविधबाधव्याप्यसंसर्गतावादिमतसिद्धै-कैकबाधविषयकाणां राजस्वत्वाभावव्याप्यराजाभाववान् पुरुषः, राजस्वत्वव्यापकाभाव-व्याप्यराजाभाववान् पुरुषः, राजस्वत्ववदवृत्तिव्याप्यराजाभाववान् पुरुषः इत्यादिनिश्च-यानां सप्तविंशतिविधानामभावाः सप्तविंशतिसंख्याकाः ।

एवं संसर्गतावादिमतसिद्धेषु त्रिषु बाधेषु मध्ये द्वयोर्द्वयोर्विशेष्यविशेषणभावे वि-निगमनाविरहेण एकबाधविशिष्टापरबाधे प्रकारतावादिमतसिद्धबाधनवकान्तर्गतैकैकबा-धव्याप्यत्वमवगाहमानानां राजस्वत्वाभावव्याप्यराजाभावविशिष्टराजव्यापकाभाववान् पुरुषः १ राजस्वत्वाभावव्याप्यराजव्यापकाभावविशिष्टराजाभाववान् पुरुषः २ राज-स्वत्वाभावव्याप्यराजव्यापकाभावविशिष्टराजवदवृत्तिमान् पुरुषः ३ राजस्वत्वाभावव्या-प्यराजवदवृत्तिविशिष्टराजव्यापकाभाववान् पुरुषः ४ राजस्वत्वाभावव्याप्यराजाभाववि-शिष्टराजवदवृत्तिमान् पुरुषः ५ राजस्वत्वाभावव्याप्यराजवदवृत्तिविशिष्टराजाभाववान् पुरुषः ६इति रीत्या चतुष्पञ्चाशद्विधबाधनिश्चयानामभावाश्चतुष्पञ्चाशत्सङ्ख्याकाः ५४ शाब्दसामग्रीकोटौ प्रवेश्याः ।

एवं संसर्गतामतोक्तानां त्रयाणां परस्परविशेष्यविशेषणभावे विनिगमनाविरहेण एकैकबाधविशिष्टापरबाधविशिष्टापरबाधे प्रकारतावादिमतसिद्धबाधनवकान्तर्गतैकैकबा-धव्याप्यत्वमवगाहमानानां राजस्वत्वाभावव्याप्यराजाभावविशिष्टराजव्यापकाभावविशिष्ट-राजस्वत्ववदवृत्तिमान् पुरुषः राजस्वत्वाभावव्याप्यराजस्वत्ववदवृत्तिविशिष्टराजव्यापका-भावविशिष्टराजाभाववान् पुरुषः इत्यादिनिश्चयानामभावाश्चतुष्पञ्चाशत्सङ्ख्याकाः उ-क्तवाक्यघटितसामग्रीकोटौ निवेशनीयाः ।

सर्वेषामेव सङ्कलने च प्रकारतावादिमते १४४ चतुश्चत्वारिंशदधिकशतसङ्ख्या-कानामभावानां शाब्दसामग्रीकोटौ प्रवेशः पर्यवसन्न इति प्राहुः ।

स्वत्वस्य प्रकारतया संसर्गतया वा भानमितिविचारे प्रचलिते केचिद्विशिष्टाः ।

प्रकारतावादे राज्ञः पुरुष इत्यत्र राजपदार्थोपस्थितिस्वत्वपदार्थोपस्थितिपुरुषपदा-र्थोपस्थितीनान्तदनुकूलयोग्यताज्ञानाकांक्षाज्ञानतात्पर्यज्ञानाऽऽसत्तिज्ञानानाम्बाधनिर्णयाऽ-भावद्वयस्य च प्रवेशे नवकारणानां शाब्दबोधसामग्र्याम्प्रवेशः । तत्र विशेष्यविशेषण-भावे विनिगमनावैकल्येन कार्यकाले ह्येतत्कारणज्ञानानन्तरमेतत्कारणज्ञानमेतत्कारणं गृहीत्वैतत्कारणज्ञानमित्येवम्प्रकारे प्रचलिते त्वपरिमितकार्यकारणभावापत्तिः ।

संसर्गतावादे तु राजपदार्थोपस्थितिपुरुषपदार्थोपस्थितियोग्यताकांक्षासत्तितात्प-र्याणामेकविधबाधनिश्चयाऽभावस्य च प्रवेशे सप्तकारणानां शाब्दबोधसामग्र्यां प्रवेशा-स्तत्र विनिगमनावैकल्येन विशेष्यविशेषणभाववैपरीत्ये तु मूलभित्तिमारभ्य कार्यकारण-भावविचारे प्रकारतावादाऽपेक्षयाऽतीव संसर्गतावादे लाघवम् ।

किञ्चैतद्विडम्बनाऽपेक्षया शाब्दबोधे कियदुपस्थितीनां कारणत्वमिति प्रश्ने प्रका-रतावादे ह्युपस्थितित्रयं संसर्गतावादे ह्युपस्थितिद्वयमित्युपस्थितिविचारकाण्डे प्रकारता-

यत्तु राज्ञः पुरुष इत्यादौ राजस्वत्ववान् पुरुष इत्याद्यन्वयबोधोपगमे राजकीयं स्वत्वं राजस्वत्ववान् पुरुष इत्याकारकबुद्धिविधानुमितेरेव ।

---

वाद एव गौरवम् । कारणसामग्रीत्वञ्च कारणकूटत्वम् । कूटत्वञ्च एकविशिष्टाऽपरत्वरूपम् । किन्तु संसर्गतावादे राज्ञः पुरुष इत्यत्र शेषत्वाऽभावेन षष्ठीविभक्तिरेव न सिद्ध्येत् । यद्यपि कृष्णम्भट्टयां षष्ठ्या द्योतकत्वन्निरर्थकत्वं वेति प्रतिपादितमस्ति तथापि "षष्ठी शेष" इति सूत्रप्रवृत्त्यभावेनाभीष्टश्शाब्दबोध एव न स्यात् । तथाचोपस्थित्यादिगौरवेऽपि प्रकारतावादपक्ष एव योग्य इति षष्ठीविधानसिद्धिरिति सरयूपारीणशुक्लाः ।

राज्ञः पुरुष इति ।

अत्र कुशाग्रबुद्धयः

संसर्गतावादिनिकाये स्वत्वसम्बन्धेन राजविशिष्टः पुरुष इत्याकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाऽभावव्याप्यस्वत्वसामान्याऽभाववान् पुरुष इति निश्चयस्य तदभावव्याप्यवत्तानिश्चयरीत्या प्रतिबन्धकत्वापत्तिः । किञ्च स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः इति शाब्दबुद्धित्वावच्छिन्नम्प्रति स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाऽभावव्याप्यराजस्वत्वाभाववान् पुरुष इति निश्चयस्य प्रतिबन्धकत्वन्दुर्वारम् । किञ्च स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाऽभावव्याप्यं यत् निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाऽभाववत्स्वत्वं तद्विशिष्टः पुरुष इति निश्चयस्यापि तदभावव्याप्यवत्तारीत्या प्रतिबन्धकानन्त्यमापद्येत । तत्तत्प्रतिबन्धकाऽभावमात्रस्य शाब्दसामग्रीघटकत्वेन विभिन्नविषयकप्रत्यक्षसहस्रत्वावच्छिन्नम्प्रति प्रतिबन्धकत्वेऽनन्तानन्तगौरवम् । स्वत्वं षष्ठ्यर्थ इति प्रकारतावादिनिकाये तु राजस्वत्वाऽभावव्याप्यराजाऽभाववान्पुरुष इत्येकविधनिश्चयस्यैव प्रतिबन्धकत्वन्तत्प्रतिबन्धकाऽभावरीत्या तत्तदभावस्यैव कारणत्वमिति नियमः । विभिन्नविषयकप्रत्यक्षसामग्र्याम्प्रवेशोऽपि गौरवमिति महल्लाघवम् ।

किञ्च प्रकारतावादेऽवच्छेदकताधिक्यगौरवञ्च । तथा हि, स्वाऽभावाधिकरणनिरूपितवृत्तित्वाऽभावस्यैव व्याप्यत्वेन तद्वत्तानिश्चयस्य राजत्वनिष्ठाऽवच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नराजनिष्ठाऽवच्छेदकतानिरूपितस्वत्वत्वनिष्ठाऽवच्छेदकतानिरूपितस्वत्वनिष्ठप्रतियोगिताकाऽभावो नास्तीति सार्वजनीनव्यवहारसिद्धतालद्वयावलीढावच्छेदकतासाध्याऽभावाधिकरणनिरूपितवृत्तित्वन्नास्तीति प्रतीतिसिद्धाऽभावावगाहिनिश्चयस्य कतिपयांशे तालत्रयावलीढावच्छेदकताघटितप्रतियोगिताकाऽभावविषयकतया तन्निश्चयनिष्ठप्रतिबन्धकतायाः तादृशनिश्चयाऽभावनिष्ठसामग्रीविधया कारणत्वेऽधिकावच्छेदकत्वम् । तत्तद्विषयानुरोधेन प्रतिबन्धकत्वकारणत्वयोश्च कल्पनेन महागौरवप्रयास इत्याहुः ।

पुनरपि वक्ष्यमाणप्रकारेण संसर्गतामतं खण्डयितुम्प्रयतते शर्द्दवति । यथा

तदतिरिक्ताविषयकत्वेन तादृशानुमितिं प्रति प्रत्येकं तादृशवाक्यघटित-सामग्र्याः प्रतिबन्धकत्वद्वयम्।

अस्मन्मते च तादृशानुमित्योस्तथाविधवाक्यजन्याद्राजकीयः पुरुष इत्येतादृशबोधादतिरिक्तविषयकतया तत्र तादृशसामग्र्याः प्रतिबन्धकत्व-कल्पनं नास्ति, तथाविधानुमितिस्तथाविधशाब्दसामग्र्योश्च सत्त्योरनुमितेरे-वोत्पत्तेः, अपि तु राजकीयः पुरुष इत्याकारकस्वत्वसंसर्गकैकविधा-नुमितिं प्रत्येव तादृशसामग्र्याः प्रतिबन्धकत्वमेकं कल्पनीयमिति लाघवमिति।

तदप्यकिञ्चित्करम्। भवन्मते यत्र यादृशानुमितिः स्वीक्रियते अस्मन्मते-ऽपि तत्र तादृशानुमितेः स्वीकरणीयतयानुमितौ शाब्दसामग्र्याः प्रतिबन्धक-त्वसाम्याद्, उपदर्शितस्थले भवद्भिरनुमितिः स्वीक्रियते अस्माभिरपि स्वी-क्रियते, कुतः प्रतिबन्धकताद्वयकल्पनमिति,

भवतापि तादृशशाब्दं प्रति तादृशानुमितिद्वयसामग्रीद्वयस्य प्रतिबन्धक-ताया वाच्यतया साम्याच्च। एवं राजपुरुष इत्यादिसमासवाक्यात्स्वत्व-संसर्गकशाब्दबोधस्वीकारे तादृशशाब्दबोधसामग्र्याः स्वत्वसंसर्गेण राजवि-शिष्टपुरुषतात्पर्यज्ञानादिघटिताया भिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्ध-कत्वाधिक्येन गौरवात्। तत्र राजसंबन्धिप्रकारकाभेदान्वयबोधस्वीकार एवोचितः। न च भवन्मतेऽपि तादृशाभेदान्वयबोधसामग्र्याः प्रतिबन्धक-ताधिक्येन गौरवमिति वाच्यम्?

राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसम्ब-

---

विभिन्नविषयकप्रत्यक्षम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वन्तथा समनाविषयकानुमि-तिम्प्रत्यपि शाब्दसामग्र्याः प्रतिबन्धकत्वमिति नियमः। इतोऽन्यत्सुगमम्।

तदतिरिक्ताविषयेति—राजस्वत्ववान् पुरुष इतिशाब्दबोधनिरूपितविषय-तावदतिरिक्ताऽविषयेति फलितम्। प्रतिबध्यताभेदेन प्रतिबन्धकभेदादाह प्रतिबन्ध-कताद्वयमिति। अत्र समानविषयकत्वन्तदीयविषयतावदतिरिक्ताऽविषयकत्वम्बोध्यम्। समानविषयकानुमितित्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम्। विभिन्न-विषयकशाब्दम्प्रति तदनुमितिसामग्र्याः प्रतिबन्धकत्वम्।

तदप्यकिञ्चित्करमिति।

प्रतिबध्यप्रतिबन्धकभावे साम्यमेवेत्याशयः।

भवताऽपीति—पूर्वोक्तवाक्ये यथा प्रकारतावादिनामुक्तानुमितिद्वयम्प्रति पूर्वो-क्तशाब्दसामग्र्याः प्रतिबन्धकत्वं सयुक्तिकन्तथा संसर्गतावादिनां स्वत्वसंसर्गकराज-प्रकारकपुरुषविशेष्यकशाब्दबोधम्प्रति पूर्वोक्तानुमितिद्वयसामग्रीद्वयस्य प्रतिबन्धकत्वेन कल्पनं सममेवेति तात्पर्य्यम्। उभयमतसिद्धत्वादिति। तथाच स्वत्वसंसर्गकरा-

न्धेन राजसम्बन्धिविशिष्टपुरुषे तात्पर्यग्रहसत्त्वे भवन्मतेऽपि कर्मधारयत्वेनाभिमतात्तथाविधसमासवाक्यात्तादृशशाब्दबोधस्वीकारस्यावश्यकतया तादृशसामग्रीप्रतिबन्धकतायाः उभयमतसिद्धत्वात् ।

यत्तु दधि पश्य इत्यादौ लुप्तद्वितीयाविभक्तिस्मरणेन दधिकर्मकदर्शनबोधवद्राजपुरुष इत्यादावपि लुप्तषष्ठीविभक्तिस्मरणेन राजसम्बन्धप्रकारकभेदान्वयबोधनिर्वाहे राजसम्बन्धिनि निरूढलक्षणां स्वीकृत्याभेदान्वयबोधोपगमो निरर्थकः । न च षष्ठीतत्पुरुषादिस्थलेऽपि लुप्तविभक्तिस्मरण एव चेदन्वयबोधस्तदा ऋद्धस्य राजमातङ्गा इत्यादिप्रयोगापत्तिस्तत्र मातङ्गादौ राजादीनामन्वयबाधोपपत्तये राजादिपदोत्तरषष्ठ्यादिविभक्त्यनुसन्धानस्यावश्यकत्वेन समानविभक्तिकतया राजादौ ऋद्धादिपदार्थस्याभेदान्वयबोधसम्भवादिति वाच्यम् ?

यतस्तत्र ऋद्धराजादीनामभेदान्वयबोधानुपपत्त्या नाभियुक्तानामप्रयोगः, अपि तु समासाघटकपदसापेक्षतया राजपदस्यासामर्थ्यातिदेशात्समासासाधुत्वेन । तत्सापेक्षत्वं च तदर्थान्वितस्वार्थपरत्वं, स्वार्थश्च स्वीयवृत्तिग्रहविशेष्यः ।

अत एव शरैः शातितपत्रश्चैत्रस्य दासभार्येत्यादौ न समस्य-

---

जप्रकारकपुरुषविशेष्यकशाब्दबोधसामग्र्याःसंसर्गतावादिनाम्मते प्रतिबन्धकत्वमधिकमेवेति प्रकारतावादिमतमेव युक्ततरमिति तत्त्वम् । न च प्रकारतापक्षे लाघवेऽपि

चैत्रो ग्रामगतस्तत्र मैत्रः किं क्रियतेऽधुना ।
दृश्येते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ॥

इति पद्येषु तत्पदेनेष्टपरामर्शो न स्यादिति वाच्यम् ? समासस्थले तत्पदस्य लक्ष्यार्थघटकविभक्त्यर्थविशेषणीभूतार्थपरामर्शकत्वमिति व्युत्पत्त्यन्तरेण निर्वाहात् । किञ्च "दाणश्च सा चेच्चतुर्थ्यर्थे" इति सूत्रे तत्पदेनाऽप्रधानतृतीयापरामर्शात्सर्वनाम्नामुत्सर्गतो बुद्धिस्थमात्रपरामर्शकत्वन्न तु प्रधानाऽप्रधाननियम इति विधानाच्च ।

किञ्च भाट्टरहस्यादिग्रन्थे खण्डदेवादिमीमांसकैरपि प्रकारतापक्षस्यैव स्वीकृतत्वाच्च । संसर्गतावादिनश्च जगदीशतर्कालङ्कारन्यायकौस्तुभकारादय एव, ते च लाघवाननुयायित्वेन पराभूता इति । तस्मात्प्रकारतापक्ष एव युक्त इति सोपानः । प्रकारतापक्षे नवविधो बाधस्संसर्गतापक्षे त्रिविधो बाध इति मैथिलकल्पनायान्तु संसर्गतावादिन एव विजयन्ते ।

पुनः परिहाराय संसर्गतावादिवचनमनुवदति यत्त्विति । तच्चाऽसदित्यनेन सम्बद्धम् । अतिदेशादिति । सापेक्षमसमर्थवदिति भाष्यादित्याशयः ।

अतएवेति । तदर्थान्वितस्वीयवृत्तिग्रहमुख्यविशेष्यपरत्वस्य तत्सापेक्षत्वात्मक-

मानशालितदाद्यपदादेः सापेक्षता । तदर्थैकदेशशातनदासत्वादावेव शरकरणकत्वचैत्रनिरूपितत्वादीनामन्वयात् । तदर्थान्वितेत्यत्राभेदान्वयो वा निवेशनीय इति ।

तदसत् । स्वारसिकलक्षणाग्रहस्थलानुरोधेन तादृशसमभिव्याहारज्ञानादेस्तथाविधबोधजनकतायाः क्लृप्तत्वात्तत्र निरूढलक्षणास्वीकारे गौरवाभावात् । यत्र राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहस्तत्र तादृशबोधस्योभयमतसिद्धतया तादृशसमभिव्याहारज्ञानस्य राजसम्बन्ध्यभिन्नपुरुषबोधे कारणतायाः क्लृप्तत्वात्, तयैव निर्वाहेण सर्वत्र लुप्तविभक्तिस्मरणकल्पने मानाभावात् ।

न च स्वारसिकलक्षणाग्रहस्थले तत्र तादृशान्वयबोधस्योभयवादिसिद्धत्वेऽपि निरूढलक्षणामते सम्बन्धितात्पर्यस्यानादित्वकल्पनागौरवम् । अनादितात्पर्यविषयोभूतार्थनिष्ठलक्षणाया एव निरूढलक्षणात्वादिति वाच्यम् ? राजपुरुष इत्यादिवाक्यजन्यशाब्दबोधात्पूर्वं नियमतो लुप्तविभक्तिस्मरणकल्पनापेक्षया तात्पर्यस्यानादित्वकल्पनायां गौरवविरहादिति । न चैवं दधि पश्यतीत्यादावपि दध्यादिपदस्य दधिकर्मकादौ लक्षणां स्वीकृत्य धात्वर्थेन समं तस्याभेदान्वयबोधोपपादनसम्भवात्तत्रापि लुप्तविभक्तिस्मरणकल्पनमनुचितमिति वाच्यम् ? दध्यादिपदस्य दधिकर्मकादौ लक्षणाग्रहदशायामपि तस्य द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायां दधिकर्मकः पश्यति, दधिकर्मकेण पश्यतीत्यादाविव उक्तस्थलेऽपि दधिकर्मकदर्शनान्वयबोधानुदयात् ।

भवन्मते दधिकर्मकः पश्यतीत्यत्र दधि पश्यतीतिस्थलीयदधिपदोत्तरपश्यतिपदत्वरूपाकांक्षाज्ञानादिघटितसामग्रीसत्त्वाद्दधिकर्मकदर्शना-

---

त्वादेवेतिफलाद् अभेदान्वयो वा निवेशनीय इति । अभेदेन तदर्थान्वितस्वार्थकत्वमेव हि तत्सापेक्षत्वम् । तथा च वृत्तिग्रहमुख्यविशेष्यत्वरूपं सापेक्षत्वन्नैव वर्णनीयम् ? प्रयोजनाऽभावात् । तथा च स्वीयवृत्त्युपस्थाप्यत्वमेव तदित्याकूतम् ।

तादृशसमभिव्याहारज्ञानादेरिति । राजपुरुष इत्येवंविधसमभिव्याहारज्ञानादेरित्याशयः ।

कल्पनायां गौरवविरहादिति । यदि लुप्तविभक्तिस्मरणस्य हेतुत्वन्तदा तस्य राजपुरुष इति वाक्यजन्यबोधात्पूर्वं सर्वत्रैव स्थितिर्युक्तैव स्यात् । तथैव विभिन्नविषयकप्रत्यक्षप्रतिबन्धकतायामपि लुप्तविभक्तिस्मरणसामग्र्या अपि कारणत्वापत्तावतिगौरवम् । अनादित्वज्ञानस्य कारणत्वाभावेन शाब्दबोधात्पूर्वंन्न तदपेक्षेति न गौरवम् ।

भवन्मते इति । दधिकर्मके लक्षणास्वीकारमत इति । अन्वयस्याऽपत्तेरिति ।

न्वयस्यापत्तेर्द्वितीयान्तदध्यादिपदत्वावच्छिन्नधर्मिकताहशधात्वादिसमभिव्याहारज्ञानस्य ताहशान्वयबोधे हेतुताया आवश्यकत्वात्। दधि पश्यतीत्यादौ लुप्तद्वितीयानुसन्धानस्यावश्यकत्वात्। राजसम्बन्धिपुरुषाद्यन्वयबोधे च राजाव्यवहितोत्तरपुरुषादित्वप्रकारकज्ञानस्य हेतुतायाः स्वारसिकलक्षणाग्रहस्थलानुरोधेनावश्यकल्पनीयतया राजपुरुष इत्यादौ राजादिपदस्य तृतीयाद्यन्तत्वभ्रमदशायां राजसम्बन्धिपुरुषाद्यन्वयबोधापत्त्यसम्भवात्। तृतीयादिविभक्त्या व्यवधानात्। दधि पश्यतीत्यादौ दधिपदाव्यवहितोत्तरत्वप्रकारकधातुपदज्ञानस्य हेतुताया अक्लृप्तत्वात्। पश्यति दधि, पश्यति चैत्रो दधि, इत्यादावपि दधिकर्मकदर्शनान्वयबोधात् ताहशज्ञानहेतुताया अशक्यकल्पनीयत्वाच्चेति।

तण्डुलं पचतीत्यादौ तण्डुलादिपदस्यैव तण्डुलादिकर्मके लक्षणा, विभक्तिस्तु साधुत्वार्था, एवं राज्ञः पुरुष इत्यादावपि राजादिपदस्य सम्बन्ध्यादौ लक्षणा, विभक्तिः साधुत्वार्था। तत्तद्विभक्त्यन्तसमभिव्याहारस्य तत्तल्लाक्षणिकार्थबोधनियामकत्वान्नातिप्रसङ्गः। विभक्तेरेव प्रकृत्यर्थविशेषितस्वार्थे लक्षणेति तु न संभवति?

विभक्तेः कुत्रापि शक्तेरक्लृप्ततया तत्र शक्यसम्बन्धरूपलक्षणाया असंभवात्। तण्डुलः प्रमेय इत्यादौ विभक्त्यर्थामिश्रितस्यैव प्रकृत्यर्थस्य भानात्। प्रकृतिशक्तेः स्वार्थे क्लृप्ततया तत्र लक्षणासम्भवादिति तु चिन्तनीयम्।

राजादिपदस्य राजसम्बन्ध्यादौ शक्तत्वभ्रमदशामिव तदर्थलक्षणाग्रहदशायामपि राजसम्वन्धिनः पुरुष इत्यादाविव राजसम्वन्धि सम्बन्धी पुरुष इत्याद्यन्वयबोधस्य सर्वजनानुभवसिद्धत्वात्। पचति चैत्र-

---

न्वयबोधस्यापत्तेरिति भावः। तृतीयान्तत्वभ्रमे दोषवारणाय द्वितीयेतरविभक्त्यन्तज्ञानस्य प्रतिबन्धकत्वे त्वतिगौरवमापद्येत।

तण्डुलं पचतीत्यादावि्ति—इत आरभ्य इति तु चिन्तनीयमिति प्राक् प्रक्नग्रन्थः। विभक्तेः कुत्राऽपि शक्तेरिति—न चैकत्वद्वित्वादौ कर्तृत्वकर्मत्वादौ च शक्तिरस्त्येव स्वादिविभक्तेः।

एवन्तण्डुलः प्रमेय इत्यत्रोक्तरीतिरपि न युक्ता? तत्रैकत्वशक्तिमत्यास्सुविभक्तेस्तण्डुले जहत्स्वार्थलक्षणासम्भव इति वाच्यम्? राजपुरुष इत्यादौ राजादिपदोत्तरविभक्तिज्ञानाऽभावेऽपि शाब्दबोधस्यानुभवसिद्धत्वात् प्रकृत्यर्थशक्तेरेव युक्तियुक्तत्वात्।

सर्वजनानुभवसिद्धत्वात् इति—तथा च विभक्तिशक्तिं विनोक्तबोधानुपपत्त्यां विभक्तिशक्तिर्युक्तैवेति।

इत्यादावपि कृतिसम्बन्धेन पाकादेश्चैत्राद्यंशे विशेषणत्वोपगमे चैत्रो न पचतीत्यादावन्वयबोधानुपपत्तिर्द्रष्टव्या, कृतिसम्बन्धस्यापि वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिकाभावस्याप्रसिद्ध्या तद्बोधनासम्भवात्।

अथैवमपि चैत्रो जानातीत्यादौ चैत्राद्यंशे ज्ञानादेराश्रयतासम्बन्धेनान्वयबोधोपगमे क्षतिविरहः। आश्रयतासम्बन्धस्याभावप्रतियोगितावच्छेदकतया न जानाति चैत्र इत्यादावाश्रयतासम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाद्यभावस्यैव भानसम्भवात्। तथा च तत्राख्यातस्याश्रयत्वार्थकत्वं निर्युक्तिकम्। न च धात्वर्थज्ञानादेराश्रयतासम्बन्धेन चैत्रादिरूपप्रातिपदिकार्थे साक्षात्प्रकारकत्वोपगमे ज्ञानं चैत्र इत्यादावपि तथान्वयबोधापत्तिरिति वाच्यम्? तादृशान्वयबोधे आख्यातान्तधातुसमभिव्याहारज्ञानस्य हेतुत्वात्। अवतोप्याश्रयताप्रकारकबोधे तादृशसमभिव्याहारज्ञानस्य हेतुताया आवश्यकत्वात्। यत्तु पचति चैत्र इत्यादौ पाककृतिमांश्चैत्र इत्याकारकाख्यातार्थप्रकारकशाब्दबोधोत्पत्त्या तत्राख्यातजन्यकृत्युपस्थितेर्हेतुत्वकल्पनमावश्यकम्। तथा च तत्तदर्थविशेषान्निवेश्यात्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुत्वकल्पने शक्यलक्ष्यसहस्रार्थभेदेनाख्यातजन्योपस्थितेः कारणताबाहुल्यमित्यर्थविशेषाननिवेश्य धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्यैव हेतुत्वमुपेयते। तथा च तादृशकारणबाधेन चैत्रादेर्धात्वर्थज्ञानविशेष्यतया भानं न सम्भवति। यदि च धातुत्वप्रत्ययत्वादीनामनुगतानां दुर्निर्वचतया नैतादृशानुगतकार्यकारणभावकल्पनं सम्भवतीति मन्यते तदापि यत्र ज्ञाधातोरेव पाकादौ लक्षणा तत्र जानातीत्यादिवाक्यात्पाककृत्यादिप्रकारकान्वयबोधोत्पत्त्या ज्ञाधात्वर्थप्रकारकान्वयबोधे तदव्यवहितोत्तरतिप्त्वादिप्रकारकज्ञानजन्योपस्थितेः समानविशेष्यत्वप्रत्यासत्त्या हेतुतायास्तत्र कल्पनीयतया तादृशकारणबाधाच्चैत्रो जानातीत्यादौ चैत्रादेर्ज्ञानविशेष्यतया भानानुपपत्तिर्दुर्वारैवेति। तदप्यसत्। प्रत्ययान्तरार्थविशेष्यकशाब्दबोधे व्यभिचारवारणाय तादृशोप-

ज्ञानाश्रयश्चैत्र इति बोधे शङ्कते अथैवमपीति। वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगिताऽनवच्छेदकत्वेऽपीत्यर्थः। कृतिसम्बन्धस्य वृत्त्यनियामकत्वेन न पचति चैत्र इत्यत्र शाब्दबोधानुपपत्त्याऽऽख्यातस्य कृत्यर्थकतया सार्थक्यसम्भवेऽपि आश्रयतासम्बन्धस्य वृत्तिनियामकत्वेन चैत्रो न जानातीत्यादौ आश्रयतासम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाऽभाववांश्चैत्र इति शाब्दबोधसम्भवेन आख्यातस्याश्रयार्थकत्वकल्पनन्निर्युक्तिकमित्याशङ्कते अथैवमपीति।

स्थितिवैशिष्ट्यस्य तादृशोपस्थितिजन्यतावच्छेदककोटौ अवश्यं निवेशनीयतया तदनुत्तरशाब्दबोधे चैत्रादेर्ज्ञानादिविशेष्यतया भाने तादृशकारणबाधस्याकिञ्चित्करत्वात् । तादृशानुपूर्वीघटकज्ञादिधातुजन्यज्ञानाद्युपस्थितिचैत्रादिरूपविशेष्योपस्थितियोग्यताज्ञानादिघटितसामग्र्या आश्रयतासंसर्गकशाब्दबोधजनने बाधकाभावात् ।

नचैतन्मते आश्रयतासम्बन्धेन ज्ञानादिप्रकारकशाब्दबोधे तादृशयोग्यताज्ञानहेतुत्वान्तरकल्पनाधिक्यम् आश्रयतासम्बन्धेन ज्ञानविशिष्टचैत्रादितात्पर्यकात्सर्वनाम्नः सांकेतिकशब्दान्तराद्वा तादृशसम्बन्धेन ज्ञानादिप्रकारकचैत्रादिविशेष्यकशाब्दबोधस्य सर्वमत एव प्रसिद्धावपि तादृशशाब्दबोधे पदार्थान्तरभाननैयत्येन तन्मिश्रितयोग्यताज्ञानस्य तत्र हेतुताया आवश्यकत्वात् । ज्ञानादिविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य ज्ञानादिविशिष्टचैत्रादिविषयकशाब्दबोधे हेतुतायाः कुत्राप्यक्लृप्तत्वादिति वाच्यम् ? भवन्मतेऽपि ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकशाब्दबोधे तथाविधयोग्यताज्ञानहेतुताया आधिक्यात् । आश्रयतासंसर्गकज्ञानीयकारणतावच्छेदकस्य तदीयसंसर्गविषयताघटिततत्प्रकारकज्ञानकारणतावच्छेदकापेक्षया लघुशरीरतया आश्रयतायाः संसर्गतामतस्यैव लघुत्वात् । न च यत्राश्रयत्वे ज्ञाधातुसमभिव्याहृताख्यातस्य शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधस्योभयमतसिद्धतया तत्र तादृशयोग्यताज्ञानहेतुत्वमुभयमतसिद्धमेवेति वाच्यम् ? आश्रयतायाः संसर्गतावादिना तत्राप्याश्रयताप्रकारकबोधस्यानभ्युपगन्तव्यत्वादिति चेत् ? सत्यम् । एतदभिप्रायेणैव जानातीत्यादावाख्यातस्य निरर्थकतां मणिकार ऊरीचकार । तत्राश्रयत्वे निरूढलक्षणामभ्युपगच्छतां दीधितिकाराणां पुनरेष आशयः ।

यत्र ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र चैत्राद्यंशे धात्वर्थैकदेशस्य ज्ञानादेरन्वयानुपपत्त्या स्वरूपसम्बन्धेन ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकान्वयबोध एव तत्र मणिकृता स्वीकरणीयः । तथा च तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधे तत्प्रकारकयोग्यताज्ञानहेतुतायाः क्लृप्तत्वादाश्रयतासंसर्गकशाब्दबोधे तादृशयोग्यता-

---

आश्रयतासम्बन्धेन ज्ञानादीति—चैत्रो जानातीत्यादौ आश्रयत्वसंसर्गकज्ञानविशिष्टचैत्रमात्रविषयकयोग्यताज्ञानस्य हेतुत्वं संसर्गतावादिमतेऽधिकं स्यादित्यर्थः । अधिकमिति ।

अथ आश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाऽभाववान् चैत्रस्सुन्दर इति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वावच्छिन्नप्रति चैत्रो जानातीति शाब्दसामग्र्याः

ज्ञानहेतुताकल्पनमधिकमेव मणिकृन्मते। न च दीधितिकृन्मते तादृशयोग्यताज्ञानहेतुत्वाकल्पनलाघवेऽपि जानातीत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकतायाम् आख्यातजन्याश्रयत्वोपस्थितेर्निवेशनस्याधिक्याद्गौरवमिति वाच्यम्? भवन्मतेऽपि ज्ञानाश्रयत्वाभाववांश्चैत्रः सुन्दर इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे, जानाति चैत्र इत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुजन्यज्ञानोपस्थितिघटितसामग्र्याः प्रतिबन्धकताधिक्येन गौरवात्। मन्मते च तादृशसामग्र्या विरोधिज्ञानाश्रयत्वाभाववत्तानिश्चयघटिततया तथाविधविशिष्टवैशिष्ट्यबोधसामग्र्यास्तादृशशाब्दसामग्र्या समं युगपदवस्थानासम्भवेन तादृशप्रतिबन्धकत्वकल्पनाविरहादित्यधिकं दर्शितदिशावसेयम्।

अथैवं रीत्या भूतले न घट इत्यादौ घटादिपदस्य घटप्रतियोगिकादौ तदुत्तरसुब्विभक्तेरेव वा प्रतियोगितायां लक्षणामभ्युपेत्य तत्र घटप्रतियोगिकाभावो भूतलवृत्तिरित्याद्याकारकप्रतियोगिताप्रकारकशाब्दबोधोपगम एव समुचितः।

तथा सति तथाविधसमभिव्याहारज्ञानघटितसामग्र्या घटप्रतियोगिकत्वाभाववानभावः प्रमेय इत्यादिर्विशिष्टवैशिष्ट्यबोधं प्रति प्रतिबन्धकत्वाकल्पनेन लाघवाद् इत्युक्तनियमे निपातातिरिक्तत्वविशेषणवैयर्थ्यमिति चेन्न? भूतले न घट इत्यादौ घटाद्यभावे भूतलाद्यन्वितसप्तम्यर्थाधेयत्वस्येव तात्पर्यवशाद्घटादौ सप्तम्यन्तार्थभूतलादिवृत्तित्वाभावस्यान्वयबोधोऽप्यनुभवसिद्धः।

---

प्रतिबन्धकत्वम्। संसर्गतामते तु तादृशशाब्दसामग्र्या आश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाऽभाववान् चैत्र इति बाधनिश्चयाभावघटिताया न प्रतिबन्धकत्वकल्पनमिति न गौरवमित्याशयेनाह अधिकमिति।

अयमाशयः, निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाऽभाववदाश्रयत्ववान् चैत्र इति प्रत्यक्षम्प्रति चैत्रो जानातीति शाब्दसामग्र्याः प्रतिबन्धकत्वमाश्रयत्वस्य संसर्गतावादिनामधिकमिति पूर्वोक्तरीतिर्योजनीयेहेति।

अथैवं रीत्येति—प्रतिबन्धकत्वाऽकल्पनलाघवमूलकेनेति।

तथा सतीति—पूर्वोक्तप्रत्यक्षसामग्र्या भूतले न घट इति वाक्यज्ञानघटितशाब्दसामग्र्याश्चैककालावच्छेदेनावस्थानाऽसम्भवादित्यभिप्रायः।

उक्तनियम इति—निपातातिरिक्तप्रातिपदिकार्थयोः क्रियानिपातातिरिक्तप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयाऽभावनियमः।

अन्यथा तादृशवाक्यजन्यस्याप्रामाण्यज्ञानानास्कन्दितबोधस्य भूतले घट इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितायाः सर्वानुभवसिद्धाया अनुपपत्तेः।

नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद् भवति तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभावः प्रतीयते इत्यनुभवापलापप्रसङ्गाच्च। एवं च नञर्थाभावेऽनुयोगितया घटाद्यन्वयबोधोपपत्तये निपातातिरिक्तत्वविशेषणमावश्यकम्।

एवं न पचति चैत्रः, चैत्रस्य न धनमित्यादौ पाककृतिचैत्रकृस्वत्वाद्यभावस्य नञर्थस्य चैत्रधनादावन्वयबोधोपपत्तये घटो न पट इत्यादौ नञर्थघटादिभेदस्यान्वयबोधोपपत्तये च तदावश्यकम्। न चोक्तस्थलेषु नञोऽभाववल्लाक्षणिकतयाऽभाववता सममनुयोगिनो भेदान्वयबोध एव तत्रोपेयते इति वाच्यम्? तथा सति सर्वत्राभाववत एव नञर्थतया मुख्यार्थपरनञो दुर्लभत्वापत्तेः। अभावस्य भेदान्वयबोधोपगमेपि कार्यकारणभावकल्पनाधिक्यविरहेणाभाववति लक्षणानौचित्यात्।

---

अन्यथेति--पूर्वोक्तवाक्याद् भूतलवृत्तित्वाऽभाववान् घट इति बोधानुपगमे।

ननु ह्रदो वह्निमानितिज्ञानत्वावच्छिन्नम्प्रति असमानप्रकारकाणामपि ह्रदाऽवृत्तिर्वह्निः वह्निव्यापकाऽभाववान् ह्रदः ह्रदनिष्ठाऽभावप्रतियोगी वह्निरित्येवंविधानान्निश्चयानाम्प्रतिबन्धकत्वमिव घटाऽभावो भूतलवृत्तिरिति पूर्वोक्तवाक्याज्जायमानस्य निश्चयस्यापि प्रतिबन्धकत्वसम्भवाद् भूतलवृत्तित्वाऽभाववान् घट इतिबोधाऽनभ्युपगमेऽपि न दोषविरह इत्यत आह नञ्पदंविनेति।

अथ जातौ जातिरिति शाब्दबोधो भ्रमात्मको निरूप्यनिरूपकभावापन्नविषयताशाली जातिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्ववती जातिरित्येवंविधः, जातौ जातिर्नास्तीत्यादौ "नञ्पदं विना यत्र धर्मिणीति" न्यायेन जातिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाऽभाव एव हि शाब्दबोधस्स चाऽप्रसिद्धप्रतियोगिकत्वेनाऽसम्भवः। अतश्च समवायसम्बन्धावच्छिन्नप्रतियोगिताकजात्यभावः, जातिनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्ववानित्येवंविधो बोधः। एवञ्च नायन्नियमस्सार्वत्रिक इत्यभिप्रायेणाह एवन्न पचतीति।

प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ भवत इति न्यायस्यार्थः। नञ्पदंविना यादृशसमभिव्याहारात् ( भूतले घट इति समभिव्याहारात् ) यत्र धर्मिणि ( घटे ) यस्य ( भूतलवृत्तित्वस्य ) विशेषणतया भानम्भवति, तादृशसमभिव्याहारस्थले नञ्सत्त्वे भूतले न घट इत्यत्र तत्र धर्मिणि (घटे) तदभावो (भूतलवृत्तित्वाभावः) प्रतीयत इति तदुदाहरणम्।

अभाववतोऽभेदान्वयबोधोपगमे भूतले घट इत्यादिवाक्यजन्यबोधे भूतले न घट इत्यादिवाक्यजन्यबोधस्याविरोधितापत्तेश्च, लाघवात् स्वरूपसम्बन्धेन ग्राह्याभावनिश्चयस्यैव विशिष्टबुद्धिविरोधित्वान्नत्वभेदसंसर्गकग्राह्याभावाश्रयप्रकारकनिश्चयस्येति ।

नीलो घट इत्यादौ विशेषणविभक्तेरभेदार्थकत्वमतेऽपि यद्यप्युक्तरीत्या लाघवं संभवति ।

तथापि तत्रापि न नो विद्वेष इति दिक् । प्रत्ययाश्च विभक्तिकृत्तद्धि-

---

अविरोधितापत्तेश्चेति ।

तद्धर्मिकतत्प्रकारकबुद्धौ तद्धर्मिकतदभावप्रकारकनिश्चयस्यैव विरोधित्वन्न तु तदभाववत्प्रकारकनिश्चयस्येति । तथा च भूतले न घट इति वाक्यजन्यबोधस्य भूतलवृत्तित्वाऽभाववत्प्रकारकत्वे भूतले घट इति वाक्यजन्यभूतलवृत्तित्ववान्घट इति शाब्दबोधम्प्रति तस्य प्रतिबन्धकत्वाऽनुपपत्तेरिति तत्त्वम् ।

वस्तुतस्तु

नैषः ग्रन्थो युक्तः तादात्म्यसम्बन्धेनाऽभाववता घटादौ प्रकारत्वे स्वरूपसम्बन्धेन अभावस्याऽपि घटादौ धर्मिपारतन्त्र्येण प्रतीतेः । एतेनैव प्रकारेणेदं रजतमित्याकारकशाब्दबोधे रजतत्वपदार्थस्याऽपि धर्मिपारतन्त्र्येण प्रकारत्वन्न्यायकौस्तुभोक्तं सङ्गच्छते ।

किञ्च स्वरूपसम्बन्धेनाऽभावस्याप्रकारत्वे पर्वतो वह्न्यभाववानिति शाब्दबोधकाले वह्निमान् पर्वत इति बोधो नेष्टस्स च स्यादेव, वह्न्यभाववत्प्रकारकनिश्चयस्य शुद्धवह्निप्रकारकज्ञानाऽप्रतिबन्धकत्वात् । धर्मिपारतन्त्र्येण स्वरूपसम्बन्धेनाऽभावस्याऽपि प्रकारत्वे तु अभेदेन वह्न्यभाववतः प्रकारत्वे स्वरूपसम्बन्धेन वह्न्यभावस्याऽपि प्रकारत्वेन प्रतिबध्यप्रतिबन्धकभावसङ्गतेः ।

नीलो घट इति—अत्र कृष्णम्भट्टः, यथा राजस्वत्वाऽभाववान्पुरुषस्सुन्दर इति प्रत्यक्षम्प्रति षष्ठी स्वत्वार्थिकेति नव्यमते राज्ञः पुरुष इति सामग्र्याःप्रतिबन्धकत्वन्न कल्प्यते राजस्वत्वाऽभाववान्पुरुष इति विशेष्यतावच्छेदकप्रकारकनिश्चयः (निर्णयः) प्रत्यक्षे कारणं स एव निर्णयश्शाब्दबोधे बाधस्तादृशबाधाऽभावश्शाब्दबोधे कारणन्तथा च बाधतदभावयोर्युगपदवस्थानाऽसम्भवात् सामग्र्योर्मेलनन्न सम्भवतीति न शाब्दसामग्री प्रत्यक्षे प्रतिबन्धिका । एवन्नीलाऽभेदाऽभाववान् घटः प्रमेय इति प्रत्यक्षेऽपि नीलाऽभेदाऽभाववान्घट इति विशेष्यतावच्छेदकप्रकारकनिर्णयःकारणम्, स एव च नीलो घट इति वाक्यजन्ये नीलाऽभेदवान् घट इति शाब्दबोधे बाधस्तस्य बाधस्याऽभावश्शाब्दबोधे कारणमिति प्रत्यक्षशाब्दसामग्र्योर्बाधतदभावघटितयोर्यौगपद्याऽसम्भवात् न शाब्दसामग्री प्रत्यक्षे प्रतिबन्धिकेत्युक्तरीत्यर्थः ।

तथा च नीलो घट इत्यत्रापि विशेषणविभक्तिभेदबोधकतया षष्ठीविभक्तिवत्सार्थिकेति । इष्टापत्त्या समाधत्ते तथापि तत्रापि न नो विद्वेष इति । प्रतिबध्यप्र-

तादिभेदन नानाविधाः। विभक्तिश्च सुप्तिङ्भेदेन द्विविधा। सुब्विभक्तयः प्रथमाद्वितीयादयः सप्त, तत्र प्रथमार्थः प्रकृत्यर्थे विशेषणविधयान्वयिनो संख्यैव। अत एव यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्र्यभावादसौ मुख्यविशेष्यतयैव भासते।

---

तिबन्धकलाघवसत्त्वे नः अभेदसंसर्गतावादिनामस्माकं युक्तिबलाद्वस्तुसिद्धौ न विद्वेष इति तत्त्वम्। अत्र नस्सम्मतिर्नास्तीति स्पष्टमनुक्त्वा न नो विद्वेष इति वदतां संसर्गतावादिनां मीमांसकखण्डदेवादिजगदीशतर्कालङ्कारन्यायकौस्तुभकारादीनामयमभिप्रायोऽस्ति। सर्वत्र पदार्थव्यवस्था लाघवानुरोधेन प्रतीत्यनुरोधेन च भवति। प्रतीतिश्च प्रायेण नीलो घट इत्यादौ अभेदसंसर्गिकैव, तामेव प्रतीतिमार्थिका गृह्णन्ति। तथा च प्रकारतावादो हेय एवेत्यर्थः।

किञ्च प्रकारतावादे विभक्त्यर्थकल्पना पूर्वोक्तरीत्या नवविधबाधापत्तिश्च। तस्मात्संसर्गतापक्ष एव साधीयानिति महतां विमर्शः।

प्रत्ययाश्च विभक्तिकृत्तद्धितादिभेदेनेति।

अत्रादिपदेन शप्श्यनादिविकरणानामपि ग्रहणम्। संख्यैवेत्युक्त्या लिङ्गपरिमाणयोः प्रथमार्थत्वनिरासः। ब्राह्मणवति गृहे अत्र ब्राह्मणी नास्तीति प्रतीतेः। "प्रातिदिकार्थ" सूत्रे परिमाणपदेन गुरुत्वं परिमितिश्चेत्यर्थद्वयं गृह्यते। द्रोणो व्रीहिरित्यत्र गुरुत्वम्, तत्र प्रकृत्यर्थद्रोणपदार्थस्याऽभेदेन गुरुत्वेऽन्वयो गुरुत्वस्य च समवायेन व्रीहावन्वयः, द्रोणाऽभिन्नगुरुत्ववान् व्रीहिरितिशाब्दबोधः। परिमितिश्च वितस्तिश्शंख इत्यत्राऽस्ति द्वादशाङ्गुलपरिमाणवाचिप्रथमाविभक्तेः परिमाणमर्थः, वितस्तिप्रकृत्यर्थस्याऽभेदेन तत्रान्वयः, परिमाणस्य च समवायेन शङ्खेऽन्वयः, वितस्त्यभिन्नपरिमाणवान् शंख इति बोधः।

अत्र किञ्चित्

क्रियामुख्यविशेष्यकशाब्दबोधे पाचको न पचतीत्यादौ दोषः? पाकस्य पाचककर्तृत्वनियमात्। प्रतियोगितासम्बन्धेन नञर्थेऽन्वयेऽपि पाचकस्य अनुयोगितासम्बन्धेन तिङर्थकर्तुश्च पाचकान्यकर्तृको विद्यमानपाक इत्यन्वयबोधाऽसम्भवात्। प्रथमान्तार्थमुख्यविशेष्यत्वस्वीकारे वर्त्तमानकालिकपाकानुकूलकृत्यभाववान् पाचक इत्यन्वयबोधो निश्शङ्क एव।

किञ्च

शशी दिवसधूसरो विगतयौवना कामिनी,
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणस्सततदुर्गतस्सज्जनो,
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥

संख्यावाचकानां च एकवचनद्विवचनबहुवचनानामेकत्वत्वद्वित्वत्वबहुत्वावच्छिन्नेषु शक्तिः। शक्तता च सुत्वऔत्वजस्त्वादिना न तु स्वादितिबादिसाधारणैकवचनत्वादिना। एकवचनत्वादेर्दुर्वचत्वात्। न चैकत्वादिवाचकत्वं तत्? वाचकतायाः शक्ततावच्छेदकत्वे आत्माश्रयात्।

---

इत्यादिषु क्रियापदाऽभावात्क्रियामुख्यविशेष्यकबोधः कथम्? तथा च सति सम्भवे प्रथमान्तार्थमुख्यविशेष्यकोऽपि बोधोऽत एव "प्रयाति पुरुषस्तस्य पादयोरभिवादय" इत्यादौ "प्रथमान्तार्थः प्राधान्यान्मृश्यते तदा" इत्यादौ प्रथमान्तार्थप्राधान्यात्तच्छब्देन परामर्शः।

वस्तुतस्तु

"दाणश्च सा चेच्चतुर्थ्यर्थे" इतिसूत्रे तच्छब्देनाऽप्रधानतृतीयापरामर्शात्सर्वनाम्नामुत्सर्गतो बुद्धिस्थमात्रपरामर्शकत्वन्न तु प्रधानाऽप्रधाननियमः। न च प्रथमार्थमुख्यविशेष्यकबोधाऽभ्युपगमे भावप्रधानमाख्यातमितिवचनविरोधस्तत्र भावपदेन क्रियाया एव ग्रहणम् इति वाच्यम्? तत्र भावशब्देन भावनाया ग्रहणाद् आख्यतार्थकालसंख्याकृतिषु भावनात्मिकायाःकृतेरेव प्राधान्यमित्यभिप्रायात्। अत एव भावनासामान्यशून्ये सुप्तपुरुषे नायम्पचतीति प्रयोगानुपपत्त्या भावशब्दस्य भावनार्थकत्वमङ्गीकृत्य भावनामुख्यविशेष्यकबोधो मीमांसकाऽभिमतोऽयुक्ततर एव।

किञ्च "सत्त्वप्रधानानि नामानी"ति स्मृतौ सत्त्वशब्देन लिङ्गसंख्याद्यन्वययोग्य एवार्थः। एवञ्च शाब्दिकमीमांसकमतेनैतस्याः प्रामाण्यमुपपद्यते, नैयायिकमते तूभयोस्स्मृत्योः प्रामाण्यमिति। विशेषश्चात्रार्थप्रकारस्त्वस्मत्कृतकौमुदीकल्पलतिकायामवलोक्य इत्यलम्।

एकत्वत्वेत्यादि।

अत्र एकत्वत्वद्वित्वत्वादिजातिरेव शक्यतावच्छेदिका। नीलो घट इत्यादौ गुणवाचकनीलपदोत्तरसुपोऽपेक्षाबुद्धिविशेष्यत्वे लक्षणेति क्षतिविरहः।

वस्तुतस्तु

एकत्वत्वम् द्वित्वत्वम् अखण्डोपाधिरेव अपेक्षाबुद्ध्यनुपस्थितावपि संख्याप्रतीतेरनुभवसिद्धत्वात्। अस्मिन् मतेऽखण्डोपाधिरूपमेकत्वत्वादिकं शक्यतावच्छेदकम्बोध्यम्। अखण्डोपाधित्वञ्च स्वरूपसम्बन्धावच्छिन्नवृत्तित्वे सति समवायभिन्नत्वे सति भावत्वम्। शक्तता च सुत्वऔत्वेति—आदेशानाममादीनामनन्तत्वेनादेशिनस्सुत्वादेरेव शक्ततावच्छेदकत्वम्। एकत्ववाचकत्वञ्च ईश्वरेच्छीयैकत्वविषयकबोधजनकत्वप्रकारतानिरूपितविशेष्यत्वम्। एकवचनत्वस्य शक्ततावच्छेदकत्वेत्वात्माश्रयस्स्यादिति तत्त्वम्।

बोधकतारूपत्वे शक्तिभ्रमेण द्विवचनादीनामपि एकत्वबोधकतया अतिप्रसक्तत्वात्। न चैकवचनत्वादिकं जातिविशेषः ? सुप्त्वादिना सांकर्यात्।

न च शक्तिसंबन्धेन एकवचनादिपदवत्वं तत्।

तादृशज्ञानदशायां च सुत्वादिना शक्तिभ्रमादेव शाब्दबोधः। एकवचनादिशब्दस्य पदद्वयात्मकतया तादृशसमुदायशक्तेरेवाप्रसिद्धिरिति तु नाशङ्कनीयम्। एकं वक्तीत्यादिव्युत्पत्त्या एकवचनादिशब्दस्य स्वादिबोधकत्वे एकादिशब्देऽपि तादृशव्यवहारापत्तेः। एकवचनादिशब्दस्य स्वादौ रूढिस्वीकारस्यावश्यकत्वादिति वाच्यम् ? ग्रन्थकारीयसंकेतेनैवोपपत्तौ एकवचनादिपदे शक्तेरप्रामाणिकत्वात्। तान्येकवचनद्विवचनेत्यादिपाणिनिसूत्रस्य तदीयसंकेतग्रहपरतयाप्युपपत्तेः। न हि यू स्त्र्याख्यौ नदीत्यनुशासनात् स्त्र्याख्येदूदन्तादिशब्दे नद्यादिपदस्य शक्तिः सिद्ध्यति। किन्तु तदीयसंकेत एव।

---

बोधकतारूपत्व इति—वाचकताया इति शेषः। बोधकत्वञ्च बोधजनकत्वम्, तत्र शक्तिप्रवेशाऽभावान्नात्माश्रय इति फलितम्।

सुप्त्वादिनेति। साङ्कर्य्यञ्च परस्परात्यन्ताऽभावसमानाधिकरणत्वे सति एकाधिकरणवृत्तित्वम् इति। परन्तु परस्परत्वस्यानुगतस्य दुर्वचनत्वेन जातिविशिष्टत्वमेव साङ्कर्य्यम्। वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वाऽभावसामानाधिकरण्यस्वसमानाधिकरणात्यन्ताऽभावप्रतियोगित्वमिति त्रितयसम्बन्धेन। जलगतद्वित्वनिरूपितसाङ्कर्य्यम्पृथिवीत्वे पतेदिति वस्तुविशिष्टत्वं विहाय जातिविशिष्टत्वमिति।

स्वसामानाधिकरण्यञ्च समवायसम्बन्धावच्छिन्नस्वनिष्ठनिरूपकतानिरूपिताधिकरणतावन्निरूपितसमवायस्वरूपातिरिक्तसम्बन्धानवच्छिन्नवृत्तित्वम्। जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाऽभावप्रतियोगित्वाऽभाव इति नियम एव प्रमाणम्। नियमे वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वाऽभावसामानाधिकरण्यमित्युभयसम्बन्धेन। संकीर्णस्य जातित्वस्वीकारे नियमभङ्ग इत्यलमप्रस्तुतप्रस्तावेन।

वस्तुतस्तु प्रकृते सुप्त्वस्य पाणिनीयसङ्केतसम्बन्धेन सुप्पदवत्त्वाद् न जातित्वम्। अत एवादिपदोपादानम्। तथा च अत्वेन मत्वेन साङ्कर्य्यम्।

न चेति—वाच्यमिति परेणान्वयः। शक्तिसम्बन्धेनेति—स्वजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतासम्बन्धेनेत्याशयः।

तादृशाऽज्ञानदशायामिति—घटादिशब्दे एकवचनपदवद् एकत्वे शक्तमित्यादिज्ञानाऽभावेऽपि सुपदमेकत्वे शक्तमिति सुपदधर्मिकशक्तत्वावगाहिभ्रमादेव शाब्दबोध इति तत्त्वम्। अत एवेति—पाणिनिसङ्केतादेवेत्यर्थः।

अत एव नद्यादिसंज्ञा आधुनिकसंकेतशालित्वात्पारिभाषिक्येव न त्वौपाधिको। अथैवमपि पाणिनिसंकेतसम्बन्धेन तादृशपदवत्त्वमेव एकत्वादिशक्ततावच्छेदकमस्त्विति चेन्न ? तादृशसंकेतस्य केन रूपेण सम्बन्धता ? संकेतत्वेनेति चेत्तर्हि कस्यचित्पुंस एकवचनपदात् सुऔजसादिर्बोद्धव्य इत्याकारकसंकेतस्यापि संभवादतिप्रसक्तिर्दुर्वारैव।

पाणिनिसंकेतत्वेन तथेति चेत्तर्हि व्याकरणप्रणेतुः पुरुषान्तरस्यापि तादृशसंकेतस्य संभवात्। तदीयसंकेतसम्बन्धेन तत्पदवत्त्वस्य डित्थादिपदात् सुऔजसादिर्बोद्धव्य इत्याकारकपुरुषसंकेतसम्बन्धेन डित्थादिपदवत्त्वस्य वा विनिगमनाविरहेण शक्ततावच्छेदकताप्रसङ्गः। तथा चागत्या आनुपूर्वीविशेष एव शक्ततावच्छेदक इति।

यत्तु संख्यापि प्रकृतेरर्थः। एकवचनादिकं च एकत्वाद्यर्थे तात्पर्यग्राहकमेव। न चैवमेकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वये आकांक्षाविरहाद् घटादावेकत्वाद्यन्वयानुपपत्तिः। अन्यथा हर्यादिपदादुपस्थितयोरश्वसूर्ययोराधाराधेयभावेनान्वयापत्तिः।

घटादिपदस्य एकत्वादिविशिष्टस्य घटादौ च न शक्तिसंभवः, घटरूपं पश्येत्यादौ संख्यानवच्छिन्नघटादेरेवान्वयबोधादिति वाच्यम् ? आकांक्षावैचित्र्यादेकप्रकृत्युपस्थाप्ययोरपि घटैकत्वयोः परस्परमन्वयसंभवात्। अत एव खण्डशक्त्यैवकाराद्युपस्थाप्ययोरन्ययोगव्यवच्छेदयोः परस्परमन्वयबोधः।

---

नत्वौपाधिकोति।

ननु औपाधिकी संज्ञा केति प्रश्नः ? अनुगतोपाध्यवच्छिन्नसङ्केतवती संज्ञा औपाधिकी संज्ञा। यथा दूत इति मित्रगृहवार्ताहारकत्वाद्यनुगतोपाधिपुरस्सरदूतप्रवृत्तिः। अत एव शब्दशक्तिप्रकाशिकायामुक्तम्।

यद्वाधुनिकसङ्केतशालित्वात् पारिभाषिकम्।
जात्या नैमित्तिकं शक्तमौपाधिकमुपाधिना॥ इति।

सङ्केतत्वेनेति—पाणिनीयत्वाऽविशेषितसंकेतत्वेनेत्यर्थः। तत्पदवत्त्वस्येति—एकवचनपदवत्त्वस्येत्यर्थः। स्वौजसादिरिति—आदिपदस्य प्रत्येकान्वयः। एकप्रकृत्युपस्थाप्ययोरिति—एकप्रत्ययजन्ययोःकालकृत्योः परस्परमन्वयबोधानुरोधेन प्रकृत्युपस्थाप्ययोरिति। आकांक्षाविरहादिति—समभिव्याहाररूपाकांक्षा तु घटपदसुपदयोर्न सम्भवति ? ययोरर्थयोरन्वयबोधस्तत्तद्बोधकपदयोरेव समभिव्याहारस्याऽकांक्षात्वादिति तत्त्वम्।

अन्वयसम्भवादिति—एकत्वे घटे च खण्डशक्तिरेवेति।

न चैवं कर्मत्वादिकमपि प्रकृत्यर्थ एवास्तु, किं तत्र द्वितीयादिशक्त्येति वाच्यम् ? नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याव्युत्पन्नतया कर्मत्वादेर्नामार्थत्वे तेन समं धात्वर्थान्वयासंभवात् ।

न च संख्यायाः प्रातिपदिकार्थत्वे सति तात्पर्यज्ञाने विनैव शक्तिभ्रमं लक्षणाग्रहं वा द्विवचनाद्यन्तपदादेकत्वादिबोधसंभवात् । एकत्वादितात्पर्येण एकवचनान्तस्येव द्विवचनान्तस्यापि पदस्य स्वारसिकप्रयोगापत्तिरिति वाच्यम् ?

अनादितात्पर्यस्यैव स्वारसिकप्रयोगमूलत्वादेकवचनाद्यन्तपदस्यैव एकत्वादावनादितात्पर्योपगमेनातिप्रसङ्गविरहात् । द्व्येकयोर्द्विवचनैकवचने इत्याद्यनुशासनं च तादृशतात्पर्यग्राहकमेवेति वैयाकरणमतम् । तदसत् । अनन्तानां प्रकृत्यानुपूर्वीणां शक्ततावच्छेदकत्वापेक्षया अल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्ततावच्छेदकत्वस्यैवोचितत्वात् ।

न च प्रातिपदिकत्वमेव शक्ततावच्छेदकं न तु घटपदत्वादिकमिति न शक्त्यानन्त्यमिति वाच्यम् ? प्रातिपदिकत्वस्य दुर्निर्वचत्वात् । तदज्ञानेऽपि एकत्वादिज्ञानस्यानुभविकत्वात् ।

पदत्वे वर्णत्वेन वा शक्तत्वे विभक्तेरपि तद्वाचकतासिद्धेः । एकत्वादिशाब्दबोधात्पूर्वं वर्णत्वाद्युपस्थितेरप्यनावश्यकत्वाच्च । फलानुरोधेन तत्कल्पने च कल्पनागौरवात् । एवमानुपूर्वीभिन्नधर्मस्य वाच-

---

धात्वर्थान्वयाऽसम्भवादिति ।

नच संख्यायाः प्रकृत्यर्थत्वे संख्याप्रकृत्यर्थयोरपि भेदसम्बन्धेनान्वयो न स्यात्पूर्वोक्तव्युत्पत्तिबलादिति वाच्यम् ? नामार्थयोरितिपदस्थाने नामद्वयार्थयोरिति व्युत्पत्तौ निवेशेनाक्षतेः ।

स्वारसिकप्रयोगाऽपत्तिरिति—स्वारसिकत्वञ्च शक्तिभ्रमाऽनधीनत्वे सति प्रयोजनप्रतिसन्धानाऽजन्यत्वम् । अतिप्रसङ्गविरहादिति—पूर्वोक्तस्वारसिकप्रयोगविरहादित्याशयः । तदज्ञानेऽपीति—प्रातिपदिकत्वाऽज्ञानेऽपीत्यर्थः । ननु वर्णत्वञ्च प्रत्येकवर्णे पर्य्याप्तम् शक्तता च न प्रत्येकवर्णपर्याप्ताऽन्यथा प्रत्येकवर्णज्ञानादपि शाब्दबोधापत्तेः ।

एवञ्च वर्णत्वस्यातिप्रसक्तत्वेन कथं शक्ततावच्छेदकत्वमिति चेन्न ? अतिप्रसक्तोऽपि धर्मो विषयतावच्छेदको भवति, शक्तता च ईश्वरेच्छीयतत्तदर्थविषयकबोधजनकत्वप्रकारतानिरूपितविशेष्यतारूपेतिव्याख्यानात् । नच प्रत्येकवर्णज्ञानाच्छाब्दबोधापत्तिरिति वाच्यम् ? वर्णान्तरज्ञानस्य सहकारित्वोपगमेन प्रत्येकवर्णाच्छाब्दबोधानवकाशात् ।

वर्णत्वेन रूपेण संख्यावाचकत्वन्न सम्भवतीत्याशयेनाह—एकत्वादीति ।

कतावच्छेदकत्वे घटपदं सुपदं च न संख्यावाचकमिति विपरीतनिश्चयकालेऽपि तादृशधर्मावच्छिन्नस्य वाचकताग्रहसम्भवाद् घट इत्यादौ संख्याया बोधापत्तिः ।

अथ विभक्तीनां संख्यार्थकतामेव प्रकृतिविभक्त्योरेकवाक्यताविरहनिश्चयदशायां विभक्त्युपस्थाप्यैकत्वादेः प्रकृत्यर्थेऽन्वयबोधवारणाय तयोः समभिव्याहारज्ञानस्य घटादिविशेष्यकैकत्वान्वयबोधं प्रति कारणत्वमधिकं कल्पनीयम् । एकपदोपस्थापितयोः घटैकत्वायोरन्वयबोधोपगमे च न समभिव्याहारज्ञानस्य तत्र हेतुता कल्प्यते इति लाघवात्, प्रकृत्याद्यानुपूर्वीणां संख्यावाचकतावच्छेदकत्वमुपेयत इति चेन्न ? आकाङ्क्षाविचारे समभिव्याहाराकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वात् । अथैवमपि विभक्तेः संख्यार्थकत्वे विनिगमनाविरहेण प्रकृतिधर्मिकस्य विभक्तिधर्मिकस्य च संख्याप्रकारकान्वयबोधपरत्वज्ञानस्य हेतुता कल्पनीया । विभक्तेर्द्योतकत्वमते तु विभक्तितात्पर्यविरहेण प्रकृतिधर्मिकत्वे

---

समभिव्याहाररूपाकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वादिति ।

अयम्भावः, पदानामानन्त्येन पदनिष्ठतात्पर्यज्ञानस्यानेककारणत्वापत्तिभीत्या इदम्पदमेतदर्थबोधेच्छयोच्चरितमिति पदतात्पर्यज्ञानन्न कारणं किन्तु वाक्यमिदमेतदर्थान्वितैतदर्थविषयताकबोधजनयत्विति वाक्यनिष्ठतात्पर्यज्ञानमेव कारणम् । एवञ्च योग्यताज्ञानाऽभावेऽपि केवलाकाङ्क्षाज्ञानबलेन अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामितिमहावाक्यघटकं राज्ञः पुरुष इति नैकं वाक्यमितिज्ञाने जातेऽपि राजसम्बन्धवत्पुरुष इत्याकारकशाब्दबोधापत्तिरतस्समभिव्याहारज्ञानस्य कारणत्वमङ्गीकार्यम्भवति । परन्तु समभिव्याहारज्ञानस्य कारणत्वेऽपि तात्पर्यज्ञानम्पूर्वोक्तप्रबन्धानुरोधेनावश्यकम् । तथाच सर्वत्र वाक्यतात्पर्यज्ञानेन निर्वाहेऽलं समभिव्याहारज्ञानस्य कारणत्वस्वीकारेणेति तात्पर्यं ग्रन्थकाराणाम् ।

ननु समभिव्याहारज्ञानस्य कारणत्वमस्मिन् ग्रन्थान्तरे चाऽस्तीति कथन्तत्सङ्गतिरिति चेन्न ? एकपदेऽपरपदवैशिष्ट्यमात्रं समभिव्याहारपदार्थ इति व्याख्यातात्पर्येण ग्रन्थसङ्गतेः ।

अत्र मान्याः ।

पूर्वोक्तार्थकसमभिव्याहारज्ञानस्य नैव शाब्दबोधे कारणत्वमपि तु तत्तदानुपूर्वीज्ञानस्यैव । आनुपूर्वी च तत्तद्वर्णाव्यवहितोत्तरकालावच्छेदेन तत्तद्वर्णत्वम् इति पूर्वमेव निर्णीतम् । अत्र कार्यतावच्छेदकसम्बन्धश्च अव्यवहितोत्तरत्वमात्रम् । अव्यवहितोत्तरत्वविशिष्टनीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दत्वञ्च । अत्र कारणतावच्छेदकसम्बन्धश्च समवायमात्रम्, तत्तदानुपूर्वीज्ञानविशिष्टत्वस्यैव कार्यतावच्छेदकत्वम् । वैशिष्ट्य वृत्तिविशेषघटितोपस्थितिघटिताव्यवहितोत्तर-

तात्पर्यज्ञानं तादृशान्वयधीहेतुरिति लाघवमिति चेन्न ? विभक्तेः संख्यावाचकताविरहेऽपि प्रकृतिविभक्त्योरानुपूर्वीज्ञानस्य तादृशान्वयबोधहेतुतया निर्विभक्तिकादिपदज्ञानादन्वयबोधवारणायावश्यकल्पनीयतया संख्यावाचकप्रकृतेरिव तद्वाचकविभक्तेरपि संख्यान्वयबोधकत्वप्रकारकेच्छाविषयत्वरूपतादृशबोधपरत्वसम्भवेन विभक्तिधर्मिकतज्ज्ञानहेतुताया विनिगमनाविरहेणावश्यकत्वात् ।

---

त्वविशेषसम्बन्धेन । अस्यां कल्पनायाम्महल्लाघवन्तथाहि, नीलो घटः कालो घटः श्यामो घटः कृष्णो घट इतिनीलपर्यायाश्चत्वारश्शब्दाः घटः कुम्भः कलशः दोहिनी नीलो घटः नीलः कुम्भः नीलः कलशः नीला दोहिनी घटपर्यायाश्चत्वारश्शब्दाः, अत्र क्रमेण विपरीतेन विशेष्यविशेषणभावे विनिगमनाविरहेण च आकाङ्क्षाज्ञानकार्यकारणभावविवेके क्रमेणाष्टौ कार्यकारणभावाः, विपरीतेनाष्टौ कार्यकारणभावा इति षोडश कार्यकारणभावाः । विशेष्यविशेषणभावे विनिगमनावैकल्येन कार्यकारणभावे तु पुनरपि षोडश । आद्यन्त्यक्त्वा द्वितीयन्तृतीयं वा धृत्वेति सर्वत्र नियमेन षोडशेति । सर्वेषां कार्यकारणभावानां सङ्कलनया द्वात्रिंशत्कार्यकारणभावास्सम्पद्यन्ते । केवलानुपूर्वीज्ञानस्यैव कारणत्वन्नतु एकपदेऽपरपदवैशिष्ट्यमात्रार्थकसमभिव्याहारस्य कारणत्वमिति सिद्धान्ते तु क्रमेण विपरीतेन च तद्विषयकशाब्दबोधम्प्रति अष्टौ कार्य्यकारणभावा इति लाघवप्रपञ्चः । न नीलो घटः न श्यामो घट इत्येवम्प्रतिबध्यप्रतिबन्धकभावविचारे प्रचलिते तु चतुष्षष्टिकार्यकारणभावाः । तत्तदानुपूर्वीज्ञानविशिष्टत्वं कार्यतावच्छेदकत्वमिति पक्षे तु षोडश कार्यकारणभावा इत्यपरमनुकूलम् ।

ननु तत्तदानुपूर्वीज्ञानविशिष्टत्वस्यैव कार्यतावच्छेदकत्वे नीलो घटं कृष्णो घटमिति प्रथमान्तद्वितीयान्तानुपूर्वीज्ञानेऽपि नीलाऽभिन्नो घट इति अभेदान्वयो दुर्वारः । विशिष्टज्ञानकारणतावादिनाम्मते तु नीलो घटः पीतं घटं कृष्णो घट इतिविशिष्टज्ञानकारणाऽभावान्नाऽभेदान्वयापत्तिरिति चेन्न ? यत्कार्यत्वावच्छिन्नम्प्रति यावत्कारणकार्यतावच्छेदकाक्रान्तिः तावत्कारणसत्तासमवधाने एव कार्योत्पत्तिरिति नियमानुरोधेन स्वस्वाऽव्यवहितोत्तरत्वावच्छिन्नकार्य्यत्वावच्छिन्नम्प्रत्येव तत्तदानुपूर्वीज्ञानानां कारणत्वम् ! तथाच मतद्वयेऽपि ह्येतत्समावेस्सौष्ठवात् । अत एव शोभनस्तण्डुलम्पचति चैत्र इत्यादिवाक्ये शोभनतण्डुलयोरभेदान्वयो न भवति तत्तदानुपूर्वीज्ञानविशिष्टत्वाऽभावात् ।

अत्राऽपि केचिद्वैलक्षण्यम्ब्रुवन्ति

नील इत्याकारकानुपूर्वीज्ञानविशिष्टघट इत्याकारकानुपूर्वीज्ञानमेव हि कारणम् । अव्यवहितोत्तरत्वाऽव्यवहितपूर्वत्वाख्यसम्बन्धाभ्यां स्वन्तनीलपदविशिष्टस्वन्तघटपदज्ञानं कारणम् । स्वन्तघटपदज्ञानविशिष्टस्वन्तनीलपदज्ञानं कारणम् । कल्पनेऽप्येवं लाघवमस्त्येवेति न समभिव्याहाररूपाकाङ्क्षाज्ञानस्य कारणत्वमिति ।

अथ स्वादीनां संख्यावाचकत्वकल्पनापेक्षया प्रकृतेस्तत्र लक्षणैवो-

अत्र किञ्चित्

यदि तात्पर्यज्ञानस्य तत्तच्छाब्दबुद्धौ कारणत्वन्तदा मूर्खेणार्थानभिज्ञेन शुकेन पक्षिणा मैनाख्यपक्षिणा साधारणबालकेन चित्तविभ्रान्तपुरुषेण वा प्रयुक्तम्पदन्न शाब्दबोधञ्जनयेत् तात्पर्यज्ञानाऽभावात् ।

ननु शिक्षकतात्पर्यज्ञानाच्छाब्द इति चेन्न? प्रत्युच्चारणं वाक्यम्भिद्यते नवेति शास्त्रार्थे भिद्यत इति पक्षस्यैव सिद्धान्तितत्वात् ।

नच भेदेऽप्यानुपूर्वीभेदाऽभावेन शाब्दबोधे न विवाद इति वाच्यम् ? प्रकरणप्राप्तार्थानवबोधे सुरभिमांसम्भक्षयेति वाक्यश्रावणप्रत्यक्षानन्तरलौकिकापवादहान्यापत्तेः । तस्मात्प्रकृताऽप्रकृतप्राप्तार्थमात्रशाब्दबोधो नहि तत्र तात्पर्यज्ञानङ्कारणम् । यद्वाक्यार्थो येन केनाऽपि प्रमाणेन न बाधविषयाक्रान्तस्तस्यैव प्रामाण्यन्नान्यस्येति । एवं शाब्दबोधसामग्रीप्रतिबन्धकविचारेऽपि विशिष्टं लाघवमस्माद्वाक्यान्मयाऽर्थोऽवबुद्धस्तत्र भवतान्तात्पर्यमस्ति न वेति विचारस्य सर्वथैव सम्प्रदायविगर्हितत्वादित्यलम् ।

आकाङ्क्षाविचारे हेतुताया निराकृतत्वादिति । एकवाक्यताविरहेऽपीति । एकवाक्यत्वञ्च सम्भूयैकार्थप्रतीतीच्छयोच्चरितत्वम् । निरूप्यनिरूपकभावाऽपन्नतत्तत्पदार्थनिष्ठविषयताकबोधजनकत्वञ्च ।

समभिव्याहारश्च न तत्पदोत्तरतत्पदत्वं नियतपूर्वापरीभावो वा? एकवाक्यताविरहेऽसम्भवात् । तथाच इदम्पदमनेन पदेन सहान्वयबोधञ्जनयत्वितीच्छारूपम् एतदिच्छयोच्चरितत्वं वा । यत्पदार्थस्य यत्पदार्थेन सहान्वयबोधो विवक्षितस्तयोः पदयोः परस्परसमभिव्याहार आकाङ्क्षेति तात्पर्यगर्भिताऽकाङ्क्षातात्पर्यघटितत्वेन तात्पर्यज्ञानकारणतयैव निर्वाहे घट इत्यादौ घटपदोत्तरसुत्वरूपसमभिव्याहाराकाङ्क्षाज्ञानहेतुताया निराकृतत्वादिति कृष्णम्भट्टाः ।

अत्र सूक्ष्मतत्त्वज्ञाः

घटः कर्मत्वम् आनयनम् कृतिरितिवाक्याद् घटकर्मताकानयनानुकूलकृतिविषयकशाब्दबोधवारणाय आनुपूर्वीविशेषरूपाया आकाङ्क्षायास्स्वीकारात् ।

किञ्च अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ न राज्ञः पुरुष इतिवाक्यम् इत्येवंविधे ज्ञाने सत्यपि योग्यताज्ञानादिकारणसामग्रीसत्त्वे राजनिरूपितस्वत्ववत्पुरुषविशेष्यकशाब्दबोधवारणाय समभिव्याहारज्ञानं शाब्दबोधे कारणम् । परन्तु नानार्थकसैन्धवादिपदघटितसैन्धमानयेत्यादौ तात्पर्यज्ञानं विना शाब्दबोधानुदयेनेव अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्राऽपि एकवाक्यत्वाऽभावेन इदं वाक्यं राजस्वत्ववत्पुरुषविषयकशाब्दबोधञ्जनयत्वित्याकारकतात्पर्यज्ञानाऽभावेन शाब्दबोधाऽभावेन च समभिव्याहारज्ञानस्य कथमपि कारणत्वन्नास्ति, तात्पर्येणैव निर्वाहात् ।

प्रथमाविभक्तेरिति—ननु प्रथमाविभक्तेरेव लक्षणास्त्येवञ्च नैव युगपद् वृत्तिद्वयान-

चिता शक्यलक्ष्ययोः परस्परमन्वयोपगमे क्षतिविरहात्। प्रथमाविभक्तेः कुत्रापि शक्तेरक्लृप्ततया तस्याः शक्यसम्बन्धरूपा लक्षणा न सम्भवति। द्वितीयादेः कर्मत्वादौ शक्तत्वेऽपि तादृशविभक्तेस्तत्समभिव्याहृतप्रकृतेर्वा संख्यायां लक्षणा इत्यत्र विनिगमकं दुर्लभम्।

न चैकत्वाद्यन्वयबोधे घटपदादिज्ञानजन्योपस्थितित्वेनानन्तहेतुताकल्पनमपेक्ष्य स्वादिपदज्ञानजन्यतदुपस्थितित्वेन कतिपयहेतुताकल्पनायां लाघवात्कतिपयशक्तिकल्पने गौरवमकिंचित्करम्।

सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थितित्वेनैककारणताकल्पनन्तु न सम्यक् निर्विभक्तिककुम्भपदादितः संख्योपस्थितौ तदगृहीतवृत्तिकघटादिपदे तत्तद्विभक्त्यन्तत्वज्ञानवतः पुंसो घटादौ संख्यान्वयबोधप्रसङ्गात्। घटपदादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनैकत्वादिविषयकशाब्दबोधहेतुतां कल्पयित्वा विभक्तिघटादिपदानुपूर्वीज्ञानतादृशोपस्थित्योः परस्परसहकारेण फलजनकताया अवश्याभ्युपेयत्वादिति वाच्यम्? घटादिपदस्यैकत्वादौ लक्षणाग्रहसत्त्वे घटः प्रमेय इत्यादिवाक्यादेकत्वं प्रमेयमित्याद्यन्वयबोधस्य सर्वसंमततया तदनुरोधेनैकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितित्वेन हेतुतायाः सर्वसंमतत्वात्। मैवम्, यादृशपदानां लक्षणया एकत्वादिशाब्दधीजनकत्वं नोभयवादिसिद्धं तादृशानन्तपदज्ञानजन्यैकत्वाद्युपस्थितीनां तच्छाब्दहेतुत्वकल्पनं प्रकृतेः संख्यावाचकतावादिनामधिकमिति तत्कल्पनापेक्षया चाल्पतरस्वादिपदजन्यैकत्वाद्युपस्थितिहेतुताकल्पन एव लाघवम्। एतेन संख्याविशेषावच्छिन्नघटादिर्लक्षणया प्रकृतेरर्थः न तु संख्याविभक्त्यर्थः शाब्दबोधे विभक्तिजन्यसंख्योपस्थितिहेतुताकल्पनाधिक्येन गौरवात्। घटादिपदस्यैकत्वादिविशिष्टघटादौ लक्षणाग्रहदशायां सर्वमत एव

---

ङ्गीकारभङ्ग इत्यभिप्रायात्। अक्लृप्ततयेति—विशेषणविभक्तेर्नाऽभेदोऽर्थ इति मते चैतत्। स्वार्थोऽभेद इति प्रकारतावादे तु लक्षणा सम्भवत्येवेति।

कतिपयशक्तिकल्पन इति—प्रथमाविभक्तीनामेकत्वादिषु शक्तिकल्पन इति। गौरवमकिञ्चित्करमिति—एकत्वद्वित्वबहुत्वेषु प्रथमाशक्तिकल्पनापेक्षयाऽनन्तघटपदनिष्ठशक्तिज्ञानतत्तदुपस्थितित्वेन कारणतायां गौरवमिति तत्त्वम्। तत्तदुपस्थितित्वेनेति—एकत्वाद्युपस्थितित्वेनेत्यर्थः। तदगृहीतवृत्तिकेति—तत्पदेनैकत्वादिः। प्रकृतेस्संख्यावाचकत्वन्निराकरोति मैवमित्यादिना। येषां पदानां लक्षणयैकत्वादिसंख्याविषयकशाब्दबोधजनकत्वं वादिद्वयसम्मतन्तत्र गौरवाऽभावेऽपि येषां लक्षणयैकत्वादिशाब्दबोधजनकत्वन्नोभयवादिसिद्धमस्ति तेषामनन्तत्वेन तज्जन्योपस्थितीनामप्यनन्तत्वेनानन्तकारणताकल्पनं संख्यायाः प्रकृत्यर्थत्वे स्यात्तदपेक्षया लाघवानुरोधेन

तज्जन्यविशिष्टविषयकोपस्थित्या विशिष्टविषयकशाब्दधीजननात्तथाविधोपस्थितिहेतुतायाः सर्वानुमतत्वात्। पदान्तरासमभिव्याहृताद्घट इत्यादिपदादेकत्वादिविशिष्टघटादिशाब्दबोधस्त्वलीक एव। तद्विषयकस्मरणस्य तत्रोपगमात्।

तथा चोक्तं सर्वं हि वाक्यं क्रियायां परिसमाप्यते इत्यपि निरस्तम्। यादृशपदानां लक्षणया एकत्वादिविशिष्टस्वार्थबोधहेतुत्वं नोभयवादिसिद्धं तादृशानन्तपदजन्यविशिष्टोपस्थितीनां शाब्दधीहेतुताकल्पनमपेक्ष्य विभक्तिजन्यसंख्योपस्थितीनामल्पानां तत्कल्पने लाघवात्। इदं पुनरिहावधेयम्। विभक्तेः संख्याबोधकत्वे समानविषयकानुमित्यादिकं प्रति शाब्दसामग्रीप्रतिबन्धकतायां या प्रातिपदिकजन्या घटाद्युपस्थितिर्या च विभक्तिजन्या संख्योपस्थितिः प्रवेश्या तयोश्च मिथो विशेष्यविशेषणभावे विनिगमनाविरहात्प्रतिबन्धकताबाहुल्यम्।

प्रकृतेर्विशिष्टलाक्षणिकत्वे तु तदुभयस्थलीयविशिष्टविषयकोपस्थितिरेकैव सामग्र्यामन्तर्भवति इति लाघवम्। न च विशिष्टविषयकोपस्थितेरपि एकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशेष्यतानिरूपितैकत्वादिविषयताशालित्वेन वा प्रवेश इति विनिगमनाविरहात्साम्यमिति वाच्यम्?

---

स्वादिविभक्तीनामेव संख्यायां शक्तिरित्याकूतम्।

विभक्तेस्संख्याबोधकत्वमते गौरवम्प्रकाशयति इदम्पुनरिहेति। विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं समानविषयकानुमितित्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम् इति नियमद्वयम्। एवञ्च घटादिपदनिष्ठस्वादिपदनिष्ठोपस्थितेश्च प्रतिबन्धकत्वमापद्येत। किञ्च तयोरुपस्थित्योः परस्परं विशेष्यविशेषणभावे विनिगमनाविकल्येन घटपदजन्यघटोपस्थितिविशिष्टविभक्तिजन्यसंख्योपस्थितेः प्रतिबन्धकत्वम्। एवं विभक्तिजन्यसंख्योपस्थितिविशिष्टघटपदजन्यघटोपस्थितेरपि प्रतिबन्धकत्वमेवं सर्वत्र बहुविधोपस्थितिप्रतिबन्धकत्वकल्पने गौरवम्। प्रकृतेरेव संख्याविशिष्टप्रकृत्यर्थघटादौ लक्षणाग्रहणे तु संख्याविशिष्टप्रकृत्यर्थविषयकोपस्थितिरेकैवास्तीति समानविषयकानुमितीतिनियमानुसारेण एकस्या एव प्रतिबन्धकत्वकल्पनाल्लाघवमिति तात्पर्येणाह प्रकृतेरिति।

नच संख्याविशिष्टघटविषयकोपस्थितिस्वीकारेऽपि विनिगमनाविरहेण संख्याप्रकारकघटविशेष्यकत्वेन घटादिविशेष्यकसंख्याप्रकारकत्वेन द्वैविध्यात् साम्यमित्याह नचेति।

भवन्मते संख्याया विभक्त्यर्थत्वमते शाब्दबोधसामग्र्यां योग्यताज्ञानस्य घटपदजन्यघटोपस्थितेर्विभक्तिजन्यैकत्वादिसंख्योपस्थितेश्च प्रवेश इति त्रयाणां विशेष्य-

भवन्मते योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कं, मन्मते तत्र योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं दर्शितोभयरूपेण वशिष्ट्यं निवेश्य तदुभयं प्रत्येकं तादृशरूपद्वयावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यं निवेश्य च द्वयमिति तच्चतुष्टयमात्रमितिरीत्यास्माकमल्पतरतत्कल्पने महालाघवम् ।

तादृशरीत्यैव च प्रणमतीत्यादौ प्रकर्षविशिष्टनतिर्धातूनामेवार्थः प्रादयो द्योतका एव न तु प्रकर्षादिवाचका इति सर्वानुमतः पन्थाः परिष्कर्तुं शक्यते । अन्यथानन्तधातुजन्यप्रकर्षादिविशिष्टतत्तत्स्वार्थोपस्थितीनां शाब्दाधीनजनकतामपेक्ष्य कतिपयोपसर्गाधीनप्रकर्षाद्युपस्थितीनां तज्जनकताकल्पने लाघवात् । स्वादीनामिव प्रादीनामपि वाचकता निराबाधा सिद्ध्येतेति संख्यायाश्च प्रकृत्यर्थे पर्याप्तिसम्बन्धेनैव विशेषणत्वं न तु समवायादिना । तथा सति एकव्यक्तिबोधनपरादाकाशशब्दादपि द्विवचनबहुवचनाद्यापत्तेः । तत्तदर्थयोर्द्वित्वबहुत्वयोः समवायादिना आकाशाद्यन्वययोग्यत्वात् ।

न च पर्याप्तेः संसर्गत्वेऽपि तद्दोषतादवस्थ्यम् । घटाकाशादौ द्वित्वादेः पर्याप्तिसत्त्वे प्रत्येकमाकाशादौ तत्पर्याप्तिर्नास्तीति वक्तुमशक्यत्वात् प्रत्येकस्योभयानतिरिक्तत्वादिति वाच्यम् ? उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गतोपगमात् । आकाशत्वादिव्याप्यताया द्वित्वादिपर्याप्तावसत्त्वेनातिप्रसङ्गविरहात् । वैशिष्ट्यं च वैज्ञानिकं न तु वास्तवम् ।

तेन यत्र योग्यताभ्रमजन्यः अत्राकाशावित्यादिवाक्यजन्यद्वित्वादिप्रकारकाकाशबोधस्तत्र विशिष्टसंसर्गाप्रसिद्धावपि न क्षतिः । द्वित्वादिपर्याप्तावन्यत्र प्रसिद्धस्याकाशत्वादिव्याप्यत्वस्य भ्रान्तेस्तत्रोपगमात् ।

---

विशेषणभावे विनिगमनावैकल्येन षट् प्रतिबध्यप्रतिबन्धकभावा भवन्ति । १ योग्यताज्ञानविशिष्टा या घटोपस्थितिस्तादृशघटोपस्थितिविशिष्टैकत्वोपस्थितेः प्रतिबन्धकत्वम् । २ योग्यताज्ञानविशिष्टा या एकत्वोपस्थितिस्तादृशैकत्वोपस्थितिविशिष्टघटोपस्थितेः प्रतिबन्धकत्वम् । ३ घटोपस्थितिविशिष्टं यद् योग्यताज्ञानन्तादृशयोग्यताज्ञानविशिष्टैकत्वोपस्थितेः प्रतिबन्धकत्वम् । ४ घटोपस्थितिविशिष्टा या एकत्वोपस्थितिस्तादृशैकत्वोपस्थितिविशिष्टयोग्यताज्ञानस्य प्रतिबन्धकत्वम् । ५ एकत्वोपस्थितिविशिष्टा या घटोपस्थितिस्तादृशघटोपस्थितिविशिष्टयोग्यताज्ञानस्य प्रतिबन्धकत्वम् । ६ एकत्वोपस्थितिविशिष्टं यद् योग्यताज्ञानन्तादृशयोग्यताज्ञानविशिष्टघटोपस्थितेश्च प्रतिबन्धकत्वम् ।

सम्बन्धतावच्छेदांशे प्रकारतायां भ्रमस्य सर्वानुभवसिद्धत्वेपि व्याप्यत्वांशे भ्रमत्वस्यान्यत्रोपपादितत्वात् । न च प्रकृत्यर्थतावच्छेदक एव व्यापकतासम्बन्धेन द्वित्वान्वयधीः किं नोपेयते इति वाच्यम् ? घटाविस्यादौ घटत्वादीनां स्वरूपत एवोपस्थिततया तत्रोक्तान्वयबोधस्यास-

---

न्मते इति—संख्यायाः प्रकृत्यर्थत्वमत इत्यर्थः । अत्र कल्पे प्रतिबन्धकताद्वयम् । यथा १ एकत्वादिप्रकारतानिरूपितघटादिविशेष्यकोपस्थितिविशिष्टयोग्यताज्ञानम्प्रतिबन्धकम् । २ घटादिविशेष्यतानिरूपितैकत्वादिप्रकारताकोपस्थितिविशिष्टयोग्यताज्ञानम्प्रतिबन्धकम् । ३ योग्यताज्ञानविशिष्टैकत्वादिप्रकारतानिरूपितघटादिविशेष्यकोपस्थितिः प्रतिबन्धिका । ४ योग्यताज्ञानविशिष्टघटादिविशेष्यतानिरूपितैकत्वादिप्रकारताकोपस्थितिः प्रतिबन्धिका । तथाच प्रतिबध्यप्रतिबन्धकभावे लाघवेन संख्या प्रकृत्यर्थ एवेति सिद्धम् ।

अत्र केचिद्विलक्षणाः

पूर्वोक्तरीत्या घटपटमठजलकुम्भादिप्रकृतयोऽनन्ताः । स्वादिविभक्तयश्चैकविंशतिसंख्याकाः । एवञ्चैकविंशतिस्वादिविभक्तिष्वेकत्वसंख्याशक्तिकल्पने लाघवम् । घटादिप्रकृतीनामनन्ताऽनन्तत्वेनानन्तशक्तिकल्पनायां महागौरवम् । एवन्धातुस्थलेऽपि धातूनामनन्तत्वेन तत्रैकत्वादिसंख्याशक्तिकल्पनापेक्षयाऽल्पसंख्याकतिबादावेकत्वादिसंख्याशक्तिकल्पने लाघवम् । किञ्च शक्तिवादे लाघवगौरवविवेके चिकीर्षिते शक्यतावच्छेदकं किं ? शक्ततावच्छेदकञ्च किमिति ? तयोः कुत्र लाघवं कुत्र गौरवम् इत्येव व्यवहारस्समीचीनः । घटपदाद्घटो बोद्धव्य इतिशक्तिज्ञानानन्तरं पदार्थबुद्धौ जातायाम्पश्चात्प्रतिबन्धकभावादिविचारकाले गौरवसत्त्वे भासमानेऽपि फलमुखगौरवन्न दोषावहमिति न्यायेन निरर्थकमेव गौरवम् ।

किञ्च घटः घटौ घटा इत्यादिष्वेकत्वद्वित्वबहुत्वविवक्षयैव स्वाद्युत्पत्तौ "द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनमि' तिसूत्रयो 'स्वौजसमौडि' तिसूत्रेण सहैकवाक्यतया कर्मत्वे द्वितीया कर्तृत्वे प्रथमेति प्रकारेण शक्तौ परिच्छिन्नायाम्पश्चात् प्रतिबध्यप्रतिबन्धकगौरवाणामकिञ्चित्करत्वात् । अतएव युक्तिबलेन शब्दस्यानित्यत्वे सिद्धे पश्चाज्जायमाना तद्ध्वंसप्रागभावादिकल्पनाऽकिञ्चित्करी । तथाच एकत्वादिसंख्या स्वादिविभक्तेरेवार्थ इत्युक्तवन्तः । अनयैव रीत्या नमूधात्वर्थो नतिः प्रकर्षरूपोऽर्थः प्राद्यर्थः इत्येव सिद्धान्तः । आकाशपदस्य लक्षणयाऽर्थान्तरबोधकत्वे द्विवचनाद्यन्तबोधस्येष्टत्वापत्तेराह—एकव्यक्तिबोधनपरादिति । वैज्ञानिकामति—ज्ञाने भासमानमित्यर्थः । उद्देश्यतावच्छेदकव्याप्यत्वनिष्ठावच्छेदकतानिरूपिता पर्याप्तिनिष्ठसंसर्गतेति फलितार्थः ।

विशिष्टसंसर्गोऽप्रसिद्धावपीति—आकाशत्वव्याप्यत्वविशिष्टपर्याप्तेरप्रसिद्धावपीति भावः ।

उपपादितत्वादिति—संसर्गांशे प्रकारविशेष्यभावभानन्न भवति यद्यपि तथापि

म्भवात् । स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वरूपपरंपराया एव प्रकृत्यर्थे द्वित्वादेः सम्बन्धतास्वीकारे च व्यापकतारूपसम्बन्धतावच्छेदकांशे भ्रमत्वस्यावश्यकतया उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः सम्बन्धतोपेक्षाया निर्बीजत्वात् ।

अथात्र व्याप्तिर्व्यापकसामानाधिकरण्यरूपैव वाच्या, न तु तद्वदन्यावृत्तित्वरूपा, केवलान्वयिधर्मस्य प्रकृत्यर्थतावच्छेदकता यत्र तत्राप्रसिद्धेः । एवं चोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्त्यपेक्षया लघोः स्वव्यापकतादृशधर्मवत्त्वस्यैव सम्बन्धत्वमुचितमिति चेत्तर्हि आकाशो न द्वावित्यादिवाक्यजन्यशाब्दबोधदशायामपि आकाशावित्यादिवाक्याद् द्वित्वबोधापत्तिः । तथा हि आकाशो न द्वावित्यादितो द्वित्वावच्छिन्नभेदः प्रतीयते । स च न स्वव्यापकाकाशत्ववत्त्वादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकः । तादृशसम्बन्धेन द्वित्ववतोऽप्रसिद्धेः अपि तु पर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताक एव । तत्काले च पर्याप्तिसम्बन्धेन द्वित्वविशिष्टबुद्धिरेव प्रतिबध्यते नतूक्तपरंपरासम्बन्धेन तद्विशिष्टबुद्धिरपीति । अथ "आकाशो न

---

विशेषणताविशिष्टविशेष्यताकज्ञानत्वरूपस्य भ्रमत्वस्योपपादितत्वादित्यर्थः । वैशिष्ट्यञ्चोक्तमेव । किञ्च तदभाववन्निष्ठविषयतानिरूपिततन्निष्ठविशेष्यताकत्वस्यैव भ्रमत्वेन संसर्गांशे संसर्गघटकांशे वा तादृशस्यैव सत्त्वेनाक्षतेः ।

नच संयोगेन पर्वतो वह्निमानित्यत्रापि भ्रमत्वापत्तिस्समवायसम्बन्धेन वह्न्यभाववत्त्वस्य पर्वते विद्यमानत्वाद् इति वाच्यम् ? विशेषणताविशिष्टविषयताकस्य विवक्षितत्वात् । विशेषणतावैशिष्ट्यञ्च स्वनिरूपितत्वस्वविशिष्टप्रतियोगिताकाभाववन्निष्ठत्वमित्युभयसम्बन्धेन । प्रतियोगितायां विशेषणतावैशिष्टचञ्च स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वोभयसम्बन्धेन । स्वं विशेष्यता ।

किञ्च स्वावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वैतदुभयसम्बन्धेन । अत्र स्वं विशेषणता ।

नचैवमपि कालिकसम्बन्धेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य पर्वते सत्त्वात्संयोगेन वह्निमान् पर्वत इतिज्ञानस्य भ्रमत्वन्दुर्वारमेवेति वाच्यम् ? द्वितीयसम्बन्धघटकाऽभाववन्निष्ठत्वेन । स्वाऽभाववत्ता च स्वनिरूपितप्रतियोगिताविशिष्टप्रकारतानिरूपितद्वित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वनिष्ठप्रकारतावच्छेदकसम्बन्धेन विवक्षिता । तथाविधस्वरूपसम्बन्धेन वह्न्यभाववत्त्वस्य पर्वते विरहान्नापत्तिः ।

प्रकारतायाम्प्रतियोगितावैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वानवच्छेदकाऽनवच्छिन्नत्वस्वानवच्छेदकसम्बन्धावच्छिन्नत्वैतत्त्रितयसम्बन्धेन । स्वमत्र प्रतियोगिता ।

द्वौ" इत्यादौ केवलपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदो नञा बोधयितुं न शक्यते, आकाशेऽप्युक्तयुक्त्या द्वित्वपर्याप्तेः सत्त्वेन तत्र तेन सम्बन्धेन तद्वद्भेदस्य वक्तुमशक्यत्वात् । आकाशत्वव्याप्यपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वादिमद्भेदश्चाप्रसिद्ध एवेति चेन्न ? द्वित्वादिपर्याप्तेरुभयादिवृत्तिधर्मेणैवावच्छेदात् तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन तद्वद्भेदस्य तेन सम्बन्धेन द्वित्वादिमद्भेदस्य च तद्वति वृत्तौ बाधकाभावात् । न चैवं घटपटौ न द्वाविति प्रयोग आपद्येत ? घटपटयोरपि प्रत्येकं द्वित्वावच्छिन्नभेदस्य बाधेन तादृशप्रयोगाभावोपपत्तेः । नञा व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदश्च उद्देश्यतावच्छेदकावच्छेदेनैव बोध्यत इति व्युत्पत्तेर्द्वित्वसामानाधिकरण्येन तदबाधस्याकिंचित्करत्वात् । न च घटत्वादेरतिप्रसक्ततया द्वित्वादिपर्याप्तेरनवच्छेदकत्वात्तदवच्छेदेन द्वित्ववद्भेदस्य भवतामप्यनुमतत्वात् प्रकृत्यर्थगतैकत्वाविवक्षायां घटो न द्वावित्यादिप्रयोगापत्तिरिति वाच्यम् ? तादृशप्रयोगाभावे घटत्वादेर्द्वित्वपर्याप्तेरिव द्वित्वादिमद्भेदस्याप्यनुयोगितावच्छेदकताया अप्रामाणिकत्वात्, प्रतियोगितावच्छेदकानवच्छेदकताया भेदावच्छेदकतानियतत्वासिद्धेः । अस्तु वातिप्रसक्तोऽपि घटत्वादिर्द्वित्वपर्याप्तेरवच्छेदकः घटाविन्यादिप्रतीतिबलात् ।

---

यत्र नानाधर्मावच्छिन्नविशेष्यतेति ।

ननु धवखदिरावित्यत्र धवत्वावच्छिन्ना विशेष्यता एका खदिरत्वावच्छिन्ना विशेष्यता अपरा इति कुत्रापि विशेष्यतायान्नानाधर्मावच्छिन्नत्वन्नास्तीति चेन्न ? धर्मांशे नानात्वेनान्यधर्मविशिष्टा यत्रैकत्वद्वित्वादिप्रकारतेति तदर्थः । प्रकारतायां धर्मवैशिष्ट्यञ्च स्वावच्छिन्नविशेष्यतानिरूपितत्वस्वभिन्नधर्मावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेन । स्वशब्देनात्र धर्मो ग्राह्यः । विशेष्यतायां नानात्वतात्पर्यविशेष्यताविशिष्टा यत्रैकत्वद्वित्वप्रकारतेति तदर्थः । वैशिष्ट्यञ्च स्वनिरूपितत्वस्वभिन्नकिञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेन । स्वं विशेष्यता । धवखदिरावित्यत्र एकस्या एव द्वित्वप्रकारताया धर्मद्वयावच्छिन्नविशेष्यतानिरूपितत्वेन क्षतिविरहात् ।

यत्रैकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवेति ।

ननु स्वत्वोद्रेककालाकाशगतत्रित्वादितात्पर्येण कालाकाशा इत्येवंविधप्रयोगस्य प्रामाण्यापत्तिस्त्रित्वसमवायस्य कालाकाशादौ विद्यमानत्वात्तत्र धर्मद्वयस्य त्रित्वोद्देश्यतावच्छेदकत्वाद् इति चेन्न ? यत्र नानाधर्मावच्छिन्नोद्देश्यताविशिष्टव्यासज्यवृत्तिनिष्ठैकविधेयता भवति तत्रैव केवलपर्य्याप्तेस्समवायस्य वा संसर्गतेति व्याख्यानात् ।

वैशिष्ट्यञ्च स्वनिरूपितावच्छेदकत्वावच्छिन्नाऽभाववद्वृत्तिनिष्ठत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन । अत्र स्वपदेनोद्देश्यता ।

वस्तुतस्तु घटत्वादेः प्रत्येकं द्वित्वपर्याप्त्यनवच्छेदकत्वेऽपि द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया तदवच्छिन्नावच्छेदकत्वमव्याहतमेव।

अथ पर्याप्त्याख्यविलक्षणसम्बन्ध एवाप्रामाणिकः तत्कथं तत्सम्बन्धता ? आकाशो न द्वाविति प्रतीतिस्तु समवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वावच्छिन्नभेदविषयिकैवास्ताम्। आकाशादौ द्वित्वसमवायसत्त्वेपि द्वित्वादेरेवोभयादिवृत्तिधर्ममात्रावच्छिन्नत्वोपगमात्तदनवच्छेदकाकाशत्वाद्यवच्छेदेन समवायसम्बन्धेन तद्वतो भेदस्य वृत्तौ बाधकाभावादिति चेन्न ? आकाशावित्यादिवाक्यजन्यशाब्दबोधस्याप्रमात्वानुपपत्त्यैव तादृशसम्बन्धसिद्धेः। तादृशबुद्धेः समवायविषयकत्वे प्रमात्वनिराकरणस्य कर्तुमशक्यत्वात्। उद्देश्यतावच्छेदकव्याप्तिविशिष्टसमवायस्य संसर्गतोपगमे घटावित्यादिवाक्यस्याप्यप्रमाणतापत्तिः। समवायस्यैक्येन घटादिनिष्ठस्य द्वित्वादिसमवायस्य पटादावपि सत्त्वेन घटत्वाद्यव्याप्यत्वात्। नचोद्देश्यतावच्छेदकव्याप्यद्वित्वादिसमवायत्वेनैव सम्बन्धतास्तु, द्वित्वादिसमवायस्य घटत्वाद्यव्याप्यत्वेपि द्वित्वादेस्तद्व्याप्यतया न घटावित्यादेरप्रमाणतेति वाच्यम् ? एवं सति तथाविधद्वित्वादेरेव लाघवेन द्वित्वादिसम्बन्धतौचित्यात्। अथास्त्वेवमेव तावतापि पर्याप्तिसम्बन्धस्य विलयादिति चेन्न ? द्वित्वादिस्वरूपस्यैव द्वित्वादिपर्याप्तितयाभिमतसिद्धेः। उक्तं च दीधितिकृता "पर्याप्तिश्चायमेको घट इमौ द्वावित्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष" इति। समवायस्य नानात्वमते च द्वित्वादिसमवाय एव तत्पर्याप्तिर्न तु स्वरूपमतिरिक्तपदार्थो वेत्यन्यदेतत्। यत्तु "आकाशं न द्वे" इत्यादिप्रतीतिवदाकाशं न द्वित्ववदिति प्रतीतेः प्रमात्वस्य वारणाय समवायेन द्वित्वादिमद्भेद आकाशत्वावच्छेदेन न स्वीकर्त्तव्यः।

---

एवञ्च कालत्वाकाशत्वोभयधर्मावच्छिन्नोद्देश्यतानिरूपितावच्छेदकताश्रयसामान्याऽभाववद्दिङ्निरूपितवृत्तित्वस्य त्रित्वे सत्त्वेन त्रित्वनिष्ठविधेयतायां तद्वृत्तित्वसत्त्वान्निरुक्तसम्बन्धाऽभावात्केवलायाः पर्याप्तेस्समवायस्य च संसर्गत्वाऽभावात्।

नचोद्देश्यभेदेनोद्देश्यताया भिन्नत्वमिति पक्षे धवखदिरादौ दोषाः पूर्वोक्तयुक्तेरिति वाच्यम् ? स्वनिरूपितविधेयतानिरूपितोद्देश्यतावच्छेदकताश्रयसामान्याऽभाववद्वृत्तिनिष्ठत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन वैशिष्ट्यम्। द्वित्वनिष्ठविधेयतानिरूपितत्वेन धवत्वावच्छिन्नखदिरत्वावच्छिन्नोद्देश्यत्वयोरनुगमे क्षतिविरहात्।

नच प्रमेयाकाशावित्यत्र केवलप्रमेयावित्यत्र च दोष उद्देश्यतावच्छेदकस्य केव-

तथा च पर्याप्तविलक्षणत्वे आकाशो न द्वे इत्यादिप्रतीतेरप्यप्रमात्वापत्तिरिति, तन्न ? आकाशं न द्वित्ववदिति प्रतीतौ द्वित्वसमवायावच्छिन्नभेद एव विषयः मतुपा सम्बन्ध्युल्लेखात्, न तु द्वित्वाद्यवच्छिन्नभेदः । एवं चाकाशत्वाद्यवच्छेदेन द्वित्वाद्यवच्छिन्नभेद एव स्वीकर्त्तव्यः । न तु तत्सम्बन्धावच्छिन्नभेद इत्याकाशं न २ इति प्रतीतेरप्रमात्वस्याकाशं न द्वित्ववदिति प्रतीतेर्वा प्रमात्वस्य न प्रसङ्ग इति ।

अथोद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वित्वसम्बन्धत्वे धवखदिरौ छिन्नत्तीत्यादौ उद्देश्यतावच्छेदकीभूतधवत्वखदिरत्वव्याप्यं द्वित्वादिद्वयमेव प्रत्येतव्यं न तु धवखदिरादिपर्याप्तद्वित्वादिकं, तथा चैकैकधवखदिरादितात्पर्येण तथा प्रयोगानुपपत्तिरिति द्वित्वान्वयितावच्छेदकमपेक्षाबुद्धिविशेषविषयत्वादिरूपमुभयादिनिष्ठं साहित्यं द्वन्द्वसमासार्थो वाच्यः । तथा च मीमांसकमतप्रवेश इति चेन्न ? यत्र एकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमः । यत्र धर्मद्वयादेस्तथात्वं तत्र केवला पर्याप्तिः समवाय एव वा संसर्ग इत्युपगमाद्, विनैव साहित्यस्यान्वयितावच्छेदकताम् एकैकतात्पर्येण धवखदिराविल्यादिप्रयोगोपपत्तेः ।

नचैवमेकैकधवखदिरादितात्पर्येण धवौ खदिरावित्यादिप्रयोगापत्तिः । तादृशवाक्यद्वयविषयकसमूहालम्बनजन्यसमूहालम्बनशाब्दबोधस्य नानाधर्मावच्छिन्नोद्देश्यताकतया शुद्धपर्याप्तेरपि संसर्गतयाऽवगाहनसम्भवादिति वाच्यम् ? यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकद्वित्वादिप्रकारता तत्रैव शुद्धायाः पर्याप्तेः समवायस्य वा संसर्गतया भानाद्, धवौ खदिरावित्यादिनानावाक्यजन्यसमूहालम्बनशाब्दबोधे विशेष्यताभेदेन प्रकारताभेदेन चोद्देश्यतावच्छेदकधवत्वादिव्याप्ति-

---

लान्वयितया तदभावस्याऽप्रसिद्धत्वेन तादृशसम्बन्धस्याऽप्रसिद्धत्वाद् इति वाच्यम् ? स्वविशिष्टोद्देश्यतानिरूपितत्वसम्बन्धेन वैशिष्ट्यम्, उद्देश्यतायामुद्देश्यतावैशिष्ट्यञ्च स्वनिरूपितविधेयताश्रयव्यापकतावच्छेदकतानिरूपितत्वसम्बन्धेन । व्यापकतावच्छेदकतायां स्वाश्रयवत्तासम्बन्धेन । तथाच प्रमेयत्वनिष्ठावच्छेदकतायां स्वाश्रयप्रमेयवत्तासम्बन्धेन द्वित्वव्यापकत्वस्य विद्यमानत्वेन नाऽप्रसिद्धतेति वर्णनात् ।
अत्रास्मद्गुरवः

यत्रोद्देश्यतावच्छेदकतापर्याप्तिवृत्तित्वमुद्देश्यतावच्छेदकव्याप्यपर्याप्तेस्तत्रैव संसर्गता । यत्र न पर्याप्तेरुद्देश्यतावच्छेदकाधिकरणत्वन्तत्र केवलपर्याप्तेरेव संसर्गता ।
वृत्तित्वञ्च स्वनिरूपकोद्देश्यतावच्छेदकताश्रयवदन्यवृत्तित्वसम्बन्धेन । धवखदिरा-

विशिष्टपर्याप्तेः संसर्गतानियमेन एकैकधवखदिरादितात्पर्येण तथा प्रयोगासम्भवात्। धवखदिरावित्यादिसमासोत्तरद्विवचनेन धवत्वखदिरत्वाद्यवच्छिन्ननानाविशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालि ज्ञानमेव जन्यते। तादृशवाक्यजन्यबोधस्य समूहालम्बनानात्मकतया विशेष्यताभेदेन प्रकारताभेदाभावात्। यथा हि समूहालम्बनानात्मके खड्गी चैत्रः कुण्डलीत्याकारकनानाविशेषणकैकविशेष्यकज्ञाने नानाप्रकारतानिरूपिता एका विशेष्यता तथा तथाविधे धवखदिरावित्याद्याकारके नानाविशेष्यकैकविशेषणकज्ञाने विशेष्यताभेदेऽप्यभिन्नैव द्वित्वादिप्रकारता, अन्यथा समूहालम्बनतस्तद्वैलक्षण्यानुपपत्तेः। समासघटकधवखदिरादिपदानामेकवाक्यतानुपपत्तेश्च। तत्प्रयोज्यविषयतया साक्षात्परम्परया वा निरूपिता या विषयता तत्प्रयोजकत्वस्यैव तदेकवाक्यतापदार्थत्वात्।

न चैतादृशैकवाक्यताविरहेऽपि क्षतिविरहः ? तथा सति समासस्यैवानुपपत्तेः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राजपुरुषपदादीनां समासवारणाय समर्थपदानामेव समासानुशासनात् सामर्थ्यस्य च निरुक्तैकवाक्यतारूपत्वात्। जलपृथिव्योः स्नेहगन्धावित्यादितोऽपि न 'जले स्नेहः, पृथिव्यां गन्धः, इत्याकारकसमूहालम्बनबोधः। किन्तु तद्विलक्षणो द्वित्वादिनिष्ठैकप्रकारतानिरूपितजलत्वपृथिवीत्वाद्यवच्छिन्नविशेष्यतात्मकप्रकारताद्वयनिरूपिताधेयत्वप्रकारतानिरूपितं यद्धर्मितावच्छेदकद्वित्वादिनिष्ठैकप्रकारतानिरूपकं स्नेहत्वगन्धत्वाद्यवच्छिन्नविशेष्यताद्वयं तद्वानिति, अतो न कुत्राप्येकवाक्यताभङ्गः।

चैत्रो मैत्रश्च गच्छत इत्यादावाख्यातार्थद्वित्वादिप्रकारेण भासमाने चैत्रमैत्रोभयादौ गमनाश्रयत्वाद्यन्वयेन निरुक्तैकवाक्यतासंभवेपि समासविधेर्विभाषाधिकारीयत्वादसमासः। तत्र विशेष्यताभेदभिन्नद्वित्वनिष्ठप्रकारताद्वयप्रतियोगी समूहालम्बनात्मकबोध इति तु न सम्यक् ?

---

वित्यत्रोद्देश्यताया धर्मद्वयावच्छिन्नत्वेऽपि वस्तुत एकैवेति उद्देश्यतोभयवृत्तिरेकैव। तदवच्छेदकताश्रयवदन्य एव न धवो न खदिर इतिकेवलपर्याप्तेस्संसर्गत्वे न कोऽपि विवादः।

आकाशावित्यत्र उद्देश्यतावच्छेदकतानिरूपकोद्देश्यता आकाशवृत्तिः, तदवच्छेदकताश्रयवदन्यो घटादिस्तद्वृत्तित्वद्वित्वपर्याप्तेरिति उद्देश्यतावच्छेदकव्याप्यपर्याप्तेस्संसर्गत्वेनाकाशावित्यत्र द्वित्वान्वयबोधाऽभाव इत्याहुः।

जलपृथिव्योः स्नेहगन्धाविति।

जलपृथिव्योः स्नेहगन्धावित्यादिवाक्ये जले स्नेहः पृथिव्यां गन्ध इत्याकारक-

तथा सत्युक्तयुक्त्या एकैकचैत्रमैत्रादितात्पर्येण तथाप्रयोगानुपपत्तेः। आख्यातोपस्थापितद्वित्वादिकं चोभयादिरूपान्वयितावच्छेदकावच्छिन्न एवान्वेतीति व्युत्पत्तिः। तेनोक्तप्रयोगदर्शनात् क्रियापदस्य विशेष्यवाचकपदसमानवचनकत्वानियमेऽपि घटद्वयादितात्पर्येण घटस्तिष्ठतः इत्यादयो न प्रयोगाः। एकवचनान्तं क्रियापदं च तादृशविशेष्यवाचकपदप्रयोग एव साधुः। घटास्तिष्ठतीत्यादयो न प्रयोगाः।

अथैकघटादिव्यक्तेरेतद्देशवृत्तितादशायामत्र घटौ स्तः घटाः सन्तीति कथं न प्रयोगाः, घटादौ पटत्वादिव्याप्तिविशिष्टपर्याप्तिसम्बन्धेन द्वित्वादेः स्वरूपादिसम्बन्धेन तद्देशवृत्तित्वाश्रयत्वादेश्च सत्त्वात्। न च द्वित्वेनोपस्थितयोर्द्वयोरेव व्यक्त्योरेवं बहुत्वेनोपस्थितासु बहुषु व्यक्तिषु विधेयान्वयाद् व्यक्त्यन्तरेष्वेतद्देशवृत्तित्वाश्रयत्वादिबाधान्न तादृशप्रयोग इति वाच्यम्?

व्यक्त्यन्तरेऽयोग्यतया तादृशविधेयानवगाहिन एकघटे तदवगाहिनो बोधस्योत्पत्तौ बाधकाभावात्। तथा तात्पर्येण तथा प्रयोगस्य दुर्वारत्वात्।

न च व्यासज्यवृत्तिधर्मो यत्रान्वयितावच्छेदकस्तत्र यावत्सु अन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणान्वय इति व्युत्पत्तिस्तन्निर्वाहाय च तादृशधर्मावच्छिन्न इतरान्वयबोधजनकसामग्र्या उभयादिविषयकपदार्थान्तरान्वयबुद्धित्वमेव जन्यतावच्छेदकं वक्तव्यमिति द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वाद्यन्वयबोधो न संभवतीति

समूहालम्बनात्मक एव बोधः। परम्परयाऽपि जलपदप्रयोज्यगन्धपदप्रयोज्यविषयतयोर्निरूप्यनिरूपकभावो नास्त्येवञ्च सामर्थ्याऽभावात्कथं समास इत्याशयेनाह जलपृथिव्योरिति।

ननु चैत्रो मैत्रश्च गच्छत इत्यादावपि पूर्वोक्तप्रकारेण चैत्रमैत्रपदयोस्सामर्थ्यसत्त्वेन द्वन्द्वसमास एव आपतेत्। एवञ्च चैत्रमैत्रौ गच्छत इत्येव प्रयोगो युक्त इत्याशयवानाह चैत्रो मैत्रश्चेति। विभाषाधिकारेण समासस्य वैकल्पिकत्वेन चैत्रो मैत्रइतिप्रयोगस्याऽपि सौष्ठवात्।

अथैकघटादिव्यक्तेरिति।

द्वित्वेनोपस्थितयोरित्यस्य शाब्दबोधे द्वित्वप्रकारेण भासमानयोरित्यर्थः। तथाप्रयोगस्येति। एकस्मिन् घटे एतद्देशवृत्तित्वान्वयतात्पर्येणात्र घटौ स्तः घटास्सन्तीति प्रयोगस्येति मानसम्। तादृशधर्मावच्छिन्न इति व्यासज्यवृत्तिधर्मावच्छिन्न इत्याशयः। बुद्धित्वमेव जन्यतावच्छेदकमिति—तथाचोभयत्वाश्रयीभूतयत्किञ्चिद्विशेष्यकपदार्थान्तरान्वयबुद्धित्वावच्छिन्नम्प्रति तादृशबोधसिद्धये कारणाऽभावान्न

न तादृशबोधतात्पर्येण तादृशप्रयोगापत्तिरिति वाच्यम् ? योग्यताभ्रमेणाकाशावन्न स्त इत्यादिवाक्याद् द्वित्वादिना एकव्यक्तिमात्रविषयकपदार्थान्तरान्वयबोधात्तादृशव्युत्पत्तेस्तन्निर्वाहककार्यकारणभावस्य च कल्पनासंभवात् । यत्तु द्वित्वाद्यवच्छिन्नोद्देश्यताकबुद्धावुद्देश्यतावच्छेदकव्यापकता नियमतो विधेयसंसर्गे भासते इति व्युत्पत्तिः,

यत्र चोद्देश्यतावच्छेदकविशिष्टाधिकरणाप्रसिद्ध्या तद्व्यापकत्वमप्रसिद्धम् तत्रापि खण्डशः प्रसिद्धानां तत्तद्घटकपदार्थानां विशेष्यविशेषणभावापन्नानां भानसंभवान्न पीतशङ्खावन्नेत्यादौ तादृशव्युत्पत्तिभङ्गः।

एवं चैकघटादिव्यक्तिमात्राधिकरणपरस्यात्र घटौ स्त इत्यादिवाक्यस्याप्रामाण्यं सुघटमेव, उद्देश्यतावच्छेदकीभूतघटमात्रवृत्तिद्वित्वव्यापकतायास्तादृशवाक्यप्रतिपाद्याया विधेयसंसर्गे बाधादिति। तदपि तुच्छम् ? अत्र घटौ स्त इत्यादौ द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य च तदधिकरणावृत्तिघटादिनिष्ठाभावप्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गतावच्छेदके बाधाद् घटद्वयाधिकरणपरतादृशवाक्यस्याप्रामाण्यापत्तेः। तत्तद्द्वित्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य तत्तद्विधेयसंसर्गांशे भानोपगमस्तु न सम्भवति ? तत्तद्द्वित्वत्वेनानुपस्थितेः। न च तदवच्छिन्नस्य संसर्गतया भाने तेन रूपेणोपस्थितिर्नोपेक्ष्येति वाच्यम् ? तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधपरमित्याकारकतात्पर्यज्ञाने संसर्गस्य विशेषणतया तद्भाननिर्वाहाय संसर्गघटकोपस्थितेरपि शाब्दबोधात्प्रागावश्यकत्वात्। प्रकृतसंसर्गेण एकपदार्थविशिष्टापरपदार्थबोधपरत्वज्ञानस्य प्रकृतवाक्यार्थविषयकतया प्रागसम्भवेनोपदर्शिततात्पर्यज्ञानस्यैव शाब्दधीहेतुत्वोपगमात्। एवं वाक्यार्थघटकसंसर्गस्याननुगमे घटौ स्त इत्यादौ वाक्यभेदप्रसङ्गाच्च।

अत्रोच्यते—व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्या-

---

तदुत्पत्तिसत्त्वाच्चेति हृदयम्। खण्डश इति—एवञ्च निरूप्यनिरूपकभावाऽऽपन्नविषयतानिरूपितत्वस्य संसर्गतायां विद्यमानत्वेनानुपपत्तिविरहात्।

नन्वस्तु तात्पर्यज्ञानस्य हेतुत्वं परन्तु तत्तद्द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य संसर्गविधया विधेयप्रतियोगिकसंसर्गे प्रतीतौ सत्यां वाक्यभेदो भविष्यत्येवेत्यत आह एवमिति। संसर्गताभेदेऽपि वाक्यभेदो भवति उद्दे-

प्यताद्दशधर्मवत्त्वमपि विधेयसंसर्गतया भासते इति व्युत्पत्तिः।

व्याप्यत्वं च तद्वदन्यावृत्तित्वं व्यतिरेकिविधेयस्थले। तादृशधर्मवत्त्वं चोद्देश्यतावच्छेदकताघटकसम्बन्धेन बोध्यम्। अत्र घटौ स्त इत्यादौ एतद्देशवर्त्तमानत्वादिरूपविधेयस्य तद्वदन्यावृत्तित्वरूपव्याप्तिमच्चैतद्देशस्थैकघटादिव्यक्तिमात्राधिकरणत्वे घटपटादिनिष्ठद्वित्वमेव घटत्वव्याप्यपर्याप्तिरूपोद्देश्यतावच्छेदकताघटकसम्बन्धावच्छिन्नतद्वत्त्वं च घटादौ बाधितमिति न तादृशवाक्यस्य प्रामाण्यम्। अधिकरणस्य घटद्वयादिमत्त्वे च घटत्वादिव्याप्यं द्वित्वमेव तथेति घटत्वादिव्याप्यपर्याप्तिसम्बन्धेन तद्वत्त्वं घटादावबाधितमिति तादृशवाक्यस्य प्रामाण्यंनिर्वहति

केवलान्वयिविधेयकस्थले च द्वित्वत्वाद्यवच्छिन्नव्यापकत्वमेव संसर्गघटकम्। केवलान्वयिनि तादृशव्यापकताया अक्षतत्वात्, न तु तत्तद्द्वित्वत्वावच्छिन्नव्यापकत्वमिति न पूर्वोक्तदोषावकाशः। घटावानयति चैत्र इत्यादौ चैत्रकर्तृकानयनकर्मत्वादिव्याप्यद्वित्वादिमन्निष्ठनिरूपकताकाधेयत्वादिसम्बन्धेन कर्मत्वादौ घटादेरन्वयोऽव्युत्पन्नः। तेन चैत्रादौ एकघटादिव्यक्तिमात्रानयनकर्तृत्वे न तादृशप्रयोगः।

द्वित्वादिमत्त्वं च प्रकारतावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसम्बन्धेन। तेन चैत्रस्य पटादिसहितैकघटादिव्यक्त्यानयनकर्तृत्वेऽपि न तादृशप्रयोगः। एवमन्यत्राप्यूहनीयम्।

यत्रानेकवृत्तिधर्मो द्वित्वान्वयितावच्छेदकतया भासते तत्रोभयादि-

---

श्यविधेयभावभेदवत्। संसर्गता च अवच्छेदकभेदाद् भिद्यते। एवञ्च तत्तद्द्वित्वनिष्ठावच्छेदकतया परम्परया निरूपितायास्संसर्गताया अपि भेदाद् वाक्यभेदः प्रसिद्ध एवेत्याशयः। व्यतिरेकिविधेयस्थल इति, केवलान्वयिविधेयस्थल इति वक्ष्यमाणग्रन्थः।

नन्वेकघटविशिष्टदेशेऽपि अत्र घटौ स्त इति प्रयोगापत्तिर्दुर्वारा, देशान्तरीयघटेऽपि एतद्देशवृत्तित्वव्याप्योद्देश्यतावच्छेदकवत्त्वस्य प्रसिद्धकालिकसम्बन्धेन विद्यमानत्वादित्याशयेनाह तादृशधर्मवत्त्वञ्चेति।

एवमन्यत्राऽप्यूहनीयमिति।

घटावानयति चैत्रःपटावानयति विष्णुमित्र इत्यादौ चैत्रादिकर्तृकानयनकर्मत्वव्याप्यबहुत्ववन्निष्ठनिरूपकताकाऽऽधेयत्वसम्बन्धेन कर्मत्वादौ घटादेरन्वय ऊहनीय इति तात्पर्य्यम्। यत्राऽनेकवृत्तिधर्म इति अत्राकाशावित्यादौ योग्यताभ्रमवशाद् भ्रमात्मकबोधस्सार्वजनीनस्तत्रानेकवृत्तिधर्मस्योद्देश्यतावच्छेदकत्वाऽभावात्तत्संग्रहानाऽऽपत्ति-

नैव समं पदार्थान्तरस्यान्वयः। यत्रैकमात्रवृत्तिस्तथा तत्रैकेनापि व्युत्पत्तिभेदावलम्बनात्कार्यकारणभाववैचित्र्याच्च सर्वं समञ्जसमित्यपि वदन्ति।

अथ घटादिव्यक्तिभेदेनानयनकर्मता भिन्नेति प्रतिसन्दधानस्य पुंसो घटावानयतीति वाक्याच्छाब्दबोधानुपपत्तिः। तस्य कर्मतात्वावच्छेदेनाधेयतासंसर्गावच्छिन्नप्रतियोगिताकस्य द्वित्वाद्यवच्छिन्नघटाद्यभावस्य निश्चयसंभवात्। तस्य द्वित्वादिना तादृशसंसर्गकघटादिविशिष्टधीविरोधित्वादिति चेन्न? उभयत्वाद्यवच्छिन्नाभाववत्ताज्ञानमुभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहि ज्ञानमेव प्रतिबध्नाति न तु केवलं विशेष्ये विशेषणमिति रीत्या जायमानमुभयत्वादिविशिष्टज्ञानम्।

अतो विशेषदर्शिनां तादृशवाक्याद्दोषायत्तमाधेयत्वांशे उभयत्वाद्यवच्छिन्ननिरूपितत्वावगाहि भ्रमात्मकज्ञानं न भवत्येव। अपि तु तदंशे तदनवगाहि प्रमात्मकं ज्ञानमिति उभयत्वावच्छिन्ननिरूपिताधेयत्वं चोभयादिवृत्तावेकस्मिन्धर्मे एव न तु प्रत्येकमात्रवृत्ताविति कर्मत्वांशे तादृशाधेयत्वावगाहिज्ञानस्य भ्रमत्वमित्यवधेयम्।

संख्याश्च प्रकृत्यर्थतावच्छेदकगताः क्वचित्प्रतीयन्ते। सम्पन्नौ व्रीहि-

---

रित्याशयेनाह यत्रैकमात्रवृत्तिधर्म इति।
कार्यकारणभाववैचित्र्यादिति।

ननु कीदृशमत्र कार्यं कारणभाववैचित्र्यम् द्वित्वविशिष्टेतद्देशवृत्तित्वप्रकारकघटविशेष्यकान्यपदार्थान्वयबुद्धित्वावच्छिन्नम्प्रति अत्र भूतले गृहे देशे इत्यादिसप्तम्यन्तपदसमभिव्याहृतद्विवचनान्तघटपदज्ञानं कारणम्। तथा द्वित्वावच्छिन्नाकाशनिष्ठविशेष्यताकान्यपदार्थप्रकारकान्वयबुद्धित्वावच्छिन्नम्प्रति अत्र गृहे भूतले इत्यादिसप्तम्यन्तपदसभिव्याहृतद्विवचनान्ताकाशपदज्ञानं कारणम्। एवञ्चैकघटविशिष्टे देशे अत्र घटौ स्त इति न प्रयोगः। अत्राकाशाविति प्रयोगसिद्धिश्चेति तात्पर्यम्।

विशेषदर्शिनामिति—व्यक्तिभेदेन कर्मत्वम्भिन्नमितिनिश्चितज्ञानवतामित्यर्थः। नन्वेवं सिद्धान्ते "पदार्थःपदार्थेनान्वेति न तु पदार्थैकदेशेनेति" पूर्वोक्तव्युत्पत्तिविरोध इत्याशयवानाह एतत्तत्त्वम्प्रागेवाऽभिहितमिति-वेदाःप्रमाणं स्मृतयः प्रमाणमिति शाब्दबोधविचारप्रकरण इत्यर्थः।

---

एकमात्रवृत्तित्वञ्च—स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वम्। यथा आकाशत्वस्य। अत्र भेदश्च व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन विशेषणीयः। स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्यैतदुभयसम्बन्धेन भेदविशिष्टान्यत्वम् बोध्यम्। आकाशत्वादेर्जातित्वे 'व्यक्तेरभेद' इत्युदयनाचार्यव्याख्यानुसारेण बाधकञ्चैतत्।

यथावित्यादौ। एतत्तत्त्वं प्रागेवाभिहितम्। विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेति। यथा शतमेकं द्वे शते त्रीणि शतानीत्यत्र शतत्वादौ एकत्वद्वित्वबहुत्वानामन्वयः। अत एव च एकशतद्विशततात्पर्येण न शतानीति प्रयोगः। तत्र प्रकृत्यर्थस्य शतस्य बहुत्वाद्यन्वययोग्यत्वेऽपि प्रकृत्यर्थतावच्छेदकशतत्वांशे बहुत्वाद्यन्वय एव बहुवचनस्य साकाङ्क्षत्वात्। तत्र च योग्यताविरहात्। नचैकशतेऽपि नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वसंभवादेकशतनिष्ठशतत्वेऽपि बहुत्वान्वययोग्यताऽक्षतैवेति वाच्यम्? परस्परसमानाधिकरणद्वयावृत्तिबहुत्वस्यैव शतादिपदोत्तरबहुवचनार्थत्वात्। तादृशबहुत्वस्य चैकशतादिवृत्तिनानाशतत्वादौ बाधात्। अथ वा तत्रापि बहुत्वमेव बहुवचनार्थः। परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिरेवाकाङ्क्षानिरूपकः सम्बन्धः। यत्तु द्वे शते त्रीणि शतानीत्यादौ संख्यैव शतादिशब्दार्थः, न तु संख्येयं, संख्येयस्य तदर्थत्वे "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययो" रित्यनुशासनविरोधात् द्विवचनादिसाधुतानुपपत्तेः, गवां शतानीत्यादौ षष्ठ्यर्थान्वयानुपपत्तेश्च।

न चाभेदः षष्ठ्यर्थः, तथा सति ब्राह्मणा दश इत्यत्र ब्राह्मणानां दशेत्यपि स्यात्। अस्माकं चादशतः सङ्ख्याः सङ्ख्येये वर्त्तन्ते, अतः परं सङ्ख्याने सङ्ख्येये चेत्यनुशासनाद्दशादिशब्दानां शतादिशब्दवत्सङ्ख्यानार्थकत्वाभावाद्दशत्वादिसङ्ख्यायाः पदार्थतावच्छेदकत्वेन तत्र षष्ठ्यर्थसम्बन्धान्वयासम्भवेन न तथा प्रयोग इति। तदसत्। गवां शतानीत्यादौ संख्यायाः प्राधान्येन शतादिशब्दवाच्यत्वे गवां शतं दद्यादित्यादौ शतादिपदार्थस्य संख्याया दानादिकर्मत्वान्वयायोग्यतया प्रामाण्यानुपपत्तिः। गवां शतं शुक्लमित्यादौ संख्यायां शुक्लाद्यभेदान्वययोग्यताविरहात्तदनुपपत्तिश्च। तस्माद्दशादिशब्दा इव शतादिशब्दा अपि संख्यावच्छिन्नवाचका एव न तु धर्मिविशेषणतानापन्नसङ्ख्यावाचकाः। स्वार्थैकदेशेऽपि सङ्ख्यायां स्वप्रकृतिकविभक्त्यर्थसङ्ख्यान्वयसाकाङ्क्षतयान्यप्रकृतिकषष्ठ्यर्थसम्बन्धान्वयसाकाङ्क्षतया तेषां सङ्ख्यानार्थकताप्रवादः, न तु दशादिशब्दानां तथात्वं दशादिब्राह्मणतात्पर्येण ब्राह्मणानां दशेत्यादिप्रयोगविरहादिति तेषां संख्येयमात्रवाचिताप्रवाद इति 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः। संख्यायां द्विबहुत्वे स्त" इत्यनु-

---

आदशतस्संख्या इति—संख्यावाचकाश्शब्दा इत्याशयः। संख्येये इति-

शासनमप्युक्तार्थे तात्पर्यग्राहकम् । एकद्विबहुशब्दोत्तरैकवचनद्विवचन-बहुवचनानि च न संख्याबोधकानि, उद्देश्यतावच्छेदकविधेययोरैक्येनैकत्वान्वये आकाङ्क्षाविरहादिति, तदुत्तरप्रथमाविभक्तिः प्रयोगसाधुतामात्राय । नित्यबहुवचनान्तावार्दिशब्दपरं प्रथमाबहुवचनमपि किंचिन्निरर्थकमेव, अत्रैकव्यक्तिमात्रतात्पर्येण तादृशशब्दः प्रयुज्यते तत्र बहुत्वान्वये योग्यताविरहात् । यत्तु तद्गतगुणादिसाधारणबहुत्वस्य तत्रान्वय इति । तन्न शोभनम् ? प्रकृत्यर्थतावच्छेदकव्याप्यपर्याप्तिसम्बन्धेनैवानेकवृत्तिसंख्यान्वयस्य व्युत्पन्नतया तादृशसम्बन्धेन तथाविधबहुत्वान्वये योग्यताविरहात् । अन्यथोदासीनघटपटादिसाधारणबहुत्वस्याप्यन्वयसम्भवेन तद्गतगुणादिसाधारणबहुत्वानुधावनस्याकिञ्चित्करत्वात् । अथाजहत्स्वार्थलक्षणया गुणादिसाधारणधर्मावच्छिन्न एव प्रकृत्यर्थ इति चेत्तर्हि बहुत्वेन भासमानेषु गुणादिष्वपि पदार्थान्तरान्वयः स्यात् । तथा चापो द्रव्याणि, दारा अत्र गृहे सन्तीत्यादिवाक्यानामप्रमाणतापत्तिः । गुणादिषु द्रव्याभेदे गृहवृत्तितादेर्बाधात् । मुख्यार्थमात्रपरतादृशशब्दानां बहुवचनान्ततानुपपत्तेश्चेति न किंचिदेतत् । अबादिपदार्थे एकत्वद्वित्वान्वययोग्यतासत्त्वेऽप्यसाधुत्वादेव तदुत्तरमेकवचनं न प्रयुज्यते इति ध्येयम् ।

आख्यातैकवचनस्य संख्यार्थकत्वे विवदन्ते निष्कर्षानुसारिणः । घटोऽस्तीत्यादौ सुपैकवचनादेव संख्याबोधसंभवात् चैत्रेण दृष्टो घट इत्यादिस्थलानुरोधेन तस्य तद्बोधकताया आवश्यकत्वात् । न चैकवचनत्वेनानुगतेनैकत्वशक्तत्वात्तिङेकवचनस्याप्येकत्ववाचकत्वमक्षतमिति वाच्यम् ? एकवचनत्वस्यैकत्वशक्ततावच्छेदकतायाः प्रागेव निराकृतत्वात् । अस्तु वा तेन रूपेण तिङेकवचनस्याप्येकत्वे शक्तिस्तथापि तज्जन्यैकत्वोपस्थितेः शाब्दबोधोपयोगित्वे मानाभावः । न हि सामान्यत एकवचनज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुतासम्भवः । तथा सत्येकत्वेऽगृहीतसुपदवृत्तिकस्य पुंसः सुपदप्रकृतिघटादिपदोपस्थाप्यघटादौ पटादिपदोपस्थाप्यैकत्वाद्यन्वयबोधप्रसङ्गः किन्तु सुपदत्वादिप्रकारकज्ञानजन्यतदुपस्थितित्वादिनैव ।

तथा सति घटादिपदोत्तरसुपदत्वादिरूपानुपूर्वीविशेषरूपाकाङ्क्षा-

---

संख्याविशिष्ट इत्यर्थः । आख्यातैकवचनस्येति—नन्वयम्विचार आख्यातार्थविचारप्रकरण एव युक्ततर इति यद्यपि वक्तुं शक्यते तथापि स्वर्थतिवर्थविचारानुरोधेनात्र विचार इत्यभिधानात् ।

तादृशाऽपत्तेरिति—एको घटोऽस्तीतिशाब्दबोधाऽपत्तेः । यत्त्विति—अस्य

नघटितायां घटादावेकत्वान्वयबोधस्य सामग्र्यां सुपदत्वादिप्रकारकधीजन्योपस्थितेरन्तर्भावात्तादृशापत्तेरनवकाशात्। एवं तिबादिपदत्वप्रकारकज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुत्वे मानाभाव इति।

यत्तु तिबादेः संख्यानभिधायकत्वे चैत्रः पचति तण्डुलं चैत्रेण पच्यते तण्डुल इत्यादौ कर्तृकर्मवाचकपदात्तृतीयाद्वितीययोरापत्तिः। कर्तृकर्मगतसंख्याया अनभिधाने 'कर्तृकरणयोस्तृतीये' ति "कर्मणि द्वितीये" ति सूत्राभ्यां तयोरनुशासनात्।

नैयायिकमते लकारस्य कर्तृकर्मावाचकतया तदनभिधानस्य द्वितीयातृतीयानियामकत्वासम्भवात्। न च कर्त्रादिगतसंख्यानभिधानमेव कथं कर्त्रादिवाचकपदोत्तरतृतीयादिनियामकं, चैत्रेण पच्यते तण्डुल इत्यादिस्थलेऽपि लकारस्य चैत्रादिगतसंख्याभिधायकत्वादेकत्वत्वादिना एकत्वादिसामान्यस्यैवैकवचनाद्यभिधेयत्वादिति वाच्यम्? यतस्तद्गतसंख्यानभिधायकत्वं प्रकृते न तद्गतसंख्यानिष्ठवृत्त्यनिरूपकत्वमपि तु तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वमेव। तथा च कर्त्रादिविशेष्यकसंख्यान्वयबोधाजनकलकारादिसमभिव्याहृतकर्त्रादिवाचकपदात् तृतीयादयो भवन्तीत्यत्र तदनुशासनतात्पर्यम्। चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रादिविशेष्यकं संख्यान्वयबोधकत्वं नाख्यातस्य, आख्यातार्थभावनाया यत्रान्वयस्तद्विशेष्यकसंख्यान्वयबोधस्यैवाख्यातेन जननात्तादृशभावनान्वयबोधे विशेष्यश्च प्रथमान्तपदोपस्थाप्य एव। चैत्रः पचति तण्डुलमित्यादौ चैत्रादिः साक्षादेव भावनाविशेष्यः। चैत्रेण पच्यते तण्डुल इत्यादौ तु परम्परया चैत्रादिनिष्ठभावनाजन्यफलशाली तण्डुल इत्याकारकबोधस्यैव तत्रोदयात्।

तस्मात्तिबादेरपि संख्याबोधकत्वमावश्यकमिति। तन्न विचारसहम्? तथा हि, कर्त्रादिनिष्ठसंख्यान्वयबोधाननुकूलत्वं यदि तादृशबोधोपधायकज्ञानविषयत्वाभाववत्त्वं तदा यादृशतिबादिज्ञानेन सह कार्यान्तरविरहात्तादृशबोधो न जनितस्तद्योगे तृतीयाद्यापत्तेः। यदि च तादृश-

---

तन्न विचारसहमित्यनेन साकं सम्बन्धः। तदनभिधानस्येति—कर्तृकर्मानभिधानस्येति फलितार्थः। एकत्वादिसामान्यस्यैवेति। चैत्रेणेति—चैत्रान्विततृतीयार्थैकत्वसंख्या लकारवाच्येति कर्तृगतसंख्याभिधायकत्वं युक्तमेवेति तत्त्वम्। तादृशबोधोपधायकेति—बोधोपधायकत्वञ्च बोधविशिष्टत्वम्, वैशिष्ट्यञ्च अव्यवहितपूर्वत्वसम्बन्धेन।

परम्परयेति—परम्परा च स्वजन्यफलवत्त्वसम्बन्धेन बोध्या। तदनभिधायकत्वमिति—कर्तृकर्मत्वानभिधायकत्वमिति तदाशयः। धात्वर्थविशेष्यस्येति—

बोधस्वरूपयोग्यज्ञानविषयत्वाभावस्तदा यागादिसमभिव्याहृतात्मनेपदादिज्ञानस्यापि तादृशबोधस्वरूपयोग्यज्ञानविषयतिबाख्यातस्यैवाप्रसिद्धेः। अथ कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकत्वमेव तादृशबोधानुकूलत्वम्। चैत्रः पचतीत्यादिवाक्यघटकतिबादिविषयिता चैत्रादिविशेष्यकसंख्यान्वयबुद्धित्वाच्छिन्नजनकतावच्छेदिका। तादृशान्वयबुद्धित्वावच्छिन्नं प्रति चैत्रादिपदसमभिव्याहृततिबादिपदज्ञानस्य हेतुत्वात्। चैत्रेण पच्यते तण्डुल इत्यादिवाक्यघटकतयादिपदविषयिता च न तादृशी? चैत्रादिपदसमभिव्याहृततादृशपदज्ञानत्वेन तादृशबुद्धित्वावच्छिन्नं प्रत्यहेतुत्वात्। न च चैत्रः पचत इत्यादौ चैत्रविशेष्यकाख्यातार्थसंख्यान्वयबोधोत्पत्त्या चैत्रादिपदसमभिव्याहृततयादिपदज्ञानत्वेन तादृशान्वयबुद्धित्वावच्छिन्नहेतुताऽक्षतैवेति, चैत्रेण पच्यते इत्यादिवाक्यघटकीभूततयादिपदविषयितापि तादृश्येवेति वाच्यम्? चैत्रेण पचेत चैत्रः पच्यते इत्यादिवाक्याच्चैत्रादिविशेष्यकस्य भावनायाः संख्यायाश्चान्वयबोधस्यानुदयात्। तद्विशेष्यकतदुभयान्वयबोधे प्रथमान्तचैत्रादिपदसमभिव्याहृतशबादिविकरणोत्तराख्यातपदज्ञानत्वेन हेतुत्वाच्चैत्रेण पच्यते तण्डुल इत्यादिवाक्यघटकतादीनां तादृशसमभिव्याहारादिशून्यतया तद्विषयितायाः अतादृशत्वात्। चैत्रः पक्ष्यते इत्यादितस्तण्डुलः पक्ष्यत इत्यादितश्चैत्रतण्डुलादिविशेष्यकसंख्यान्वयबोधोत्पत्त्या चत्रः पक्ष्यते तण्डुल इत्यत्र उभयविशेष्यकसंख्यान्वयबोधौपयिकतादृशसमभिव्याहारज्ञानविषयितायाः पक्ष्यत इत्यादौ सत्त्वेन कर्तृकर्मणोस्तृतीयाद्वितीययोरप्रसक्तावपि न तादृशवाक्यं व्युत्पन्नाः प्रयुञ्जते। कर्त्तरि साक्षात्कर्मणि च दर्शितपरम्परया युगपद्भावनाविशेषणकान्वयबोधजनकतायाः आख्यातस्याव्युत्पन्नतया तादृशवाक्यादुभयविशेषणकान्वयबोधासंभवात्। न चाकाङ्क्षायोग्यतादिसत्त्वात्कथन्न तादृशान्वयबोध इति वाच्यम्? अगत्या एकविधान्वयबोधेऽन्यविधान्वयबोधसामग्र्यास्तद्घटकतात्पर्यज्ञानस्य वा प्रतिबन्धकत्वापगमात्। न च चैत्रेण तण्डुलः पच्यते चैत्रस्तण्डुलं पक्ष्यते इत्यादिवाक्यद्वयविषयकसमूहालम्बनदशायामपि उभयविधान्वयबोधानुपपत्तिरिति वाच्यम्? तादृशैकविधान्वयबोधे तादृशान्यविधान्वयबोधपरत्वेनाग्रह्यमाणतथाविधाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुतया चैत्रः पक्ष्यते तण्डुल इत्यादिवाक्याचादृशद्विविधान्वयबोधवा-

---

धात्वर्थो विशेषणम कर्तृत्वकर्मत्वादिकञ्च विशेष्यमेव तयोरविवक्षणे भावप्रत्ययान्तार्थस्थल इति मनोरमो भावः।

रणस्य दर्शितवाक्यात्तदुपपादनस्य शक्यत्वात् । न च निरुक्तसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वे चैत्रेण स्वं दृश्यते, चैत्रः स्वं पश्यतीत्यादौ तृतीयाद्वितीययोरनुपपत्तिः । कर्त्रादिविशेष्यकसंख्याप्रकारकान्वयबोधौपयिकाकाङ्क्षाज्ञानीयविषयत्वनिरूपकत्वस्य तत्राख्याते सत्त्वादिति वाच्यम् ? कर्त्रादिपरयत्पदाख्यातपदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वाऽनिरूपकस्तत्पदोत्तरं तृतीयाविभक्तिरित्येवं नियमोपगमेन प्रथमस्थले चैत्रपदस्वपदाख्यातपदयोर्द्वितीये च तत्परचैत्राख्यातपदयोः समभिव्याहारस्यैव तद्विशेष्यकसंख्यान्वयबोधप्रयोजकतया क्रमेण चैत्रपदस्वपदाभ्यां तृतीयाद्वितीययोरनुपपत्त्यनवकाशादिति चेन्न ? अनभिहिते इत्यधिकारे कर्तृकरणयोस्तृतीयेत्याद्यनुशासनस्य किं प्रयोजनमिति वक्तव्यम् ।

चैत्रः पचति तण्डुलः पच्यते, इत्यादौ चैत्रतण्डुलपदाभ्यां द्वितीयातृतीययोरप्रयोग इति चेत् ? तत्किं मणिमन्त्रादिन्यायेन तादृशानुशासनस्य तथाविधप्रयोगविरोधिता येन तदभावस्तत्प्रयुक्तः स्यात् । न चैवं सम्भवति पचति पच्यते इत्यादिक्रियायोगे कर्तृकर्मवाचकपदानन्तरतृतीयाद्वितीययोरसाधुत्वस्य तत्कर्तृत्वतत्कर्मत्वादिबोधौपयिकाकाङ्क्षादिरहितत्वादिरूपस्य प्रतिपत्तिः प्रयोजनं तस्येति चेत्तर्हि ? उक्तनियमपरतयापि न ततस्तल्लाभः । प्रथमान्तचैत्रतण्डुलपदतत्तदाख्यातपदयोः समभिव्याहारस्यैव चैत्रतण्डुलादिविशेष्यकतत्तदाख्यातार्थसङ्ख्यान्वयबोधप्रयोजकतया चैत्रेण पचति तण्डुलं पच्यते इत्यादिवाक्यघटकचैत्रतण्डुलादिपदतिबादिपदयोः समभिव्याहारस्यातथात्वेन तद्घटकतृतीयाद्वितीययोः साधुत्वस्योक्तनियमाव्यवच्छेद्यत्वात् । तस्मान्मुख्यभाक्तसाधारणकर्तृत्वकर्मत्वयोः कर्तृकर्मवाचकपदसमभिव्याहृतलकृत्तद्धितसमासैरनभिधानमेव तृतीयादिनियामकं शिरोमणिभिरत्रैव निर्भरो विहितः । लादीनां तदनभिधायकत्वं च न तद्वाचकत्वं तन्निष्ठवृत्त्यनिरूपकत्वं वा । आख्यातसामान्यस्याप्याख्यातत्वेन लत्वादिना वा कर्तृत्वादिनिष्ठशक्तिलक्षणानिरूपकत्वात् । कर्तृत्वानभिधायकाख्यातस्यैवाप्रसिद्धेः । तच्छाब्दबोधौपयिकाकाङ्क्षाशून्यत्वमेव तत् । चैत्रेण पच्यते तण्डुल इत्यादावाख्यातस्य कर्तृत्वादिवाचकत्वेऽपि तच्छाब्दबोधौपयिकाकाङ्क्षाराहित्यं तत्राक्षतमेव, चैत्रादिपदोत्तरतृतीययैव कर्तृत्वबोधनसम्भवात् तत्र तादृशाकाङ्क्षाया अकल्पनात् इत्यपि न । चैत्रेण पक्ष्यते इत्यादौ तृतीयानुपपत्तेः पक्ष्यते चैत्र इत्यादितश्चैत्रादौ पाककृतेः केवलात्पक्ष्यत इत्यादित-

---

विकरणस्येति–विकरणत्वञ्च प्रकृतिप्रत्ययमध्यपतितत्वम्, यथा शप्श्यनादयः ।

श्च मुख्यविशेष्यतया तस्य बोधात्तादृशाख्यातधात्वोरानुपूर्वीविशेषाकाङ्क्षायाः कृतिबोधौपयिकत्वात्। न च समभिव्याहाररूपाकाङ्क्षैव विवक्षणीया, प्रकृते प्रकृतिप्रत्यययोरानुपूर्वीरूपाकाङ्क्षा न तु समभिव्याहार इति नोक्तानुपपत्तिरिति वाच्यम्? तथा सति चैत्रेण पचतीत्यादावपि तृतीयायाः साधुतापत्तेः। तादृशचैत्रपदाख्यातपदयोः समभिव्याहारस्य कृतिबोधानौपयिकत्वात्। चैत्रेण विजेष्यते मैत्र इत्यादौ तृतीयानुपपत्तेश्च, विजेष्यते मैत्र इत्यादितः मैत्रकृतिबोधात्तादृशाख्यातमैत्रपदयोः समभिव्याहारस्य कृतिबोधौपयिकत्वात। किंतु तत्तात्पर्यशून्यत्वमेव। तथा च चैत्रेण पक्ष्यत इत्यादावाख्यातस्य कर्तृत्वादितात्पर्यकत्वे तृतीया असाधुरेव।

तथा च चैत्रेण पचतीत्यादावाख्यातस्यार्थाविवक्षायां तृतीयायाः साधुत्वेऽपि परस्मैपदस्यासाधुत्वान्न प्रयोगः, परस्मैपदस्यासाधुत्वं च धात्वर्थविशेष्यस्य प्रत्ययेनाविवक्षणे भावकर्मणोरिति सूत्रेणात्मनेपदनियमात्।

आख्यातार्थविवक्षायां न चैत्रेण पचते इत्यादिप्रयोगः, शबादिविकरणस्यासाधुत्वात्। कर्तृत्वतात्पर्यकसार्वधातुकयोग एव तत्साधुत्वात्। कर्तृत्वकर्मत्वोभयतात्पर्येण मैत्रः पक्ष्यते तण्डुल इत्यादयस्तु न प्रयोगाः? तदेकतरबोधेऽन्यपरत्वेनागृह्यमाणाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुत्वात्। चैत्रेण पक्ष्यते तण्डुल इत्यादौ कर्तृत्वादावाख्यातस्य तात्पर्यग्रहे कर्मत्वाद्यन्वयबोधोऽपि न भवत्येव। अथ पक्वानि भुङ्क्ते चैत्रः, ओदनः पक्त्वा भुज्यते इत्यादौ क्त्वा क्रमेण कर्तृकर्मत्वानभिधानाच्चैत्रपदौदनपदाद्युत्तरं तृतीयाद्वितीये कथन्न स्याताम्।

न च क्त्वाऽनभिधानेऽपि आख्यातेन तदभिधानान्नानभिहितत्वं समभिव्याहृतपदाभिहितत्वसामान्याभावस्यैवानभिहितपदेन विवक्षणात्। समभिव्याहृतेतिकरणाच्च चैत्रेण गम्यते ग्रामस्तं मैत्रो गच्छतीत्यादौ न तृतीयाद्वितीययोरनुपपत्तिः। गच्छति गम्यत इत्याख्यातस्य तत्तत्पदासमभिव्याहृतत्वादिति वाच्यम? तथा सति भुञ्जानेन चैत्रेण पच्यते भोक्तव्यमोदनं पचतीत्यादौ तृतीयाद्वितीययोरनुपपत्तिः। क्ता कर्तृत्वकर्मत्वयोरभिधानात्। क्ता तत्र भोजनकर्तृत्वतत्कर्मत्वयोरभिधानेऽपि पाककर्तृत्वं तत्कर्मत्वं वानभिहितमिति चेत्तर्हि प्रकृतेऽपि तदनभिहितमेव। न च प्रधानक्रियानिरूपितकर्तृत्वाद्यनभिधाने तृतीयादेः साधुतेति। तदुक्तम्। "प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत्प्रकाशते" इति शक्तिः

कर्तृत्वादिकमिति वाच्यम् ? तथापि चैत्रेण दृश्यमानं घटं मैत्रः पश्यतीत्यादौ ज्ञानभेदेन विषयताभेदाभावात् । चैत्रदर्शनमैत्रदर्शनोभयनिरूपितविषयत्वरूपकर्मतायाः कृताभिधानाद् द्वितीयानुपपत्तिरिति चेन्न ? तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृकर्मत्वाद्यविवक्षाया एव तदनभिधानपदार्थत्वात् । तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षया द्वितीयाविभक्तेः साधुत्वमित्यर्थे तात्पर्यस्य पर्यवसितत्वात् । शेष आख्यातार्थविचारे विवेचयिष्यत इत्यलमत्राधिक्येन ।

आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकं चैत्रो मैत्रश्च गच्छतः चैत्रो मैत्रो देवदत्तश्च गच्छन्तीत्यादौ 'चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला । सुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम्" इत्यादौ च द्वित्वबहुत्वबोधकसुपोऽभावात् ।

न च तत्र सुवेकवचनस्यैव द्वित्वबहुत्वादौ लक्षणास्त्विति वाच्यम् ? आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्लक्षणाया अनभ्युपगमात् । अन्यथा चैत्रो मैत्रश्च गच्छत इत्यादाविव च्छन्दसि लक्षणयैव स्वादिना द्वित्वादिबोधनसंभवात् । औजसादिरूपादेशस्मृतद्वित्वादिबोधानिर्वाहाय छन्द-

---

प्रधानशक्त्यभिधान इति ।

तदुक्तम्—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाऽभिधीयते ।
यथा गुणे तथा तद्वदनुक्ताऽपि प्रतीयते ॥ इति

प्रधानक्रियानिरूपितकर्तृत्वकर्मत्वाऽनभिधाने गौणक्रियानिरूपितकर्तृत्वकर्मत्वे अभिहिते ओदनः पक्त्वा भुज्यते घटः कर्तुं शक्यत इत्युदाहरणम् । एतावता ग्रन्थेन नाख्यातैकवचनस्यैकत्वमर्थः किन्तु सुप एवेति सिद्धान्तः ।

आख्यातद्विवचनबहुवचनयोरिति—क्रियायां द्वित्वसंख्याऽन्वयाऽसम्भवेन चैत्रमैत्रपदोत्तरसुवेकवचनञ्च साधुत्वमात्रार्थकत्वान्निरर्थकमेव । चैत्रमैत्रद्वये तु सुबर्थैकत्वस्य बाधितत्वेनाऽन्वयाऽसम्भवादित्यभिप्रायः ।

सुब्विभक्तेर्लक्षणाया इति—सुब्विभक्तौ न लक्षणेति । अत्र प्रमाणन्तु "कर्तृकर्मणोः कृती" तिसूत्रमन्यथा लक्षणया शेषषष्ठ्यैव कर्तृत्वकर्मत्वलाभे पृथक् तद्विधानं ज्ञापकम् ।

न च "न बहुव्रीहौ" "द्वन्द्वे चे" तिपाणिनिसूत्रे बहुव्रीहाविति सप्तम्याः प्रथमार्थकत्वेन कथमयन्नियम इति वाच्यम् ? सूत्राणां छन्दोवत्त्वेन निर्वाहात् । तदुक्तम्वार्त्तिककृता—

सि "सुपां सुलुगि" त्यादिसूत्रेण औजसादिस्थाने स्वाद्यादेशस्य वैयर्थ्यात् ।

चैत्रादिपदोत्तरैकवचनस्य द्वित्वादिलाक्षणिकत्वे तदप्रकृत्यर्थमैत्रादिसाधारणद्वित्वादिबोधस्योक्तव्युत्पत्तिविरोधेनानुपपत्तेश्च आख्यातार्थसंख्यान्वयबोधे च समानविशेष्यकतदर्थभावनान्वयबुद्धिसामग्री अपेक्षिता, भावनाया बाधादिग्रहकाले तात्पर्यशून्यकाले वा उक्तस्थले द्वित्वान्वयाबोधात् ।

भावनाया अविशेष्ये धात्वर्थादौ संख्यान्वयाबोधाच्च तादृशसामग्र्याः संख्यान्वयबुद्धित्वावच्छिन्नं प्रति स्वातन्त्र्येण हेतुता, तदकल्पनेऽपि आख्यातजन्यसंख्योपस्थितियोग्यताज्ञानविशेषादिघटितसामग्र्या भावनानवगाहिसंख्यान्वयबोधस्य कदाप्यजननात्, संख्यान्वयबोधसाधारणभावनान्वयबोधत्वावच्छिन्नहेतूनामपि तादृशसामग्रीघटकत्वेनापत्त्यभावात् । न च तादृशकारणानां भावनान्वयबुद्धित्वं संख्यान्वयबुद्धित्वं वा जन्यतावच्छेदकमुपेयते इत्यत्र विनिगमनाविरहः ? संख्यामविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धत्वात् । द्वितीयस्य जन्यतावच्छेदकत्वासम्भवादिति दिक् ।

---

सुपां कर्मादयोऽप्यर्थास्संख्या चैव तथा तिङाम् ।

प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च ॥ इति ।

न च जानातीत्यादौ तिङ आश्रयत्वे लक्षणादर्शनेन कथमयन्नियम इति वाच्यम् ? आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्न लक्षणेति तात्पर्येण तिङो लक्षणायामपि क्षतिविरहात् । नच "हन्ति पुण्यम्पुराकृत" मित्यत्र पुण्यप्रतियोगिकनाशानुकूलव्यापारविषयको बोधस्तत्र द्वितीयायाः प्रतियोगित्वे लक्षणेति तत्र किमनुशासनम् ? तथाचानुशासनिकातिरिक्तार्थे सुब्विभक्तेर्न लक्षणेति नियमः कथङ्कारं सिद्ध्येदिति वाच्यम् ? सुपां कर्मादयोऽप्यर्था इत्यनुशासनस्य प्रायिकत्वाभिधानात् ।

उक्तव्युत्पत्तीति—प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्प्रत्ययानामितिव्युत्पत्तीति । नन्वाख्यातार्थसंख्यान्वयबुद्धित्वमेव लाघवानुरोधेन कार्यतावच्छेदकमिति तात्पर्येणाह तादृशसामग्र्या इति ।

जन्यतावच्छेदकत्वासम्भवादिति दिगिति ।

ननु दिगर्थोऽत्र क इति प्रश्नः ? त्रयः काला इत्युक्तौ प्रयोगकालिकवर्त्तमानत्वस्य सर्वत्र प्रसरत्वेऽपि प्रकृते वर्तमानार्थासंघटनेऽपि लडर्थवर्तमानत्वविवक्षणेन सन्तीत्यध्याहारेण त्रयःकालास्सन्तीतिप्रयोगो भवत्येवेत्येव दिगर्थ इत्युत्तरम् ।

लडर्थवर्त्तमानत्वं सर्वत्र विवक्षितन्न भवति "गमेरिट् परस्मैपदेषु" इत्यत्र परस्मैपदग्रहणन्तङानयोरभावबोधकन्तदर्थकत्वेनाविवक्षावत् ।

अथ गुणादिवाचकपदोत्तरद्विवचनबहुवचनयोः कथं द्वित्वादिबोधकता ? संख्याया गुणत्वेन गुणादौ बाधात्। न च तत्र स्वाश्रयसमवेतत्वादिसम्बन्धेन द्रव्यगतं द्वित्वादिकमेव भासते इति वाच्यम् ? एकव्यक्तावपि तादृशसम्बन्धेन द्वित्वादेः परिसमाप्ततया एकमात्रतात्पर्येणापि द्विवचनाद्यापत्तिरिति चेत् ?

न, अपेक्षाबुद्धिविषयत्वमेव तदुत्तरद्विवचनादिना बोध्यते। तच्चैकमात्रवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदकस्थले प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वेति।

अन्यत्र शुद्धपर्याप्तिसम्बन्धेनेति न द्वन्द्वादिस्थलोक्तदोष इति विदुषां परामर्शः।

इति प्रथमाकारकम्।

---

अत एव "कर्त्तुरीप्सिततमङ्कर्म" इतिसूत्रघटकेप्सितपदे "मतिबुद्धि" इति वर्त्तमाने क्तप्रत्ययेऽपि तदविवक्षयैव षष्ठी सिध्यति। एवम्प्रकारेणैव ग्रामं गमिष्यति ग्राममगमदित्यादौ कर्मत्वं सिध्यति।

नच लडर्थवर्त्तमानत्वविवक्षायान्न मानमिति वाच्यम् ? "कर्त्तुः" इतिसौत्रप्रयोगानुपपत्तेः। अतएव "कर्मणि हनः" इतिणिनिविधानं संगच्छते। अत एव च मीमांसायां मौद्गश्चरुर्भवतीतिवाक्ये सर्वकालावच्छेदेन यागीयचरुविधानं सुसंगतमित्यलम्।

तादृशसम्बन्धेनेति—स्वाश्रयसमवेतत्वसम्बन्धेनेति फलितार्थः। एकमात्रधर्मस्येति—एकमात्रवृत्तिधर्मस्येति तु नैवार्थो घटते रूपत्वरसत्वयोरेकमात्रवृत्तित्वाऽभावेन एकरूपादिमत्यपि वस्तुनि अत्र रूपे वर्त्तेते इतिप्रयोगप्रामाण्यापत्तेः। नात्र प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः प्रतीतिरित्यभिप्रायवर्णनात्।

द्वन्द्वादिस्थलेति।

पदभेदे द्वन्द्वः पदार्थभेदे द्वन्द्वः पदार्थतावच्छेदकभेदे वा द्वन्द्वः साहित्ये द्वन्द्वः ! तत्र साहित्ये साहित्यावच्छिन्ने वा न द्वन्द्वः ? हिमविन्ध्याख्यपर्वतयोर्विभिन्नभूभागस्थत्वेन साहित्याऽभावात् हिमविन्ध्यावित्यत्र द्वन्द्वाऽनुपपत्तेः। नचैकक्रियान्वयित्वं साहित्यमिति नानुपपत्तिरिति वाच्यम् ? हिमविन्ध्यौ पश्य छिन्धि गच्छ पूजय हिमविन्ध्यौ सुन्दरौ स्त इत्यादिषु तदभावात्। सूत्रार्थमर्यादया साहित्याऽननुभवाच्च। तथा च पदार्थभेदे द्वन्द्वः। नच "अप्येकदन्तहेरम्बलम्बोदरगजननाः" घटकलशौ नीलघटयोरभेदः, प्रमाणप्रमेयसंशयप्रयोजने" तिगौतमसूत्रे च द्वन्द्वानुपपत्तिः। द्वन्द्वापवाद एकशेष इतिनियमानुरोधेन घट इत्यत्र पदार्थभेदाऽभावेन द्वन्द्वाऽप्राप्त्या नियमभङ्गश्चेति वाच्यम् ? पदार्थत्वन्नाम पदजन्यप्रतीतिविषयत्वम् तच्च पदार्थतावच्छेदकसाधारणम् तत्रापि प्रकारतारूपविषयतासत्त्वात्, घटा इत्यत्र घटे विशेष्यतारूपविषयतासत्त्वात्,

घटत्वे प्रकारताख्यविषयतासत्त्वात् द्वन्द्वप्राप्तेस्सौष्ठवात् अपवादत्वकथनं सयुक्तिकमेवेतिव्याख्यानात्। किञ्च घटा इत्यत्रैकशेषाऽभावेऽपि बहुघटबोधनसत्त्वदशायाम्विवक्षितबहुत्वान्वयादेव बहुघटबोधसम्भवात्। सरूपैकशेषविधिस्तु सिंहत्वसूर्यत्वकपित्वविष्णुत्वाद्यनेकपदार्थतावच्छेदकभेदे हरयस्तिष्ठन्तीत्यादौ चरितार्थ इत्याशयात्। तथा च नीलघटयोरभेद इत्यादौ नीलत्वघटत्वयोर्भेदादेव द्वन्द्व एवं सर्वत्रापि बोध्यम्।

नच क्वचित्पदार्थभेदे द्वन्द्वः क्वचित्पदार्थतावच्छेदकभेदे द्वन्द्व इतिन्यायसिद्धान्तोदिनकर्य्यामुक्तः कथन्नाद्रियते तावताऽपि पूर्वोक्तदोषोद्धारादिति वाच्यम्? पदार्थतावच्छेदकभेदस्य द्वन्द्वनियामकत्वे एकस्मिन्नपि पुंसि दण्डिकुण्डलिनौ गच्छत इतिप्रयोगाऽपत्तेः। पदार्थतावच्छेदकदण्डकुण्डलादिभेदस्य सत्त्वात्। नच द्वित्वानन्वयश्शङ्क्यः? नीलघटयोरभेद इत्यादाविव पदार्थतावच्छेदके तदन्वयसम्भवात्। तथा च पदार्थभेदे द्वन्द्व इतिनिश्चितम्मतम्।

वैयाकरणमते तु षोढा प्रातिपदिकार्थ इति शब्दोऽपि शाब्दबोधे भासत इतिनियमानुरोधेन नीलघटयोरभेदः अप्येकदन्तहेरम्ब इत्यादौ च नीलादिपदोपस्थाप्यघटादिपदोपस्थाप्ययोर्भेदेन पदार्थभेदाद् द्वन्द्वस्सुतराम्। अत एव "असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा" इत्यादौ "विरूपाणामपि समानार्थानामि"ति एकशेषो न भवति? समानप्रवृत्तिनिमित्तकस्यैव समानार्थकत्वात्। संज्ञाशब्दे द्रव्यस्यैव प्रवृत्तिनिमित्तत्वात्। एवञ्च इन्द्रपदवदभिन्नो मघवानितिबोधस्तथा च पदार्थभेदे द्वन्द्व इतिसिद्धम्।

"भूवादयो धातव" इतिपाणिनिसूत्रे तु भूरिव वा भूवा वा इव क्रियावाचको भूः भूवा सः आदिर्येषान्ते भूवादयः, भूवादयश्च भूवादयश्चेत्येकशेषेण द्वन्द्वानुपपत्तिशङ्कैव नोदेति। एतेनैकपदोपस्थाप्यार्थस्य परस्परम्भेदेनान्वयविरहेण द्वन्द्वाऽसङ्गतिरिति परास्तम्। सादृश्यप्रतियोगितावच्छेदकविशिष्टधर्मेण सादृश्यमितिनियमः। नह्यब्राह्मणमान-

---

सादृश्यप्रतियोगितावच्छेदकव्यापकेति—सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकीभूतधर्मेण सादृश्यं गृह्यते इतिनियमो हि लौकिकप्रत्यये चन्द्रवन्मुखमित्यादौ क्लृप्तः। सादृश्यं हि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। तद्भिन्नस्सन् तद्गता ये भूयांसो धर्मास्तादृशधर्मवान् यस्स तत्सादृश्यवान् (सदृशः) उच्यते। यथा चन्द्रभिन्नं सत् मुखं चन्द्रवृत्त्याह्लादकत्वरूपभूयोधर्मवदपि इति भवति तत्सदृशम्। ननु चन्द्रवृत्तिर्भूयान् धर्मश्चन्द्रत्वमेव नान्य इति तेन सादृश्याश्रयणे चन्द्रत्वस्य मुखेऽभावात् कथं चन्द्रवन्मुखमिति चेन्न? सादृश्यप्रतियोगितावच्छेदकेतिप्रसिद्धनियमेनात एव समाश्रितेन सादृश्यव्यवस्थितेः। यस्य सादृश्यं कुत्रचित् नीयते तत् सादृश्यस्य प्रतियोग्युच्यते, यत्र च नीयते तत् सादृश्यस्यानुयोग्युच्यते। चन्द्रप्रतियोगिसादृश्याश्रयोमुखमितिबोधः। तत्र नियमसंघटनन्त्वित्थम्, सादृश्यप्रतियोगी चन्द्रःप्रतियोगिता चन्द्रनिष्ठा प्रतियोगितावच्छेदकं चन्द्रत्वन्तद्व्यापकीभूतो धर्म आह्लादकत्वन्तादृशधर्मवत्त्वम्मुखे इति। तथा च प्रकृते 'भूवादय' इत्यत्र सादृश्यप्रतियोगितावच्छेदकवात्वव्यापकासत्त्ववाचित्वेन सादृश्याश्रयणमेव युक्तन्नत्वतादृशेन क्रियावाचकत्वेनेति चेन्न? वाऽव्ययसाहचर्यादसत्त्ववचनस्य भुवो ग्रहणम्, असत्त्ववचनभूसाहचर्यात् क्रियावाचिनो वाशब्दस्य ग्रहणम्। क्रियावाचिवासादृश्यस्य क्रियावाचकत्वेन ग्रहणमिति परस्परसाहचर्याश्रयेण

येतिकथने लोष्टमानीय कृती भवतीति भाष्यम्। वैशिष्ट्यञ्च स्वनिष्ठव्याप्यतानिरूपित-व्यापकतावत्त्व स्वनिष्ठव्याप्यतानिरूपिता या व्यापकता तादृशव्यापकतानिरूपिता या व्यापकता तादृशव्यापकतानाश्रयत्वमित्युभयसम्बन्धेन। ब्राह्मणत्वम्व्याप्यन्तन्निरू-पितव्यापकता मनुष्यत्वे तन्निरूपिता व्यापकता द्रव्यत्वे तदनाश्रयत्वम्मनुष्यत्वेऽतस्तेन सादृश्यम्। व्याप्यता वाशब्दत्वे तन्निरूपितव्यापकता भूवागतान्यतरशब्दत्वे तन्नि-रूपितव्यापकता क्रियावाचकत्वे तदाश्रयत्वमेव न अनाश्रयत्वम्। अतस्स्वनिष्ठव्या-प्यता वाशब्दत्वे तन्निरूपितव्यापकता भूवेत्यन्यतरपरित्यागेन क्रियावाचकत्वे तन्निरू-पितव्यापकता शब्दत्वे तदनाश्रयत्वं क्रियावाचकत्वेऽत एव क्रियावाचकत्वेन सादृश्यम् इति केचित् तन्न? व्यापकतानिरूपितव्यापकतायास्सत्तायामपि प्रमेयत्वेऽपि सत्त्वेन तदाश्रयत्वमेवेति नायम्प्रकारः। तथा च सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मेणैव सादृश्यमित्येव नियमोऽधिकमस्मत्कृतकौमुदीकल्पलतिकाख्यटीकायां द्रष्टव्यम्।

परामर्श इति—विचार इति तदाशयः।

इति श्रीत्रिकोणयन्त्रसन्निभकाशीप्रयागायोध्याख्यतीर्थत्रयमध्यभूमि (उदयपुर बदलापुर जौनपुर) जन्मश्रीसरयूपारीणशुक्लकौमुदीकल्पलतिकापरिष्कारदर्पण-परिभाषेन्दुशेखरशास्त्रार्थकलाद्यनेकग्रन्थकृद्वैयाकरणशिरोमणि घटिका-शतकशतावधान-संस्कृताशुकविचक्रवर्त्तिपण्डितराज-श्रीवेणी-माधवशास्त्रिविरचितशास्त्रार्थकलासहितव्युत्पत्तिवादे प्रथमाकारकं समाप्तम्।

---

निर्वाहसम्भवात्। इतोऽपि विशिष्टश्शास्त्रार्थो मत्कृतपरिष्कारदर्पणाख्यग्रन्थीयटिप्पणीतोऽनुसन्धेय-श्शास्त्रार्थिभिरिति।

कर्मणि द्वितीयेत्यनुशासनात्कर्मत्वं द्वितीयार्थः ।

तत्र कर्मपदस्य धर्ममात्रपरत्वात् । कर्मणश्च न तथात्वम् , कर्मणि नामार्थस्य ग्रामादेरभेदान्वयसम्भवेऽपि धात्वर्थगमनादिना तदन्वयासम्भवाद् गौरवाच्च ।

---

अथ द्वितीयाकारकम् ।

द्वितीयाविभक्त्यर्थनिरूपणमारभते कर्मणीति । "कर्मणि द्वितीये" तिसूत्रप्रमाणेन कर्मत्वन्द्वितीयार्थः, सूत्रे कर्मपदस्य ग्रामङ्गच्छतीतिवाक्यघटकग्रामादिरूपकर्मपदार्थवृत्तिकर्मत्वरूपधर्मपरत्वात् । यथा "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वती" तिकोशे गुणे इतिसप्तम्या वाचकतार्थकत्वं तथा "कर्मणि द्वितीये" त्यस्य कर्मत्ववाचिका द्वितीयेति सूत्रार्थ इत्यभिप्रायात् ।

ननु कर्मपदं कर्मभूतग्रामादिपदार्थपरकमेवास्तु तावताऽपि निर्वाह इति चेन्न ? कर्मभूतग्रामादिपदार्थपरकर्मणो द्वितीयार्थत्वे प्रधानीभूतकर्मपदार्थे नामार्थग्रामादेरन्वयेऽपि धात्वर्थगमनादिना कर्मपदार्थान्वयो न स्यात्, कर्मभूतग्रामादिनिरूपितजनकत्वादेर्द्धात्वर्थगमनादावभावात् । कर्मत्वञ्च चैत्रादिकर्तृकव्यापारजन्यसंयोगादिरूपम्फलमेव तस्य च जनकत्वसम्बन्धेन साक्षादेव धात्वर्थगमनादावन्वय इति फलितार्थः ।

नच कर्मणो द्वितीयार्थत्वेऽपि तस्य कर्मभूतग्रामादिपदार्थस्य स्ववृत्तिफलजनकत्वसम्बन्धेन धात्वर्थगमनादावन्वयः । स्वं कर्म तद्वृत्ति फलं संयोगः तज्जनकत्वं धात्वर्थगमनादावित्यन्वयसम्भवेन नापत्तिरिति वाच्यम् ? गौरवात् । कर्मत्वे तु ग्रामवृत्तिसंयोगजनकव्यापारवांश्चैत्र इतिबोधान्न गौरवम् । द्वितीयाया मुख्योऽर्थः कर्मत्वम् ।

नच कर्मणो द्वितीयार्थत्वेऽपि कर्मत्वमेव शक्यतावच्छेदकमिति प्रकारतया कर्मत्वस्याऽपि द्वितीयार्थत्वमिति वाच्यम् ? मुख्यार्थत्वाऽभावात् । मुख्यार्थत्वञ्च वृत्तिग्रहमुख्यविशेष्यत्वम्, तच्च तत्र नास्तीत्यभिधानात् । नच द्वितीयायास्संख्यायां शक्तिः कर्मत्वे लक्षणेत्येव कुतो नेति वाच्यम् ? "घटायोन्मीलितं चक्षुः परं किन्नहि पश्यतीति" न्यायेन कुत्र शक्तिः कुत्र लक्षणेति विनिगमकाऽभावादुभयत्रैव शक्त्यभिधानात् ।

धर्ममात्रपरत्वादिति

भावप्रधाननिर्देशेन कर्मत्वात्मकधर्मपरत्वादित्यर्थः । मात्रपदेन कर्मत्वाश्रयस्य शक्यत्वनिरोधः । लाघवञ्च फलानां संयोगविभागादीनामनन्तानन्तत्वात् तेषु शक्यतावच्छेदकत्वकल्पनापेक्षयाऽखण्डोपाधौ कर्मतात्वे शक्यतावच्छेदकत्वे स्पष्टमेव लाघवमिति ग्रन्थतत्त्वम् ।

ननु ग्रामङ्गच्छति पटम्पश्यति गृहं रक्षति धर्मं करोतीत्यादिषु कर्मेदं कर्मेदमित्यनुगतव्यवहारेण विषयत्वप्रतियोगित्वानुयोगित्वादिवत् कर्मत्वमप्यखण्डोपाधिरेवेति, आश्रयत्ववच्च । तथा च कर्मत्वस्य शक्यतावच्छेदकत्वे न गौरवमिति

कर्मत्वं च क्रियाजन्यफलशालित्वम् । तत्र च क्रिया धातुत एव लभ्यते ।

जन्यजनकभावस्य च विनैव पदार्थत्वं संसर्गमर्यादया भानं सम्भवतीति फलमात्रं कर्मप्रत्ययार्थः ।

न च संयोगविभागरूपफलमपि धातुलभ्यमेव, गमित्यजिप्रभृतीनां तदवच्छिन्नस्पन्दादिरूपव्यापारवाचकत्वादिति वाच्यम् ?

व्यापारमात्रस्य धात्वर्थत्वात् ।

फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं त्यजतीत्यादौ धात्वर्थस्पन्दे ग्रामनिष्ठविभागजनकत्वमेव ।

---

चेन्न ? गामङ्गच्छति पटम्पश्यति गृहं रक्षति इत्यादिषु सर्वत्रैव ग्रामादिषु शक्यतायाश्शक्यतावच्छेदकतायाश्च कर्मत्वे शक्तिकल्पनापेक्षया एकस्मिन् कर्मत्वे शक्यत्वस्य एकस्मिन्नेव हि कर्मतात्वे शक्यतावच्छेदकत्वस्य च कल्पने लाघवानुसन्धानात् ।

फलशालित्वमिति ।

फलत्वञ्च धात्वर्थव्यापारे प्रकारतया भासमानत्वे सति धातुनिष्ठजनकतानिरूपितजन्यत्वम् । मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्, मन्दं गच्छति द्रुतं गच्छति इत्यादि तादात्म्यसम्बन्धेन धात्वर्थव्यापारेऽन्वयेन मन्दादौ दोषवारणाय धातुजन्यत्वमिति । गम्यादिधात्वर्थसंयोगानुकूलव्यापारजन्यत्वस्य पूर्वदेशविभागादौ सत्त्वेन तत्र दोष इति सत्यन्तनिवेशः ।

फलमात्रमिति ।

अनन्यलभ्यो हि शब्दार्थ इतिन्यायात् फलमात्रस्यैव कर्मप्रत्ययार्थत्वविधानात् ।

ननु फलस्याऽपि द्वितीयार्थत्वे धातोरपि फलार्थकत्वेनानन्यलभ्य इतिन्यायविरोधस्तिष्ठत्येवेति तात्पर्येण शङ्कते नचेति ।

व्यापारमात्रस्य धात्वर्थत्वादिति ।

ननु व्यापारमात्रधात्वर्थत्वे ग्रामन्त्यजति ग्रामङ्गच्छतीत्यादौ यत्प्रतीतिवैलक्षण्यम्प्रभाति तन्न सिद्ध्येदित्याशयेनाह फलविशेषान्वयबोधेति । ननु ग्रामनिष्ठसंयोगजनकव्यापारानुकूलकृतिमान्देवदत्त इत्याकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति किं कारणमिति प्रश्ने द्वितीयान्तग्रामपदसमभिव्याहृततिबन्तगच्छतिपदसमाभिव्याहारः कारणम् । अत एव ग्रामः कर्मत्वम् गमनमित्यादिनिराकाङ्क्षवाक्याद्विशिष्टान्वयो न भवति ।

एवञ्च तादृशकारणाऽभावात् ग्रामं गच्छतीत्यादौ ग्रामनिष्ठविभागविषयकान्वयबोधवारणं ग्रामन्त्यजतीत्यादौ ग्रामनिष्ठसंयोगजनकव्यापारान्वयबोधवारणमिति कथङ्कारम्फलविशेषान्वयबोधे धातुविशेषजन्योपस्थितेः कारणत्वम्मूलोक्तमिति वाच्यम् ?

ग्रामं गच्छतीत्यादौ च धात्वर्थस्पन्दे ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते न तु विपरीतम्। ग्रामं गच्छतीत्यादिवच्च ग्रामं स्पन्दते इत्यादयो न प्रयोगाः। द्वितीयादेर्गम्याद्युपस्थापितस्पन्दादावेव फलान्वयबोधकत्वात्, न तु स्पन्दिप्रभृत्युपस्थापिते ? तस्मिन् द्वितीयादिना फलान्वयबोधजननासम्भवात्। नहि येन केनचिदुपस्थापितयोरेवार्थयोः परस्परमन्वयः प्रतीयते। तथा सति घटकर्मत्वादिपदोपस्थापितयोरपि घटकर्मत्वाद्योः परस्परमन्वयबोधप्रसङ्गात्। कृञादिसमानार्थकधातूपस्थाप्यफले विषयितार्थकद्वितीयार्थान्वयसम्भवेन घटं करोतीतिवद् घटं यतते इत्यादिप्रयोगप्रसङ्गाच्च। अपि तु ययोर्यादृशान्वयबोधे आकाङ्क्षा तदुपस्थापितयोरेव तादृशान्वयबोधः। आकाङ्क्षा च द्वितीयादेर्गम्यादिना कृञादिना च कल्प्यते न तु तत्समानार्थकेनापि स्पन्दियतिप्रभृतिनेति।

न चाकाङ्क्षात्र समभिव्याहारः, स च गम्यादिनेव स्पन्दादिनापि समान एवेति वाच्यम् ? यतो द्वितीयादेर्गम्यादिसमभिव्याहारस्यैव फलबलादन्वयबोधौपयिकत्वमुपगम्यते न तु स्पन्दिप्रभृतिसमभिव्याहारस्येति न तस्याकाङ्क्षात्वम्, अन्वयबोधौपयिकसमभिव्याहारादस्यैव तथात्वात्। अत एव समानार्थकत्वेऽपि गम्यादेरिव न स्पन्दादेः सकर्मकत्वव्यवहारः, फलान्वितव्यापारबोधकधातुत्वस्यैव तन्नियामकत्वात्।

---

व्यापारमात्रन्धात्वर्थं इति सिद्धमेवञ्च ग्रामङ्गच्छतीत्याकाङ्क्षाज्ञानसत्त्वे गम्धातोर्यदि न व्यापारोपस्थितिरपि तु त्यज् धातोरेव व्यापारोपस्थितिस्तदा ग्रामनिष्ठसंयोगजनकव्यापारानुकूलकृतिविषयकशाब्दबोधापत्तेः। तथा च फलविशेषान्वयबोधे धातुविशेषजन्योपस्थितेरावश्यकत्वात्।

नतु विपरीतमिति।

ग्रामङ्गच्छतीत्यत्र ग्रामनिष्ठविभागजनकत्वं ग्रामन्त्यजतीत्यत्र ग्रामनिष्ठसंयोगजनकत्वमित्येवम्विपरीतन्न प्रतीयत इति ग्रन्थाशयः।

तन्नियामकत्वादिति।

सकर्मकत्वव्यवहारनियामकत्वादित्यर्थः। ननु विषयित्वादेरखण्डोपाधित्वेन नित्यत्वन्तथा च घटञ्जानाति पटञ्जानातीत्यादौ व्यापारजन्यफलाऽभावेन सकर्मकत्वन्न स्यादिति चेन्न ? व्यापारत्वभिन्नत्वे सति धात्वर्थव्यापारे विशेषणतासम्बन्धेन बोधविषयत्वे सति धात्वर्थत्वम्फलत्वम्। तथाचैतल्लक्षणम्विषयत्वादावपीति सकर्मकत्वञ्ज्ञानातेस्सिद्धम्।

ननु व्यापारमात्रस्य धात्वर्थत्वे गच्छति त्यजतीत्यादौ धातुविशेषजन्यव्यापारोपस्थित्या वैलक्षण्यसिद्धावपि यत्र द्वितीयान्तपदन्नास्ति त्यजति गच्छति त्यागो

सिद्धया आकाशं न पश्यतीत्यादौ चाकाशादिनिरूपितलौकिकविषयिताया एवाप्रसिद्ध्या तादृशविषयिताशालिचाक्षुषाश्रयत्वाद्यभावरूपवाक्यार्थाप्रसिद्धिः।

न च सौरभं न पश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयित्वाभावः चाक्षुषादौ प्रतीयत इति वाच्यम् ? एवमप्याकाशं न पश्यतीत्यादावप्रतीकारात्। न च लौकिकविषयितायां निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावः प्रतीयत इति वाच्यम् ? वृत्त्यनियामकसम्बन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकतया तादृशाभावस्याप्रसिद्धेः।

एतेन निरूपकतासम्बन्धेन चाक्षुषादिनिष्ठलौकिकविषयिताया अभावस्तत्राकाशादौ प्रतीयते इत्यपि निरस्तम्।

अन्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यकतायाः सर्वानुभवसिद्धाया भङ्गप्रसङ्गाच्च चाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छिन्नस्य पदाद्वाक्याद्वानुपस्थितत्वाच्चदभावस्याकाशादौ भानासम्भवाच्च। आत्रान्वयबोधे च लौकिकविषयिताप्रकारेण चाक्षुषादेर्भानात्। अभावान्वयबोधे चाक्षुषप्रकारेण तस्या भानमयुक्तम्।

अस्तु वा वृत्त्यनियामकोपि सम्बन्धोऽभावप्रतियोगितावच्छेदकस्तथापि निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य विषयिताविशेषनिष्ठाकाशाद्यभावस्य भानोपगमो न सम्भवति ? तथा सति आकाशं पश्यति चैत्र इत्याकारकवाक्यजन्यबोधदशायाम् आकाशं न पश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधप्रसङ्गात्। आकाशं पश्यति मत्र इत्यादिभ्रमदशायां आकाशं न पश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधस्य दुरपह्नवतया लौकिकविषयतात्वसामानाधिकरण्येनैव तादृशाभावबोधकं तद्वाक्यमु-

---

र्गोऽभावेति।

भानमयुक्तमिति—नञ्पदं विना यादृशसमभिव्याहारस्थल इति न्यायानुसन्धानात्।

आकाशम्पश्यतीति।

अवच्छेदकावच्छेदेन तदभाववत्तानिश्चयम्प्रति सामानाधिकरण्यसम्बन्धेन तद्वत्तानिश्चयस्याऽपि प्रतिबन्धकत्वनियमेन लौकिकविषयितात्वसामानाधिकरण्येन आकाशप्रकारकज्ञानम्प्रतिबन्धकम्। एवञ्च लौकिकविषयितात्वावच्छेदकावच्छेदेन निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाऽभावविषयकबोधाऽप्रसक्तेराकाशन्न पश्यति चैत्र इति अनुभवसिद्ध इति प्रतिबन्धकविरहादिति योजनीयम्।

पगन्तव्यम् । तादृशबोधश्च लौकिकविषयतात्वसामानाधिकरण्यमात्रेणाकाशादिनिरूपितत्वाभावावगाही दर्शितयोग्यताज्ञानाप्रतिबध्य एव । न च मैत्रीयचाक्षुषादिनिरूपितलौकिकविषयतात्वावच्छेदेनैव तादृशाभावो दर्शितवाक्येन प्रत्याय्यते इति चैत्रीयचाक्षुषादिनिरूपितलौकिकविषयितायां आकाशीयत्वाद्यवगाहि चैत्र आकाशं पश्यतीतिवाक्यजन्यबोधः प्रतिबध्नात्येव तादृशवाक्यजन्यधियमिति वाच्यम् ?

तादृशविषयितात्वेन विषयिताया अनुपस्थितेस्तदवच्छेदेनाभावप्रत्यायनासम्भवात् चैत्र आकाशं पश्यतीतिवाक्यजन्यबोधे चैत्रांशे दर्शनाश्रयत्वं विशेषणं दर्शनांशे लौकिकविषयिता विशेषणमितिरीत्यैव पदार्थानां ज्ञानात् चैत्रीयचाक्षुषादिनिरूपितविषयितात्वं नाकाशादिधर्मितावच्छेदकं, किन्तु शुद्धलौकिकविषयितात्वमेवेति तस्य शुद्धलौकिकविषयितात्वावच्छेदेनाकाशाद्यभावावगाहिज्ञानं प्रत्येव प्रतिबन्धकतया निरुक्तधर्मावच्छेदेनाकाशाद्यभावावगाहिज्ञानस्य तदप्रतिबध्यत्वाच्च ।

एतेन तत्राकाशादिपदस्याकाशादिनिरूपितत्वार्थकतां द्वितीयायाः खण्डशो निरूपितत्वलौकिकविषयतात्वोभयार्थकतां वा स्वीकृत्य लौकिकविषयिताया आश्रयतासम्बन्धावच्छिन्नप्रतियोगिताकवदभावोपगमेनापि न निस्तारः । घट आकाशं न पश्यतीत्यादौ नितरामेवागतेः ।

यत्तु नञर्थस्य द्विधा भानोपगमेन आकाशादिनिरूपितत्वाभाववल्लौकिकविषयताशालिचाक्षुषाश्रयत्वाभाववान् घट इत्याकारकस्तत्रान्वय इति । तदपि न ? तथा सति चैत्रो घटं न पश्यति मैत्र आकाशं न पश्यतीत्यादिवाक्यजन्यशाब्दबोधादविलक्षणबोधस्य सर्वानुभवसिद्धस्य तादृशवाक्यादनुपपत्तेः । न हि तत्रापि तादृश एव शाब्दबोधः । तथा सति चैत्रो यदा घटादिकं न पश्यत्यपि तु पटादिकमेव तदा घटाद्यनिरूपिततल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावस्य तत्र बाधात् चैत्रो घटं न पश्यतीति प्रयोगानुपपत्तेः । यदा च भावमात्रं पश्यति तदा भावनिरूपितलौकिकविषयताशालिचाक्षुषाश्रयत्वाभावसत्त्वात् भावं न पश्यति चैत्र इत्यादिप्रयोगापत्तेः । एवमाकाशं न पश्यति घट इत्यादौ आकाशाद्यनिरूपितलौकिकविषयताशालिचाक्षुषाश्रयत्वाभावस्य वाक्यार्थत्वे यदाकाशाद्यतिरिक्तपटादिविषयकचाक्षुषाश्रयत्वनिश्चयरूपप्रतिबन्धकसत्त्वेन तादृशवाक्यजन्यशाब्दबोधानुपपत्तिः !

यथा चैत्रो घटं पश्यतीत्यादिनिश्चयदशायां घटं न पश्यति चैत्र

---

निरुक्तधर्मावच्छेदेनेति ।

१ अलौकिकविषयिताशून्यचाक्षुषत्वावच्छेदेनेति भावः । ननु प्रथमान्तार्थस्य मुख्य-

इत्यादिवाक्यजन्यशाब्दबोधोत्पादोऽनुभवसिद्धः, तथैवोक्तभ्रमदशाया-माकाशं न पश्यति घट इत्यादिवाक्यजन्यबोधोत्पादोऽपीति न तत्रेष्टा-पत्तिः संभवति। यद्यालौकिकविषयताशून्यचाक्षुषत्वाद्यवच्छेदेनाका-शादिविषयकत्वघटादिवृत्तित्वोभयाभाव आकाशं न पश्यतीतिवाक्या-त्प्रतीयते, उपनीताकाशादिविषयकचाक्षुषे आकाशादिविषयकत्वचैत्रा-दिवृत्तित्वोभयसत्त्वेन चैत्र आकाशं न पश्यतीत्यादिप्रयोगानुपपत्तिः। घटादौ तादृशचाक्षुषाद्याश्रयत्वभ्रमदशायां घट आकाशं न पश्यतीतिवा-क्याच्छाब्दबोधानुपपत्तिश्चेत्यलौकिकविषयताशून्यत्वेन चाक्षुषादिकं वि-शेषितम्। आकाशविषयकचाक्षुषाद्युपनीतभानस्यापीतरांशे लौकिकत्वा-त् तादृशानुपपत्तितादवस्थ्यम्। अतो लौकिकविशेषणमुपेक्षितम्। अत्रालौकिकविषयताशून्यचाक्षुषत्वाद्यवच्छिन्नस्य घटं न पश्यतीत्यादौ शक्त्या धात्वर्थत्वासम्भवेऽपि प्रकृते तस्यैव लक्षणया धात्वर्थत्वमुपेयते, विषयतासामान्यमेव तत्र द्वितीयार्थः निरूपकत्वमपि लक्षणया तदर्थः। आश्रयत्वं द्वित्वं निरूपकत्वं चाख्यातार्थः। आश्रयत्वे व्युत्पत्तिवैचित्र्या-त्प्रथमान्तपदार्थघटादेः तस्य निरूपकत्वे विशेषणतयान्वयः। तादृशनि-रूपकत्वद्वितीयान्तार्थाकाशादिविषयकत्वयोश्च प्रकारतया द्वित्वान्वयः, द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तादृशोभयस्य नञर्थाभावे तस्यान्वयितावच्छेदकनिरुक्तधर्मावच्छेदेन धात्वर्थेऽन्वयः। धात्वर्थस्य प्रकृते मुख्यविशेष्यतयैव भानम्।

अथवा स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकता-सम्बन्धेन धात्वर्थस्य तादृशोभयाभावेऽन्वयः। तस्य चाख्यातार्थनिरूपक-त्वे, तस्य च प्रथमान्तपदार्थे घटादौ, घटादेः प्रतियोगितावच्छेदकघट-कतया तादृशाभावनिरूपकत्वात्। एवं चान्वयबोधस्य प्रथमान्तपदार्थ-मुख्यविशेष्यकत्वनियमस्यापि न क्षतिरिति। तदपि न? घटादिविषय-कचाक्षुषादेः कालिकादिसम्बन्धेन घटादिवृत्तितया पटो घटं न पश्य-तीति प्रयोगानुपपत्तेः आकाशादिविषयकत्वावच्छिन्ने चाक्षुषे कालि-कादिसम्बन्धेन घटादिवृत्तित्वनिश्चयदशायां घट आकाशं न पश्यतीति-वाक्याच्छाब्दबोधानुपपत्तेश्च। समवायेन घटादिवृत्तित्वाकाशादिविष-यकत्वोभयाभावस्यैव स्वीकरणीयतया अभाव आकाशं न पश्यतीत्यादौ अभावसमवेतत्वाप्रसिद्ध्या वाक्यार्थाप्रसिद्धेर्दुर्वारत्वात्।

---

त्वे सम्भवति कथम्परित्याग इत्यभिप्रायेणाह अथवेति। यत्र व्याप्यतावच्छेदक-सम्बन्धस्तादात्म्यन्तत्र तेनैव सम्बन्धेन स्वाश्रयस्स्वयमेव। अत एवात्र स्वाश्रयनि-ष्ठान्योन्याभावघटितं व्यापकत्वलक्षणं विहाय स्वनिष्ठान्योन्याऽभावघटितमेव व्याप-

चैत्रादेरतीतचाक्षुषस्य घटादिविषयकत्वेऽपि समयविशेषे चैत्रो घटं न पश्यतीतिप्रयोगाद्वर्तमानतादृशचाक्षुषत्वाद्यवच्छेदेन उभयाभावभानस्य प्रतियोगिकोटौ वर्तमानत्वमन्तर्भाव्य त्रित्वावच्छिन्नाभावभानस्य वा स्वीकरणीयतया यदा किञ्चिदंशेऽलौकिकमेव घटादिचाक्षुषं तस्य वर्त्तते तदा चैत्रो घटं न पश्यतीत्यादिप्रयोगापत्तेर्दुर्वारत्वात् वर्तमानालौकिकविषयताशून्यचाक्षुषत्वाद्यवच्छेदेन चैत्रवृत्तित्वघटविषयकत्वोभयाभावसत्त्वात् ।

समानेन्द्रियजन्योपनीतभानादौ लौकिकप्रत्यक्षसामग्र्या विरोधित्वस्य निष्प्रामाणिकतया लौकिकविषयतानियामकोपनायकज्ञानादिसमवहिततल्लौकिकसन्निकर्षाद्, घटादिनिरूपितलौकिकालौकिकोभयविषयताशालिचाक्षुषादेरुत्पत्त्या तादृशचाक्षुषादिदशायामुक्तप्रयोगापत्तेः । आकाशादिनिरूपितालौकिकविषयिताशालिवर्तमानचाक्षुषाद्यंशे घटादिवृत्तित्वस्य आकाशीयत्वादिना लौकिकविषयितायाश्च भ्रमदशायां घट आकाशं पश्यतीत्यादिवाक्याच्छाब्दबोधापत्तेर्दुर्वारत्वाच्च घटादिनिरूपितालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेन घटादिविषयित्वाघटितोभयाभावभानोपगमेऽप्यनिस्तारात् ।

एतेनाख्यातार्थवर्तमानत्वाद्यवच्छिन्नसमवायावच्छिन्नाश्रयत्वाद्यवच्छिन्ने आकाशादिविषयकप्रतियोगिकत्वलौकिकान्यविषयताशून्यचाक्षुषप्रतियोगिकत्वघटाद्यनुयोगिकत्वैतत्त्रितयत्वावच्छिन्नाभावो भासतेऽतोऽभाव आकाशं न पश्यतीत्यादौ नानुपपत्तिः । तत्र विषयितावत्प्रतियोगिकत्वं द्वितीयार्थः ।

निरुक्तचाक्षुषप्रतियोगिकत्वं त्रित्वं च धातोरर्थः । घटाद्यनुयोगित्वं च प्रथमान्तार्थं इत्यपि निरस्तमिति चेत् ? अगत्या घट आकाशं न पश्यतीत्यादिवाक्यानामप्रामाण्यमुपगन्तव्यमिति ॥ इति प्रथमखण्डम् ॥

---

कत्वलक्षणमिति गूढाशयः ।

समयविशेष इति—यस्मिन्काले घटप्रत्यक्षन्नास्ति तदेति मानसम् । उपनायकज्ञानादीति—उपनीतभानजनकज्ञानादीत्यर्थः । तत्तल्लौकिकसन्निकर्षादीति—घटविषयकलौकिकसन्निकर्षादीति । विषयितावत्प्रतियोगिकत्वमिति-नात्र सादृश्ये वतिः किन्तु विषयिताश्रयप्रतियोगिकत्वमित्याशयः ।

निरुक्तचाक्षुषेति—लौकिकान्यविषयिताशून्यचाक्षुषेत्यर्थः ।

इति प्रथमखण्डः ।

अनुमित्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा द्वितीयार्थः तेन वह्न्यादिपक्षकानुमितिपरस्य वह्निमनुमिनोमीत्यादिवाक्यस्य न प्रामाण्यम्। यदि च वह्निसाध्यकपर्वतपक्षकानुमितिपरस्य वह्निमत्त्वेन पर्वतमनुमिनोमीत्यादिवाक्यस्यापि प्रामाण्यं मन्यते तदा तादृशे धातुसंयोगे उद्देश्यत्वमुद्देश्यित्वं वा द्वितीयार्थः। तस्य च तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वेन विशिष्टेऽन्वयः। अतो वह्निमत्त्वेनेत्याद्यसमभिव्याहारेण तत्र पर्वतमनुमिनोमीत्यादयो न प्रयोगाः। विधेयत्वाद्यर्थे तृतीयानुशासनविरहात् तृतीयान्तेन वह्न्यादिविधेयकत्वं कथमुपस्थापनीयमिति न शङ्क्यम्। वैशिष्ट्यरूपार्थे तृतीयानुशासनसत्त्वात्। विधेयतादेरपि वैशिष्ट्यरूपत्वात्।

अत एव रजतत्वेन शुक्तिं जानातीत्यादौ ज्ञाने रजतत्वादिप्रकारकत्वस्य घटत्वेन वह्निर्नास्तीत्यादौ सौन्दडमते अभावे घटत्वावच्छिन्नप्रतियोगिताकत्वस्य तृतीयान्ततो बोधः।

तृतीयान्तार्थरजतत्वादिप्रकारकत्वद्वितीयान्तार्थशुक्त्यादिविषयकत्वयोः विशिष्टवैशिष्ट्यबोधमर्यादयाऽवच्छेद्यावच्छेदकभावभानम्। रजतत्वेन शुक्तिं जानातीत्यादौ नियतं केवलमेकत्र द्वयमितिरीत्या तदुभयबोधस्य तत्राव्युत्पन्नत्वात्। अत इमे शुक्तिरजते इत्यादिप्रमापरस्य तादृशवाक्यस्य न प्रामाण्यम्। घटत्वाद्यवच्छिन्नवह्न्यभावनिष्ठेन वयह्न्यभावादिनिरूपितानुयोगिताविशेषरूपवह्न्याद्यभावत्वेन तदभावनिष्ठघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्यावच्छेद्यावच्छेदकभावः स्वीक्रियते। घटत्वेन वह्न्याद्यभावस्य वह्नित्वावच्छिन्नघटाद्यभावसमनियतत्वेन तद्भिन्नतया तत्र घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वघटाद्यभावत्वसत्त्वेऽपि तादृशाभावपरस्य घटत्वेन घटो नास्ति, वह्नित्वेन वह्निर्नास्तीत्यादिवाक्यस्य न प्रामाण्यम्।

---

विधेयत्वमिति।

पर्वते वह्निरित्यनुमितौ वह्निव्याप्यधूमः पर्वते इति परामर्शाऽनन्तरं विशेष्यस्य वह्नेरेव विधेयत्वात् विधेयतात्वं प्रकारत्वविशेष्यत्वाभ्यां विलक्षणम्। सर्वेषु घटेषु रूपमिति वाक्यार्थादपि निश्चीयते प्रकारत्वं विशेष्यत्वञ्च न विधेयतोद्देश्यतयोः। तथाच उद्देश्यस्य विशेष्यत्वं विधेयस्य प्रकारत्वमिति नियमस्सार्वत्रिको नास्त्यपि तु उद्देश्यत्वं विषयताविशेष एव। विधेयत्वञ्च विषयताविशेष एवाधिकन्त्वस्मत्कृतपरिष्कारदर्पणे द्रष्टव्यम्।

तादृशवाक्यस्य—रजतत्वेन शुक्तिज्ञानातीत्यस्य। 'अवच्छेद्यावच्छेदक-

उक्तस्थले च [^1] तृतीयान्तार्थस्य द्वितीयान्तार्थेऽवच्छेद्यावच्छेदकभावसम्बन्धेनान्वय इत्यपि केचित्। तन्न? विभक्त्यर्थे विभक्त्यर्थान्वयस्याव्युत्पन्नत्वात्। नच रजतत्वेनेदं ज्ञायते इत्यादौ आख्यातार्थविषयता तृतीयार्थप्रकारतायां निरूपितत्वसम्बन्धेनान्वयान्नोक्तव्युत्पत्तिकल्पनमिति वाच्यम्? तत्रापि रजतत्वादिप्रकारकत्वविशिष्टधात्वर्थज्ञाननिरूपितत्वस्याख्यातार्थे भानस्वीकारेणैवातिप्रसङ्गभङ्गात्। नच तस्मात्पचति तस्माच्चैत्रस्येत्यादौ विभक्त्यर्थे कृतिसम्बन्धादौ विभक्त्यर्थान्वयदर्शनान्नास्त्युक्ता व्युत्पत्तिरिति वाच्यम्? हेतुविभक्त्यर्थातिरिक्तविभक्त्यर्थस्यानन्वयनियमात्।

न च रजतत्वेनेदं जानातीत्यादौ तृतीयायाः कारकविभक्तित्वाभावान्न तदर्थस्य क्रियायामन्वयसम्भव इत्यगत्या द्वितीयार्थ एव तदन्वय उपगन्तव्य इति वाच्यम्? मणिकारमते तस्माज्जानातीत्यादौ ज्ञानादिरूपधात्वर्थे हेतुविभक्त्यर्थस्य तस्मात् स्थीयते इत्यादौ च सर्वमत एव धात्वर्थस्थित्यादौ तस्यान्वयेन षष्ठ्यर्थसम्बन्धस्यापि "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैरि"त्यादौ धात्वर्थेऽन्वयेन कर्मासमभिव्याहृते रजतत्वेन जानातीत्यादौ धात्वर्थे तृतीयार्थान्वयस्यावश्यकत्वेन कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वय इत्यनियमात्।

एवं घटत्वेन वह्निर्नास्तीत्यादौ प्रथमार्थो नानुयोगित्वम्। प्रथमायाः संख्यातिरिक्तार्थाबोधकत्वनियमात्। अतो नञर्थाभावे संबन्ध एव तत्। तत्र च न तृतीयार्थान्वयसंभवः।

मम तु अनुयोगितासंबन्धेन वह्न्यादिविशिष्टाभावे तृतीयान्तार्थघटत्वावच्छिन्नप्रतियोगिताकत्ववैशिष्ट्यभानाद्विशिष्टवैशिष्ट्यबोधमर्यादया वह्न्याद्यनुयोगिकत्वस्थलीयस्यानुयोगितया सम्बद्धवह्न्यादेस्तादृशप्रतियोगिताकत्वेनावच्छेद्यावच्छेदकभावभानोपगमेन सामञ्जस्यात्।

अनुयोगितायाः नञर्थतावच्छेदकत्वे तत्रैव वह्न्यादेः प्रतियोगिनोऽन्वयः। अतस्तत्र तृतीयान्तार्थघटत्वावच्छिन्नप्रतियोगितायाः निरूपकत्वेनान्वयं स्वीकृत्यातिप्रसङ्गवारणं सम्यक् प्रतिभाति। रङ्गेऽभेदेन रजतारोपस्थले रङ्गं रजतेन जानातीत्यप्रयोगात्। तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रकारतैव तृतीयार्थः।

---

[^1]: भाव इति—परस्परमिति शेषः। उक्तस्थले चेति—रजतत्वेन शुक्तिज्ञानातीत्यादौ चेत्यर्थः। तादृशप्रतियोगिकत्वेनेति—घटत्वावच्छिन्नप्रतियोगिताकवह्न्यभावपरस्य नैव प्रामाण्यम्। प्रतियोगिनोऽन्वय इति—निरूपितत्वसम्बन्धेनेत्याकूतम्।

तत्र च रङ्गं रजतं जानातीति प्रयोगात्तादात्म्यसम्बन्धावच्छिन्नप्रकारता कर्मत्वानुशिष्टद्वितीयादेरेवार्थः। तस्याश्च तादृशप्रकारवाचिपदसमानविभक्तिकपदोपस्थाप्यविशेष्यताविशिष्टायामेव ज्ञानरूपक्रियायामन्वयः। तेन भेदारोपस्थले रङ्गे रजतत्वं जानातीतिवद्भेदारोपस्थले रङ्गं रजतं जानातीति न प्रयोगः। उक्तस्थले च रङ्गरजताद्योः समानविभक्तिकपदोपस्थाप्ययोरभेदान्वये साकाङ्क्षत्वेऽपि नायोग्यतया तादृशान्वयः। ननु एवं सति रङ्गरजतादिपदयोः सामानाधिकरण्यानुपपत्तिरिति चेत् का क्षतिः? न चैवं रजतगतैकत्वबहुत्वाविवक्षायां रङ्गानि रजतं जानातीति प्रयोगस्य, स्त्रियं पांसुलान् जानातीति प्रयोगस्य च प्रसङ्गः, सामानाधिकरण्यस्यैव समानवचनलिङ्गकत्वनियतत्वादिति वाच्यम्? समानाधिकरणयोरिव यत्पदार्थविशेष्यकत्वविशिष्टेऽभेदसम्बन्धावच्छिन्नयत्पदार्थप्रकारकत्वस्यान्वयस्तयोरपि समानलिङ्गवचनत्वनियमात्।

यज्ञपतिमतानुयायिनस्तु रङ्गं रजतं जानातीत्यादौ सामानाधिकरण्यानुरोधाद् रजतादिपदस्य रजताभेदज्ञानविषये लक्षणा। अत एव भ्रान्तिज्ञविशेषदर्शिना प्रयुक्तस्य लोहितवह्निं जानातीत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः। नह्यसमासस्थल इव लोहितवह्न्याद्योरभेदाविवक्षा ज्ञानांशे लोहितादेः स्वातन्त्र्येणान्वयो वा सम्भवति, कर्मधारयस्य साधुतानुपपत्तेः। लोहितपदोत्तरं प्रकारताबोधकविभक्तेरभावात्। धात्वर्थे साक्षान्नामार्थस्य भेदान्वयेऽव्युत्पत्तेः द्वन्द्वस्थलवत्कर्मधारयोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावात् तस्याः पूर्वपदार्थान्वितप्रकारताबोधकत्वायोगात्। न च द्वन्द्वसमास एवासौ? अल्पाचो वह्निपदस्य पूर्वनिपातप्रसङ्गात्। समाहारपक्षे पुंल्लिङ्गताया इतरेतरपक्षे च एकवचनस्यानुपपत्तेः। एतन्मते शुक्लो वह्निरित्यादिप्रमायां लोहिताभेदारोपविषयवह्निविषयकत्वेऽपि शुक्लो वह्निर्लोहिता जपेति समूहालम्बनप्रमाया लोहिताभेदावगाहिस्वविषयवह्निविषयकत्वेऽपि च तद्दशाया लोहितवह्निं लोहितं वह्निं वा जानातीति न प्रयोगः। तादृशपदोपस्थाप्यविषयताया धर्मिपारतन्त्र्येण द्वितीयार्थविषयतायामभेदसम्बन्धेन विशेषणतायास नियमोपगमात्। अथवा लोहिताभेदविषयतानिरूपितविषयताप

---

ज्ञानरूपक्रियायामिति—एवञ्च रङ्गनिष्ठविशेष्यताविशिष्टं यद्रजतनिष्ठप्रकारताविशिष्टं ज्ञानन्तदाश्रय इति शाब्दबोधप्रकारः। घटपटाविति द्वन्द्ववन्न कर्मधारये व्यवहार इत्याशयेनाह द्वन्द्वस्थलवदित्यादि।

अस्य वह्न्यादेर्ज्ञानान्वयितानिरूपकत्वं भासते। समूहालम्बनादौ च तादृशविषयतानापन्नस्यैव विषयितानिरूपकत्वमिति नातिप्रसङ्गः। विषयितापन्नस्य निरूपकत्वमित्यस्य च विषयतावच्छिन्नं निरूपकत्वमित्यर्थः। एतच्च विलक्षणं विषयितानिरूपकतावच्छेदकत्वमविषयस्यापि विषयत्वस्योपेयते, रक्तदण्डवानित्यादौ दण्डादिरूपप्रकारांशेऽप्रकारेणापि रक्तत्वादिप्रकारतानिरूपितविशेष्यत्वेन दण्डादिप्रकारताया अवच्छेद्यावच्छेदकभावादित्याहुः। तन्न शोभनम् ? उक्तरीत्या विनैव लक्षणानुपपत्तौ तस्या अन्याय्यत्वात्।

अथोक्तस्थले आरोप्यारोपविषयबोधकपदयोर्ज्ञानान्वितार्थकत्वे कर्मप्रत्ययस्थले लोहितो वह्निर्ज्ञायते इत्यादौ विशेष्यभेदाद्वाक्यभेदापत्तिः। न च लोहिताभेदज्ञानविषयो वह्निरित्येव शाब्दधीरुपगम्यते न तु ज्ञाने प्रकारो लोहितो विशेष्यश्च वह्निरिति समूहालम्बनम् ? तथा सति शुक्लो वह्निर्लोहिता जपेत्यादावपि तथा प्रयोगप्रसङ्गात्। दर्शितविशिष्टवैशिष्ट्यबोधस्वीकारे लोहितादिप्रकारकत्वविशिष्टनिरूपितविशेष्यतायाः शुक्लवह्न्यादौ बाधितत्वेन तादृशप्रयोगापत्तिविरहादिति वाच्यम् ? तत्र लोहितादिपदोत्तरप्रकारतार्थकद्वितीयादिविरहेण लोहितादिप्रकारकत्वेन ज्ञानभानासम्भवात्। नामार्थधात्वर्थयोः साक्षादन्वयस्याव्युत्पन्नतया प्रकारतायाः संसर्गतया भानासम्भवादिति चेन्न ? यथाहि—घटो नीलो भवति, वृक्षो नौका भवति, काष्ठं भस्म भवतीत्यादौ धात्वर्थेऽसाधारणधर्मरूपे भावे व्युत्पत्तिवैचित्र्येण नीलनौकाभस्मादेः साक्षादेवान्वयः। प्रथमाया अन्तरा भासमानार्थकत्वाभावात्। नौकादिपदस्य स्वारम्भकावयवारभ्याद्यर्थलाक्षणिकतया प्रकृतिविकृत्योर्भेदमतेऽपि वृक्षो नौका भवतीत्यादौ योग्यताया उपपत्तिः। तथा धात्वर्थे प्रकृतेऽपि प्रकारतासम्बन्धेन लोहितादेः साक्षादन्वयस्यागत्योपगमात्।

यथा प्रकृतिविकृतिभावस्थले वृक्षः पञ्च नौका भवतीत्यादौ प्रकृतिभूतवृक्षादेर्विशेष्यतया भावनान्वयित्वात्, तद्गतसंख्याबोधकतया प्रकृतिवाचकपदसमानवचनत्वमाख्यातस्य। तथा एको द्वौ ज्ञायते इत्यादावुभयार्थाभेदारोपस्थलीयवाक्ये एकादिपदार्थस्यारोपविशेष्यस्याख्यातार्थविशेष्यतान्वयविशेष्यतया तत्पदसमानवचनत्वमाख्यातस्य। नचैवम् "अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्" इत्यत्र कथमारोप्यविशेष्यवाचकपदविरुद्धवचनत्वममानीतिक्रियापदस्येति वाच्यम् ?

---

उक्तस्थल इति—रङ्गं रजतं जानातीत्यादौ। नचेति—वाच्यमितिपरेणान्वयः।

यथा प्रकृतिविकृतिभावस्थल इति।

तत्रायशोद्वयस्य वास्तवत्वं न चिकुरभागद्वयस्य, राज्ञ आरोप्यत्वेन कवेरुत्प्रेक्षितत्वात्। आख्यातार्थे विशेष्यतान्वयविशेष्यत्वेनायशोयुगस्यैव विवक्षितत्वात् इच्छार्थकधातुस्थले मुख्यविशेष्यत्वरूपं कर्मत्वं द्वितीयाद्यर्थः। अतो वृष्टिसाध्यं सुखं भवत्वित्यादीच्छास्थले सुखमिच्छतीत्यादिवद् वृष्टिमिच्छतीत्यादयो न प्रयोगाः।

अथ अहं सुखी स्यामित्यादीच्छायाः सुखादिविशेषणकतया तत्र सुखमिच्छतीत्यादिप्रयोगानुपपत्तिरिति चेन्न? मम सुखं भवत्वित्यादिसुखविशेष्यकेच्छाया एव कदाचित्सुखादिविशिष्टात्मबोधकशब्देन विषयाभिलापात्। स्वकृत्यधीनसिद्धिकत्वरूपस्वकृतिसाध्यत्वप्रकारकपाकविशेष्यकेच्छाया एव पाकं कृत्या साधयामीति पाकसिद्ध्यनुकूलकृत्यभिन्नव्यापारविशिष्टबोधकशब्देन विषयाभिलापवत्। यदि चोद्देश्यसुखादेर्विशेषणतयाऽपि क्वचिद्भानमानुभविकं तदोद्देश्यादिव्यवहारनियामकः क्वचित्किंचिद्विशेषणसाधारणो विषयताविशेषोऽभ्युपेयः। अनुमितौ विशेष्यतया क्वाचित्कभानविषयसाध्यनिष्ठविधेयताख्यविषयतावत्। स एव च सुखमिच्छतीत्यादौ द्वितीयाद्यर्थः। ग्राममिच्छतीत्यादौ ग्रामादिपदं ग्रामस्वत्वादिपरम्। अत एव च सिद्धस्य ग्रामादेर्मुख्यविशेष्यताया उपदर्शितविलक्षणविषयताया विरहेऽपि न क्षतिः। ग्रामादेः सिद्धत्वेऽपि स्वस्वत्वाद्यसिद्धोपरक्तस्य इच्छायां प्राधान्येन क्वचिद्भानं, विशिष्टस्यासिद्धत्वात्। तत्रैव च ग्राममिच्छतीत्यादिप्रयोग इत्यपि वदन्ति।

पाकं चिकीर्षतीत्यादौ द्वितीयाया विशेष्यतारूपकर्मत्वार्थकतया कृतिप्रकारकपाकविशेष्यकेच्छा प्रतीयते। सा च पाकं कृत्या साधयामीतीच्छा। अथवा सनो धात्वर्थविशेष्यकेच्छावाचित्वात्कृतिविशेष्यकेच्छा चिकीर्षापदार्थः। सा च पाककृतिर्भवत्वितीच्छैव। प्रवर्त्तिका च सा भवतु मा वेत्यन्यदेतत्। पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते नत्विच्छाया विषयत्वरूपं कर्मत्वम्? गृहस्थितीच्छामादाय गृहं तिष्ठासतीत्यादिप्रयोगापत्तेः। युक्तं चैतत्। सनो धात्वर्थप्रकारकेच्छावाचित्वे ओदनभोजनेच्छादशायामोदनं बुभुक्षते इति प्रयोगो न स्यात्। तत्र भोजनस्याप्रकारत्वात्।

---

प्रकृतिर्विकृतिर्वाऽपि यत्रास्तित्वन्द्वयोरपि।
गृह्णाति प्रकृतेस्संख्यां वाचको विकृतेन्नंतु॥

इति पुरातनं पद्यम्।

अप्रकारत्वादिति—तादृशेच्छाया ओदनभोजनम्भवत्वित्याकारकत्वादिति

नच कर्मतासम्बन्धेन भोजनप्रकारिका यदा ओदनविशेष्यकेच्छा तदैवैतादृशप्रयोगः । सा चेच्छा भोजनधर्मिकेष्टसाधनताज्ञानाद्भोजनविशिष्टौदनधर्मिकेष्टसाधनताज्ञानाद्वा । ओदनस्य सिद्धतादशायामपि विशिष्टधर्मिकेष्टसाधनताज्ञानाद्विशिष्टधर्मिकासिद्धत्वज्ञानसहिताद्विशिष्टेच्छासम्भवात् । यत्र भोजनसिद्धतादशायां भोजनोत्तरकालीनगमनत्वादिप्रकारिका भुक्तौदनजन्यपुष्टित्वादिप्रकारिका वा इच्छा तत्र बुभुक्षत इति प्रयोगस्य न प्रसङ्गः । मुख्यविशेष्यविशेषणतापन्नकर्मत्वांशे इच्छाप्रकारतया एव सन्प्रकृत्यर्थभानोपगमादिति वाच्यम् ? भोजनं भवत्वित्यादिभोजनविशेष्यकेच्छादशायामपि बुभुक्षते इति प्रयोगस्य सर्वसिद्धत्वात् । धात्वर्थविशेष्यकेच्छाबोधकतायाः सन्प्रत्ययस्यावश्यमुपेयत्वात् ।

न च द्वयी व्युत्पत्तिरेवोपेयते । एकव्युत्पत्त्यैव निर्वाहे व्युत्पत्तिद्वयकल्पने गौरवात् । अत एव च स्थित्यादिगोचरेच्छाया गृहादिविशेष्यकत्वस्योक्तरीत्या सम्भवेऽपि गृहं तिष्ठासतीत्यादयो न प्रयोगाः । भोजनप्रकारकौदनविशेष्यकेच्छाविशेषदशायां बुभुक्षत इति प्रयोगसत्त्वे तु उद्देश्यताख्यविषयताया एव धात्वर्थे भानोपगमेन तस्य निर्वाहात् । नच धात्वर्थविशेष्यकेच्छायाः सन्प्रत्ययार्थत्वे पाकं चिकीर्षति, ओदनं बुभुक्षते इत्यादौ पाकौदनादेर्द्वितीयया कृतिभोजनादिकर्मत्वप्रत्यायनसम्भवेऽपि पाकश्चिकीर्ष्यते ओदनो बुभुक्ष्यते इत्यादौ कर्माख्यातेन तत्प्रत्यायनासम्भवः । तत्प्रकृतिभूतसन्नन्तधात्वर्थकृतिभोजनेच्छाकर्मत्वस्यैव तत्प्रत्ययेन बोध्यत्वात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् । इच्छाविषयत्वविशेषितविशिष्टकृतिभोजनादेश्च प्रकृत्यप्रतिपादनादिति वाच्यम् ? कर्तृप्रत्ययस्थले सन्प्रत्ययार्थेच्छाया धात्वर्थविशेष्यतया भानेऽपि कर्मप्रत्ययस्थले तस्या धात्वर्थविशेषणतया भानोपगमात् । चिकीर्ष्यते पाक इत्यादौ इच्छाविशेषितकृत्यादिकर्मताया आत्मनेपदादिना प्रत्यायनसम्भवात् । आख्याताद्युपस्थितवर्त्तमानत्वादेश्च कृत्यादिविषयकेच्छा यत्र प्रकृत्यर्थः, यत्र वा इच्छाविषयकृतिस्तत्रोभयत्रैवेच्छायामन्वयः, प्रकृत्यर्थैकदेशेऽपि नीलतरो घट इत्यादिस्थले नीलरूपादौ तरबाद्यर्थातिशयान्वयानुरोधात् । नचैवं कर्मप्रत्ययस्थलेऽपि कृतिविशेषितैवेच्छा सना प्रत्याय्यतां, विशेषणीभवन्ती कृतिरेव कर्मत्वेनान्वीयताम्, भवन्मते विशेषणीभूतेच्छायां वर्त्तमानत्वाद्यपराख्यातार्थान्वयवदिति वाच्यम् ? एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयोऽव्यु-

---

हृदयम् । अत्र कर्मत्वांश इति पाठो न युक्तः किन्तु कर्मांश इति ।

कर्मत्वेनेति—अत्र सहेति शेषः

१६ व्यु०

त्पन्न इति प्रथमान्तार्थविशेषणकर्मत्वे इच्छायां विशेषणतयोपस्थितस्य धात्वर्थस्य विशेषणतयान्वयायोगात्। विशेष्यतया चान्वयस्याप्रसक्तत्वात्। धात्वर्थविशेषणतया इच्छाभानेऽपि तस्या वर्त्तमानत्वादिविशेष्यतयैव भानेनोक्तव्युत्पत्तिविरोधविरहात्। एवं धात्वर्थस्येतरविशेषणतयोपस्थितस्य स्वातन्त्र्येण कर्मताविशेषणत्वमयुक्तममेव। प्रकृत्यर्थस्यैकदेशेऽपि प्रकृत्यर्थान्तर्गततया भासमाने एव प्रत्ययार्थान्वयदर्शनात्, न तु स्वातन्त्र्येण भासमान इच्छारूपविशेष्यपारतन्त्र्येण कर्मत्वान्वयोऽपि इच्छायां कर्मत्वानन्वयेन दुर्घटः। विशेष्यान्वयिन्येव विशेषणस्य पारतन्त्र्येणान्वयस्य विशिष्टान्वयस्थले व्युत्पत्तिसिद्धत्वात्।

---

कर्म त्रिविधमिति।

एको द्वौ शयत इत्यादावाख्यातस्यारोप्यविशेष्यवाचकपदसमानवचनत्वमत एव एकोऽपि त्रय इव भाति कन्दुकोऽयमिति कवयः। निर्वर्त्यम् विकार्यम् प्राप्यञ्चेति भस्मीभवन्ति काष्ठानि काष्ठानि भस्म क्रियन्ते। एको वृक्षः पञ्च नौका भवति।

प्रकृतिर्विकृतिर्वाऽपि यत्राऽस्तित्वन्द्वयोरपि।
गृह्णाति प्रकृतेस्संख्यां वाचको विकृतेर्नतु॥

इत्युक्तिः च्विप्रत्ययमात्रविषयिणीति। अत एव व्याकरणमहाभाष्यीयपस्पशायां पुनरावृत्तस्सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवत इत्यत्र विकृतिरूपकुण्डलगतद्वित्वसंख्यया क्रियायां द्विवचनत्वम्। तथाच पूर्वोक्तकाष्ठानि भस्मराशिः क्रियन्त इतिप्रयोगो भाष्यरीत्याऽनुपपन्नः।

अत्र विलक्षणाः

भाष्योक्तमहावाक्ये कुण्डलयोः प्रकृतित्वमेव नतु विकृतित्वम्। खदिराङ्गारसदृशे इतिविशेषणोपादानात् पुनरपरयाऽकृत्या युक्त इतिविशेषणदानेन सुवर्णपिण्डस्य विकृतित्वम्। पुनरावृत्त इतिविशेषणदानेनाऽपि सुवर्णपिण्डस्य विकृतित्वम्। अत एव वाचारम्भणं विकारो नामधेयम्मृत्तिकेत्येव सत्यम्। सुवर्णं एव नित्यः तत्पिण्डादिस्त्वनित्योऽर्थाद्विकृतिरेव तद्विकृतित्वमेव भाष्यकृत्तात्पर्य्यविषय इति।

वस्तुतस्तु

सुवर्णपिण्डात्कुण्डले निष्पद्येते इतिलोकसिद्धो व्यवहारः प्रत्यक्षीकृतोऽतो विकृतिगतसंख्यैव कुण्डले भवत इतिभगवतोक्ता। तथा च प्रयोगवशेन पर्यायेण कदाचित् कुत्रचित् प्रकृतिगतसंख्यासमानवचनत्वमाख्यातस्य, कुत्रचित् विकृतिगतसंख्यासमानवचनत्वमाख्यातस्येति शुक्लाः। कर्मण उदाहरणानि घटं करोति काष्ठम्भस्म करोति २ सुवर्णं कुण्डलं करोति ३ घटम्पश्यति ४।

क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥

अथास्तु विषयतारूपकर्मत्वे चिकीर्ष्यते पाक इत्यादाविच्छायास्तत्परनन्त्रकृतेश्चान्वयः। उभयत्रैव पाकादेर्विषयत्वात्। स्थित्यादिकर्मत्वाप्रसिद्धया च गृहं तिष्ठास्यते इत्यादेरप्रसङ्गादिति चेत्? ओदनो बुभुक्ष्यते इत्यादौ का गतिः। तत्रेच्छाकर्मताया विषयतारूपत्वात्। भोजनादिकर्मतायाश्च तदन्यत्वात्। विशेष्योभवदिच्छान्वयिनि कर्मत्वे भोजनाद्यन्वयायोग्यत्वेन विशिष्टान्वयासम्भवात्। वस्तुतः पाकश्चिकीर्ष्यत इत्यत्राप्यगतिरेव? कृतिविशेषणतया पाकनिष्ठेच्छाविषयतायाः कृत्यविशेषणतया तन्निष्ठकृतिविषयताभिन्नतया इच्छान्वयिनो विषयत्वरूपकर्मत्वस्य कृत्यन्वयायोग्यत्वात्। यदि च विशेष्यान्वयिव्यक्तावेतत्पारतन्त्र्येण विशेषणान्वय इति इति न नियमः, अपि तु तदन्वयितावच्छेदकावच्छिन्न एवेति। तथा च विषयतात्वावच्छिन्नस्योभयान्वयोग्यतया न प्रकृतेऽप्यन्वयानुपपत्तिः।

अत एवारुणयेत्यादावारुण्यनिरूपितसाध्यताया गोनिरूपितसाध्यताभिन्नत्वेऽपि न तृतीयार्थे विशिष्टान्वयानुपपत्तिः। तत्र परम्परया विशेष्यान्वयिसोमक्रयव्यक्तेः परम्परया विशेषणान्वयिव्यक्त्यभेदवत् प्रकृतेऽपि परम्परयोभयान्वयिकर्मव्यक्त्यभेदोऽक्षत एवेत्युच्यते तदा भोजनकृतिर्भवतु पाकश्च भवतु इति समूहालम्बनेच्छामादाय पाकश्चिकीर्ष्यते इति प्रयोगस्य कालान्तरीयकृतिविषयतामादाय दुर्वारतैव। विषयितासम्बन्धेनेच्छाविशेषणीभूतकृतिव्यक्तिकर्मत्वान्वयस्यैव तदिच्छान्वयिनि कर्मण्यन्वयान्नायमितिप्रसङ्ग इति चेत्तथापि तदिच्छाकाले पाक इदानीं न चिकीर्ष्यते इति प्रयोगानुपपत्तिः।

अन्वयितावच्छेदककृतिविषयतात्वकृतिगोचरवर्त्तमानेच्छाविषयता-

---

इतोऽधिकम्वैयाकरणभूषणसारे द्रष्टव्यम्, कृतिविशेषणतयेत्यादीति—विषयत्वसम्बन्धावच्छिन्नपाकनिष्ठप्रकारतानिरूपितकृतिविशेष्यकबोध इति।

अत एवारुणयेत्यादीति।

"अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती"तिश्रुतिः। अत्र साध्यत्वं प्रयोज्यत्वं वा तृतीयार्थः। तस्य सोमकर्मकक्रयणेऽन्वयः। आरुण्य पदार्थस्याऽमूर्त्तत्वेन गोरूपद्रव्यपदार्थद्वारा विशिष्टाऽन्वयमहिम्ना सोमक्रयणेऽन्वयः। एवञ्च आरुण्यादिविशिष्टगोनिरूपितसाध्यतावत्सोमकर्मकक्रयणानुकूला भावनेति। अत्र साध्यता गोनिरूपिता साक्षादेव। आरुण्यनिरूपिता तु साध्यता गोरूपद्रव्यपरिच्छेदद्वारेति। एवम्प्रकृतेप्यन्वयव्यवस्थेति भावः।

तथा प्रयोगविरहादिति—पाक इदानीन्न चिकीर्ष्यंत इत्याकारकप्रयोगविर-

त्वावच्छिन्नाभावयोस्तदा पाकेऽसत्त्वात्। न च वर्त्तमानकालावच्छिन्न-कृतिविषयत्वत्वावच्छिन्नाभाव एव तत्र प्रतीयते, स पाके बाधित इति वाच्यम्? यद्यतीतेच्छाधीनपाककृतिरपि तत्र वर्त्तते तदा तादृशाभाव-स्यापि तत्र बाधात् पाककृतीच्छायामसत्यामुक्तेच्छासत्त्वेऽपि च तथा प्रयोगात्। कृत्यसत्त्वेऽपि पाककृतीच्छासत्त्वे तथा प्रयोगविरहात्। कृ-तिविषयत्वाभावमात्रबोधस्य तत्राभ्युपगमासम्भवाच्चेति। कर्मप्रत्यय-स्थले इच्छा धात्वर्थविशेषणमेव।

इदन्तु तत्त्वम्। कर्मप्रत्ययस्थलेऽपि धात्वर्थविशेषितैवेच्छा सन्प्रत्य-येन प्रत्याय्यते। तत्कर्मत्वमेव कर्माख्यातार्थः। तच्च धात्वर्थकर्मतया तद्विषयत्वम्? ओदनकर्मकभोजनं भवतु, पाकविषयककृतिर्भवतु इत्या-दीच्छायां च पाकभोजनादीनां तथेच्छाविषयतया तत्कर्मत्वमक्षतम्। गृ-हस्थित्यादीच्छायां गृहादेः स्थित्याधारत्वादिनैव विषयत्वमिति न गृहा-देस्तिष्ठासादिकर्मत्वम्। अत एव यदोदनव्यक्तिकर्मकभोजनमप्रसिद्धम्, अथ च भोजनकर्मतया तदिष्टं तत्रायमोदनो बुभुक्ष्यत इत्यादेर्दर्शनादि-विषयत्वेन गगनादिगोचरेच्छास्थले च गगनं दिदृक्षते इत्यादेश्च प्रयो-गस्य नानुपपत्तिः। न वा ओदनादिरूपकर्ममात्रोपरागेण यत्र भोजना-दीच्छा दैववशेन च तद्भोजनादिकं विषादिकर्मकमपि तत्र विषं बुभु-क्ष्यते इत्यादयः प्रयोगाः।

कर्तृप्रत्ययस्थलेऽपि च तादृशविषयतारूपं कर्मत्वमेव इच्छाविशेष-णतया भासते न तु धात्वर्थकर्मत्वम्। धात्वर्थविशेषणतया तत्पदार्थकर्म-त्वविशिष्टभोजनादिनिरूपितविषयिताया नियमत इच्छायां भानोपगमे-नोक्तस्थले विषं बुभुक्ष्यते चैत्र इत्यादिप्रयोगवारणेऽपि गगनं दिदृक्षते चैत्र इत्यादिप्रयोगस्य दुरुपपादत्वात्। इदन्तु बोध्यम्। सन्प्रतिपाद्ये-च्छायां धात्वर्थकृतिभोजनादेःकेवलविशेष्यतासम्बन्धेन न विशेषणत्वम्। तथा सति परकर्तृककृतिभोजनादिगोचरेच्छावति अयं चिकीर्षति बुभु-क्षत इति प्रयोगप्रसङ्गात्, किन्तु विशेष्यतासमानकर्तृत्वोभयसम्बन्धेनैव उक्तातिप्रसङ्गवारणाय इच्छासमानकर्तृकत्वेऽपि सन्प्रत्ययवाच्यतां स्वी-कृत्य क्रियायां तदन्वयोपगमो न साधीयान्। इच्छान्तरसमानकर्तृकत्व-

---

हादिति तत्त्वम्। तद्विषयत्वमिति—इच्छीयधात्वर्थनिष्ठविषयतानिरूपितकर्मत्वनि-ष्ठविषयत्वविशेषरूपमेव कर्मत्वमिति फलति।

भानोपगमेनेति—ओदनभोजनेच्छया विषकर्मकत्वविशिष्टभोजननिरूपिता वि-षयिता नास्ति किन्तु विषभोजनेच्छायामेवास्ति। एवञ्च विषम्बुभुक्षत इत्यत्र नाऽप-त्तिरिति तत्त्वम्।

मादाय दर्शितस्थलेऽतिप्रसङ्गतादवस्थ्यात्। स्वसमानकर्तृकत्वस्य वाच्यत्वे तत्तदिच्छारूपपदार्थानामननुगमेन व्युत्पत्त्यनुपपत्तिः।

न च समानकर्तृकत्वस्य सम्बन्धत्वोपगमे तत्र शक्तिग्राहकानुशासनविरोधः। यतो धातोः कर्मणः समानकर्तृकादिच्छायां वेति सन्प्रत्ययविधायकसूत्रं सनः समानकर्तृकत्वार्थकतां न प्रतिपादयति। तस्य हीच्छाकर्मत्वेन तत्समानकर्तृत्वेन च स्वार्थपराद्धातोरिच्छारूपार्थे सन् भवतीत्येवार्थः। इच्छाधात्वर्थयोः संसर्गतया समानकर्तृकत्वविवक्षायामपि समानकर्तृकत्वोपरक्तार्थपरत्वं धातोर्निर्वहतीति, इच्छामात्रे शक्तिग्राहकं तत्सूत्रमिति। सुबन्तोत्तरेच्छार्थविहितक्यच्काम्यजन्तस्य धातोरिच्छार्थकतया सन्प्रत्ययान्तविशेषेऽपि सन्नन्तधातुवन्न सकर्मकता। तदन्तर्गतप्रातिपदिकस्यैव कर्मबोधकतयेच्छायाः कर्माकाङ्क्षाविरहात्। न च पुत्रीयति पुत्रकाम्यतीत्यादौ क्यजादिप्रकृत्यर्थपुत्रादेः क्रियात्वाभावेनाकर्मकत्वेऽपि आत्मनः पाकमिच्छति पाकीयतीत्यादौ प्रकृत्यपाकादेः सकर्मकतया सन्नन्तसमुदायवत् क्यजन्तपाकादिसमुदायस्य सकर्मकतया दुर्वारतया तण्डुलं पाकीयतीत्यादिप्रयोगापत्तिरिति वाच्यम्? कृधातुसमानार्थयतेरिव सन्नन्तसमानार्थकस्य क्यजन्तादेरपि कर्मताबोधकसुप्साकाङ्क्षत्वानुपगमेन तथा प्रयोगाप्रसङ्गात्।

कृदन्तकर्मत्वविवक्षायां तु षष्ठ्या बाधात् द्वितीयाया अप्रसक्तेश्च। धात्वयवकृद्योगकर्तृकर्मणोः कृतीत्यस्य द्वितीयाबाधकत्वे कंसकर्मकवधमाचष्टे कंसं घातयतीत्यत्र द्वितीया न स्यात्। कंसस्याख्यानकर्मत्वायोगेन वधकर्मतयैव तदुत्तरं द्वितीयासमर्थनादिति वाच्यम्?

कृदन्तोत्तरं यत्राख्यानार्थे णिच् तत्र प्रकृतिवच्च कारकमित्यनेन कृदन्तकारकस्य ण्यन्ततत्प्रकृतिप्रतिपाद्यक्रियाकारकतुल्यत्वातिदेशाद्राजानं गमयति सूर्यमुद्गमयतीत्यादौ ण्यन्तधातुयोगे यथा प्रकृत्यर्थक्रियाकर्त्तुः कर्मत्वं तथा कृदन्तोत्तरणिच्प्रयोगेऽपीत्याख्येयगत्युद्गत्यादिकर्त्तुः कर्मतया तदुत्तरं द्वितीयेति ण्यन्तधातुयोगे यथा प्रकृतेः कर्मणो द्वितीयान्तता तथा णिच्प्रत्ययान्तकृदन्तकर्मणोऽपीति लाभात् कृदन्तकर्मणः कंसादेर्द्वितीयोपपत्तिः। तथा विवक्षायां तण्डुलस्य पाकीयतीति प्रयोग इष्यत एव। कारकविभक्त्यर्थस्य कृत्येकदेशेनाप्यन्वयस्य व्युत्पन्नत्वात्। सम्बन्धविवक्षायां च न तथा प्रयोगः।

---

व्युत्पत्त्यनुपपत्तिरिति—शक्तिग्रहानुपपत्तिरित्यर्थः। कृदन्तकर्मत्वविवक्षायामिति-प्रकृतिवच्च कारकमित्यनेनेति। 'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमि" तिव्याकरणानुशासनेनेत्यभिप्रायः।

वस्तुतः सम्बन्धविवक्षयापि तथा प्रयोग इष्यत एव। न च तत्र वृत्त्येकदेशेन षष्ठ्यर्थान्वये प्रतियोगिपदादन्यद्यदन्यत्कारकादपीतिव्युत्पत्तिविरोध इति वाच्यम्? तादृशव्युत्पत्तेरभेदान्वयस्थल एव स्वीकारात्। वृत्त्येकदेशेन भेदान्वये बाधकाभावात्। अत एव ऋद्धस्य राजमावङ्गा इत्यादिप्रयोगो नेष्यते। इष्यते च पितुः स्वर्गकाम इत्यादिप्रयोगः। न च कारकपदप्रतियोगिपदयोर्भेदनिवेशनमफलमिति वाच्यम्? तन्निवेशस्य दृष्टान्तविधयोक्तत्वात्। यथा प्रतियोगिपदाद्यर्थस्य कुत्रापि अभेदान्वयो न भवति तथा वृत्त्येकदेशेनान्यपदार्थस्येत्यर्थे तात्पर्यादिति ध्येयम्।

अभेदविवक्षायां पण्डितं पुत्रीयति प्रवीरं पुत्रकाम्यतीत्यादिप्रयोगाभाववत् परपुत्रादिगोचरेच्छावति पुंसि पुत्रीयतीत्यादयो न प्रयोगाः। सुप आत्मनः क्यजित्यादिना इच्छाकर्तृसम्बन्धि यदिच्छाकर्म तद्बोधकसुबन्तात् क्यच्काम्यचोर्विधानात्। सम्बन्धित्वं च सम्बन्धित्वेन भातत्वम्। अन्यथा यस्येच्छाकर्तुः पुत्रोऽसिद्धस्तस्यापि स्वीयत्वेन पुत्रेच्छादशायां पुत्रीयतीत्यादिप्रयोगस्य सर्वसिद्धस्यानुपपत्तेः।

उक्तस्थले पुत्रीयतीत्यादिवाक्यस्य प्रामाण्यवारणाय च क्यजाद्यर्थेच्छायां पुत्रादेर्विषयित्वमात्रं न सम्बन्धः, किन्तु स्वांशे भासमानसम्बन्धस्य प्रतियोगितया यो यो विषयस्तादृशपुरुषवृत्तित्वसहितमित्युपेयम्।

स्वसम्बन्धस्य क्यजाद्यवाच्यत्वेऽप्युक्तसम्बन्धेनैवेच्छायां सुबन्तार्थस्यान्वय इति व्युत्पत्तिप्रदर्शनायैव सूत्र आत्मन इत्युपात्तम्। आत्मन इति षष्ठ्यर्थसम्बन्धश्च न धातोः कर्मण इत्यादिसूत्रानुवृत्तायामिच्छायामन्वेति, अव्यावर्त्तकत्वादुक्तार्थलाभाप्रयोजनकत्वात्, अपितु सुप इत्यर्थे सुबन्तादित्यत्र सचेच्छाकर्त्तुः सम्बन्धितयेच्छाविषयार्थकत्वम् एवं च इच्छाकर्मणः सुबन्तादिच्छाकर्त्तुरिच्छायामिति वृत्तावपीच्छा-

---

कर्मतयेति—पूर्वोक्तातिदेशिककर्मतयेत्याशयः। यदन्यत् कारकादपीति-वृत्तिशब्दैकदेशार्थेन तस्यान्वय इष्यते इति पाठपूर्तिः।

पूर्वोक्तव्युत्पत्तिविरोधात् पण्डिताऽभिन्नपुत्रविषयकेच्छावानिति तात्पर्ये पण्डितम्पुत्रीयतीति प्रयोगो न भवतीति आह अभेदविवक्षायामिति।

स्वांश इत्यादीति—चैत्रो मम पुत्रो भवत्वितीच्छया चैत्रः पुत्रीयतीति भवति प्रयोगः।

सहितमिति—अत्र क्लीबत्वन्न युक्तम्। विषयत्वमिति–इच्छाकर्तृसम्बन्धि यत् इच्छायाः कर्म तद्बोधकसुबन्तात् क्यजितिसूत्रार्थः।

कर्त्तुः सुबन्तादित्येव योजना कार्या। यथाश्रुते दर्शितानुपपत्तेरिति ध्येयम्।

भृत्यं पुत्रीयतीत्यादावाचारार्थविहितक्यजन्तस्य सकर्मकत्वं युज्यत एव। तथाहि। तमिवाचरतीत्यर्थे उपमानवाचिनः क्यच् विहितः तमिवाचरतीत्यस्य तत्तुल्यं जानातीत्यर्थः। आचारपदस्य व्यवहारमूलज्ञानपरत्वात्। तुल्यतया ज्ञानं च क्यजर्थः। तच्च सकर्मकमेव। तत्र तुल्यत्वे प्रतियोगितया पुत्रादेरन्वयः पुत्रादिपदमेव वा गौण्या पुत्रादितुल्यपरम्। ज्ञानमात्रं क्यजर्थस्तत्र च स्वाभेदावगाहित्वसम्बन्धेन पुत्रादितुल्यस्यान्वयः।

न चैवं पुत्रादिपदस्योपमेयार्थकमेव नतूपमानार्थकमिति कथमुपमानादाचार इत्यनेन तदुत्तरं क्यचो विधानं सङ्गच्छत इति वाच्यम्? पुत्रादिपदस्य तुल्यार्थकत्वेऽपि तुल्यत्वप्रतियोगितयोपमानपुत्राद्यर्थकत्वात्। अत एव तस्य कर्मवाचकत्वं पुत्रादितुल्यत्वात् सम्यगुपपद्यते। पूर्वमते उपमानपदस्य कर्मवाचकत्वं आचारकर्मविशेषणतुल्यताप्रतियोगिबोधकत्वरूपं बोध्यम्।

वस्तुतः पुत्रमिवाचरतीत्यस्य पुत्रं यथा व्यवहरति तथा व्यवहरतीत्येवार्थः। व्यवहारश्च प्रतिपाल्यत्वादिना ज्ञानं प्रतिपालनादिरूपो व्यापारो वा। एवं च पुत्रीयतीत्यस्य पुत्रकर्मकव्यवहारकर्त्तेत्यर्थः। मुखचन्द्रादेर्यथा स्वजन्याह्लादस्य तुल्यतयोपमानोपमेयभावस्तथा पुत्रभृत्ययोरपि स्वकर्मकव्यवहारतुल्यतया स इति पुत्रपदस्योपमानवाचिता। आचारनिष्ठसादृश्यप्रतियोग्याचारकर्मवाचिता च। आचारसदृशाचार एव क्यचोऽर्थः। प्रथमाचारे कर्मतासम्बन्धेन पुत्रादेरन्वयः। अमाद्यन्तात् क्यच्प्रत्ययविधानेऽपि धात्ववयवतया लुप्तस्यामादेर्नियमेनानुपस्थितेः कर्मत्वस्य सम्बन्धतया भानमुपेयते। यथा राजपुरुष इत्यादिसमासरूपप्रातिपदिकावयवतया लुप्तषष्ठ्यादिप्रतिसन्धानानियमाद्विभक्त्यन्तार्थविशिष्टे पूर्वपदलक्षणोपेयते। द्वितीये आचारे भृत्यस्य कर्मतया क्यजन्तस्य सकर्मकत्वमिति कुट्यां प्रासादीयतीत्यादावाधाररूपोपमानवाचिसप्तम्यन्तोत्तरविहितक्यजन्तस्य न सकर्मकता, तत्र च प्रासादाधिकरणकाचारः क्यजन्तार्थः स चावस्थानरूप एवेत्यकर्मक इति कुट्यास्तत्राधिकरणतया ततः सप्तम्येव। अवस्थानयोः साम्यं चैकजातीयसुखजनकत्वादिनाऽविशेषज्ञानविषयत्वेन

---

ननु पुत्रशब्दस्य पुत्रतुल्यार्थकत्वेनोपमेयत्वमेव उपमेयत्वञ्चात्र तुल्यत्वाश्रयत्वमेवेति क्यच् न स्यादित्याह शङ्काम् नचैवमिति।

वा । हंस इवाचरति हंसायते हंसतीत्यादावुपमानवाचिकर्तृवाचकपदोत्तरविहितक्यङन्तक्विबन्तधातुरप्यकर्मकस्तत्र हंसादिकर्तृकाचारतुल्याचारस्य गमनादिरूपस्य क्यङन्ताद्यर्थत्वेऽपि गम्यादिप्रतिपाद्यतावच्छेदकसंयोगादिरूपफलानवच्छिन्नस्यैव तदर्थत्वोपगमात् । शब्दज्ञानादिरूपसविषयकव्यापारात्मकस्याचारस्य क्वचित्तदर्थत्वेऽपि विषयरूपकर्माविरुद्धस्यैव तस्य तदर्थत्वोपगमात् । कर्माविरुद्धस्य च कर्मान्वयनिराकाङ्क्षत्वादिकं स्वयमूह्यम् । कृत्यर्थकधातुयोग इष्टसाधनत्वादिज्ञानविशेष्यताप्रयोज्यसाध्यताख्यविषयताविशेष एव कर्मत्वं द्वितीयादेरर्थः, न तु विषयतामात्रम् । यत्र घटं करोतीति प्रयुज्यते तत्र कपालं करोति, जलाहरणं करोतीत्याद्यप्रयोगात् । अथ काशान् कटं करोति, काष्ठं भस्म करोतीत्यत्र काशकाष्ठादिपदोत्तरद्वितीयानुपपत्तिः तत्र कृतिनिरूपितोक्तविषयताविरहादिति चेद् ? उपादानोयविलक्षणविषयतापि द्वितीयार्थः । सा च द्वितीयान्तरोपस्थाप्यसाध्यीयविषयताविशिष्टायामेव कृतावन्वेति । अतः कटादिरूपकर्मान्तरासमभिव्याहारेण काशान् करोतीत्यादयो न प्रयोगाः । अथैवमपि काष्ठं भस्म करोति, दुग्धं दधि करोतीत्यादौ काष्ठदुग्धादेः कर्मत्वानुपपत्तिः । तस्य भस्मदध्याद्युपादानताविरहात् । काष्ठदुग्धादिनाशानन्तरमेव तदारम्भादुत्पत्त्याश्रयस्यैवोपादानत्वात् । विभिन्नकालीनयोश्चाधाराधेयभावविरहात् , कारणस्यैवोपादानत्वमिति नियमाच्च । न च परिणामवादविद्वेषिणां नैयायिकानां नकाष्ठादेर्भस्मादिरूपद्रव्यान्तरकारणत्वमपि तु प्रतिबन्धकत्वमेव, द्रव्यवति द्रव्यान्तरानुत्पत्तेरिति चेन्न ? कर्म हि त्रिविधं भवति । प्राप्यं कर्म क्रियाजन्यफलशालि क्रियाविषयश्च गम्यादेर्ग्रामादि, ज्ञानादेर्विषयश्च । क्रियानिष्पाद्यं यत्तद्विकृतिरूपम् । यथा पाकादेरोदनादि यथा वा कृतेर्माल्यादि, कटादि च । प्रथमे तण्डुलादिरूपपूर्वद्रव्यं विनाश्यौदनादेर्निर्वर्तनम् । द्वितीये पुष्पादिरूपपूर्वद्रव्यमविनाश्यैव सन्दर्भादिरूपविशेषणनिष्पादनेन विशिष्टस्य माल्यादेर्निर्वर्तनम् । तृतीये च काशादिरूपपूर्वधर्मिणमविनाश्य तत्रैव कटादिरूपधर्मिनिष्पादनं क्रियया । ईदृशं च प्रकृतेरसमभिव्याहारस्थलेऽपि निर्वर्त्यमुच्यते । तण्डुलानोदनं पचति, कुसुमानि स्रजं करोति, काशान् कटं करोतीत्यादौ प्रकृतिसमभिव्याहारस्थले निर्वर्त्यते निष्पाद्यते यदिति व्युत्पत्त्या यद्यप्योदनादेरपि निर्वर्त्यतास्ति तथापि तद्व्यावृत्तमेव पारिभाषिकं निर्वर्त्यत्वम् ।

तदुक्तमभियुक्तैः "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।

यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षत' इति यस्य विकृतिकर्मणो नाश्रीयते न प्रयुज्यत इत्यर्थः। एवं च तत्र तत्रौदनादेर्विकार्यकर्मण्येवान्तर्भावः। तदुक्तम् "क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥ यदसज्जायते पूर्वं जन्मना यत्प्रकाश्यते। तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम्॥ प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादि भस्मवत्। किंचिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवदिति"॥ अत्र प्रकृतिरपि ग्राह्या। अन्यथा काष्ठसुवर्णादेस्तुरीयतापत्तेः। विकार्यपदेनैकव्युत्पत्त्या प्रकृतिविकृत्युभयाबोधनेऽपि उभयसाधारणरूपावच्छिन्ने पारिभाषिकमेव विकार्यपदम् प्रकृतिरूपं कर्म च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावचशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तत्, यथा पाकादेः तण्डुलादि, कृतेश्च पुष्पकाशादि। तत्र प्रथमस्थले तण्डुलादिरूपधर्मिनाशादेव पूर्वभावविशिष्टं तदसत्त्वमोदनादिरूपकर्मान्तरनिष्पादकम्। इतरत्र धर्मिणः काशकुसुमादेः सत्त्वेऽपि कटसन्दर्भादिविरहरूपपूर्वभावासत्त्वेन तद्विशिष्टस्यासत्त्वं कटसन्दर्भादिनिष्पादकक्रियातो निर्वहति।

एवं च तण्डुलानोदनं पचतीत्यादौ प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थस्तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति। विकृतिकर्मोत्तरद्वितीयायाश्च उत्पादकत्वमर्थः। ओदनाद्यन्वितस्य तस्य नाशकत्वविशिष्टे पाकेऽन्वयः।

---

क्रियाकृतविशेषाणामिति।

नच ग्रामं गच्छतीत्यादौ ग्रामदावपि गमनादिकृतसंयोगविशेषोऽस्त्येवेत्युक्तलक्षणेऽव्याप्तिरिति वाच्यम्। क्रियाकृतविशेषाणामित्यत्र क्रियाकृतविशेषपदेनोत्पत्तिविकारयोरेव ग्रहणात्। एवञ्चोत्पत्तिविकारभिन्नं यत्फलन्तेन संसृष्टं यत्कर्म तत्प्राप्यमिति फलितार्थः।

नाशकत्वमर्थ इति।

केचित्तु पचधातोरुत्पत्तिरूपोऽर्थः विक्लित्तिरूपार्थश्च। तण्डुलपदार्थस्याधेयत्वसम्बन्धेन विक्लित्तावन्वयः। तण्डुलविक्लेदिका ओदनोत्पादिका क्रियेतिबोधः। अत्र "द्व्यर्थः पचि"रिति पातञ्जलभाष्यमनुकूलम्।

अत्र प्रसङ्गात्तण्डुलम्पचतीत्यस्य शाब्दबोधप्रकारः।

अत्र षट् पदानि सन्ति १ देवदत्त २ सु, ३ तण्डुल ४ अम् ५ पच् ६ तिप्, शक्तम्पदमिति व्याप्तेः। पदार्थाश्चेयन्तः देवदत्तत्व १ देवदत्त २ समवाय ३ पुंस्त्वत्व ४ पुँस्त्व ५ समवाय ६ स्वर्थैकत्वत्व ७ एकत्व ८ समवाय ९ तण्डुलत्व १० तण्डुल ११ समवाय १२ पुँस्त्वत्व १३ पुँस्त्व १४ समवाय १५ कर्मत्व१६ कर्म १७ समवाय

पाकत्व १९ पाक २० समवाय २१ कर्तृत्व २२ वर्त्तमानकालाः २३ देवदत्तस्य कर्त्त्र्य्यभेद आकाङ्क्षाभास्यः २४ । यद्यपि द्वितीयाविभक्तेस्तिङ्विभक्तेश्चैकत्वसंख्याविवक्षायामेव विधानात्तयोरपि भानं योग्यन्तथाऽपि द्वौ ब्राह्मणौ व्यतिलुनीत इतिवत् तयोर्विभक्त्योर्द्योतकत्वेन न संख्यारूपार्थ इतिसंख्यार्थविचारावसरे विस्तरेण प्रतिपादितत्वात् । केवलदेवदत्तशब्दोत्तरसोरेवैकत्वमर्थ इति चतुर्विंशतिः पदार्थाः ।

विशेषप्रवन्धात्तु, तण्डुलपदार्थस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन अमर्थाश्रयेऽन्वयः, आश्रयपदार्थस्य च स्वनिष्ठाऽधारतानिरूपिताऽधेयतासम्बन्धेन फलेऽन्वयः, फलस्य च स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन कृतावन्वयः, कृतिपदार्थस्य च स्वनिष्ठाऽधेयतानिरूपिताऽधारतासम्बन्धेन प्रथमान्तदेवदत्तादिपदोपस्थाप्येऽन्वयः, आख्यातार्थसंख्यायाश्चाऽभावात्प्रथमान्तपदोत्तरसोरेकत्वसंख्यायाश्च स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेन समवायसम्बन्धेन वा प्रथमान्तपदोपस्थाप्येऽन्वयः । तण्डुलनिष्ठकर्मतानिरूपकविक्लित्त्यनुकूलव्यापारजनककृत्याश्रयैकत्वविशिष्टो देवदत्त इति सामान्यप्रकारः । निष्ठत्वसम्बन्धावच्छिन्ना या तण्डुलत्वनिष्ठा निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना तण्डुलनिष्ठावच्छेद्यता तादृशावच्छेद्यतावती या प्रकारता तादृशप्रकारतानिरूपिता या कर्मत्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या निरूपकत्वसम्बन्धावच्छिन्ना कर्मत्वावच्छिन्ना कर्मत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या विक्लित्तित्वावच्छिन्ना विक्लित्तिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽनुकूलत्वसम्बन्धावच्छिन्नविक्लित्तित्वावच्छिन्ना विक्लित्तिनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठप्रकारतानिरूपिता या धात्वर्थप्रकारतावच्छिन्ना धात्वर्थव्यापारनिष्ठा विशेष्यता तादृशविशेष्यतासामानाधिकरणा या जनकत्वसम्बन्धावच्छिन्ना व्यापारत्वावच्छिन्ना व्यापारनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या लकारार्थकृतित्वावच्छिन्ना लकारार्थकृतिनिष्ठा विशेष्यता तादृशविशेष्यत्वाऽभिन्ना तादृशविशेष्यतासामानधिकरणा तादृशविशेष्यत्वावच्छिन्ना वा या आश्रयत्वसम्बन्धावच्छिन्ना लकारार्थकृतित्वावच्छिन्ना कृतिनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्ना पुँस्त्वत्वनिष्ठप्रकारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना पुंस्त्वनिष्ठविशेष्यतासामानाधिकरणप्रकारतानिरूपिता तथा समवायसम्बन्धावच्छिन्नस्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतावत्त्वसम्बन्धावच्छिन्ना अथवा परिच्छिन्नत्वसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्ना देवदत्तत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना देवदत्तनिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

चैत्रो ग्रामङ्गच्छतीति—एकत्वावच्छिन्नचैत्राऽभिन्नकर्तृको वर्त्तमानकालिको

ग्रामाऽभिन्नकर्मनिष्ठो यस्संयोगस्तदनुकूलो व्यापार इति शाब्दिकाः । आर्थिकास्तु ग्रामाऽभिन्नकर्मनिष्ठसंयोगानुकूलगमनरूपव्यापाराश्रयश्चैत्रः कृत्याश्रयश्चैत्र इति वा । अत्र लकारार्थप्रसङ्गात्

लः कर्मणि मार्त्तण्डसङ्क्षेपः—

कृतावेव लकाराणां शक्तिर्ज्ञेया मनीषिभिः ।
शाब्दिकानां निकाये तु गौरवन्दृश्यतेऽधिकम् १ ॥

आख्यातस्य कृतौ शक्तिर्नतु कर्त्तरि, कर्त्तृत्वञ्च कृत्याश्रयत्वमेव, तच्च कृतिरूपमित्यनन्तपाकानुकूला कृतिगर्मनानुकूलाकृतिः पाठानुकूला कृतिरित्यादिकृतीनां शक्यतावच्छेदकत्वे गौरवमपरिमितमेव । नच "कर्त्तरि कृदिति" सूत्राच्चकारबलेनानुकृष्टं कर्त्तरीति पदं स्वदेशे कर्त्तृरूपार्थकम् अन्यत्र "लः कर्मणी" तिसूत्रे कृतिरूपार्थबोधकत्ववैषम्ये शब्दार्थमर्य्यादाभङ्ग इति । किञ्च कृधातोः कर्त्तरि तृचि कृते कर्त्तृशब्दो निष्पद्यते तस्य कृतिरूपार्थकत्वे प्रामाणविरहश्चेति वाच्यम्, शब्दमात्रमनुवर्त्यार्थस्त्वेच्छक्रियत इत्यर्थकशब्दाधिकारमाश्रित्य कर्त्तृपदे भावे तृच् "कृत्यल्युटो बहुल" मित्यत्र बहुलग्रहणं कृन्मात्रस्यार्थव्यभिचारार्थमित्युक्तेः । तथा च भावे तृचि करणकृतिकर्त्तृपदानां समानार्थकत्वे कृतौ शक्तिस्वीकारे लाघवाधिक्यात् । कर्त्तृत्वस्य कृतिरूपत्वमभिधीयते कैश्चित्, तत्तुच्छम् ! कर्त्ता व्यापाराश्रयः, त्वप्रत्ययार्थो भावः, करणं कृतिर्यत्नविशेषः, तृजर्थस्त्वप्रत्यये क्वापह्नुतो भवेत् ? तस्माद् भावे तृजिति मदुक्त एव प्रकारो ज्यायान् । किञ्च वैयाकरणमते आश्रयत्वविशिष्टावच्छिन्नवाचकताज्ञानाश्रयत्वत्वावच्छिन्नाश्रयत्वप्रकारकोपस्थित्योः कार्यकारणभावे गौरवम्, शक्यतावच्छेदकतयोस्सखण्डत्वात् । एवं भिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमिति नियमानुरोधेन शाब्दसामग्रीघटकाश्रयत्वप्रकारकोपस्थितेः आश्रयत्वप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाश्रयत्वप्रकारताकोपस्थितित्वेन, एवम्विशेष्यतानिरूपितप्रकारत्वावच्छिन्नाश्रयत्वनिष्ठविशेष्यतानिरूपिताश्रयत्वप्रकारकोपस्थितित्वेन इति विनिगमकाऽभावेन प्रतिबन्धकताधिक्यम् अवच्छेदकगौरवञ्चेति ।

कृतिशक्तिवादिनान्तु तण्डुलम्पचतीति वाक्यजन्यशाब्दबुद्धित्वावच्छिन्नम्प्रति "ति" पदं कृतिविषयकबोधजनकत्वप्रकारकभगवदिच्छीयविषयतावदित्याकारकशक्तिज्ञानजन्यकृतित्वप्रकारकोपस्थितित्वेन कारणता । तत्र कृतिविषयकोपस्थितिशक्तिज्ञानयोः कार्यकारणभावे लाघवम् । कृतित्वजातेश्शक्यतावच्छेदकत्वात् । एवं भिन्नविषयकप्रत्यक्षत्वावच्छिन्नम्प्रत्यपि शाब्दसामग्र्याः प्रतिबन्धकतया ( कृतित्वप्रकारकोपस्थितित्वेन ) लघुधर्मेण च प्रतिबन्धकत्वाच्च लाघवमिति । नच वैयाकरणानाम्मते आश्रयत्वस्याखण्डोपाधिरूपतयाऽनिर्वचनीयत्वेन स्वरूपतो भानस्वीकारान्न शक्यतावच्छेदकता गरीयसी नापि विनिगमनाऽभावेन प्रतिबन्धकताधिक्यम् अवच्छेदकगौरवञ्चेति वाच्यम् ? तत्तदाश्रयभेदेनाश्रयत्वस्य भिन्नत्वादन्यथा चैत्रनिष्ठाश्रयत्व-

व्यक्तेशक्यतावच्छेदकत्वे मैत्रः पचतीति वाक्यस्याऽप्रामाण्यप्रसंगात् । नच सकलाश्रयनिष्ठाश्रयत्वं लाघवादेकमेवेति वाच्यम्? अधिकरणपदार्थस्य सखण्डत्वेन समवायसम्बन्धावच्छिन्नत्वनिवेशाऽसम्भवेन कालिकसम्बन्धेन पाकस्य काले सत्त्वेन कालः पचतीति वाक्यप्रामाण्यापत्तेः । किञ्च समवायसम्बन्धावच्छिन्नत्वनिवेशेऽपि शाब्दिकमते आश्रयत्वस्यैक्येन समवायसम्बन्धावच्छिन्नाश्रयतायाः कालिकसम्बन्धावच्छिन्नाश्रयतायाश्च अभेदात्पाकनिरूपिताश्रयत्वस्य काले सत्त्वेन तादृशप्रयोगापत्तेस्सौष्ठवाच । किञ्च सकलाश्रयनिष्ठाश्रयत्वस्यैकत्वे समवायेन वह्न्याश्रयत्ववान् वह्न्यवयव इतिवत् संयोगेन वह्न्याश्रयत्ववान् वह्न्यवयव इति प्रयोगापत्तेः । किञ्च संयोगेन वह्न्यधिकरणतावान्पर्वत इत्यत्र तृतीयान्तार्थसंयोगावच्छिन्नत्वस्यान्वयभङ्गप्रसङ्गः अधिकरणत्वस्याखण्डत्वेन शाब्दिकनये सम्बन्धावच्छिन्नत्वात् । नच संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाधेयतानिरूपकत्वविशिष्टाधिकरणतात्वावच्छिन्नाधिकरणत्वस्य वह्न्यवयवे विरहान्न पूर्वदोष इति वाच्यम्? तादृशाधिकरणतात्वावच्छिन्नाधिकरणत्वस्य पुनरप्यधिकरणत्वाऽभिन्नतया तत्र नास्तीति कथनस्य सर्वथैवाशक्यत्वात् । किञ्च विशिष्टसत्तानिष्ठाऽधेयत्वस्य शुद्धसत्तानिष्ठाऽधेयत्वस्य चानतिरिक्तत्वपक्षे समवायसम्बन्धावच्छिन्नविशिष्टसत्तानिष्ठाधयतानिरूपकाधिकरणत्वस्य गुणादौ सत्त्वेन समवायेन विशिष्टसत्ताधिकरणत्ववान् गुण इति प्रतीतेर्दुर्वारत्वात् । नैयायिकमते तु अधिरणतया नानात्वात्समवायसम्बन्धावच्छिन्नगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य तत्राऽभावात्पूर्वोक्तप्रतीतेरसम्भवात् । नचाश्रयत्वस्य नानात्वेऽपि समवायस्यैक्येन समवायसम्बन्धावच्छिन्नाधिकरणताया ऐक्यात्तादृशाधिकरणत्वमेव शक्यतावच्छेदकमस्तु काले समवायेन व्यापारत्यासत्वेन कालः पचतीति पूर्वदोषो नास्तीति वाच्यम्? सम्बन्धैक्येनाधिकरणत्वस्यैकत्वस्वीकारे जलनिष्ठसमवायसम्बन्धावच्छिन्ननिरूपकताधिकरणतातो वह्नित्वावावच्छिन्नसमवायसम्बन्धावच्छिन्ननिरूपकताधिकरणत्वस्याभिन्नतया समवायेन वह्न्यधिकरणतावज्जलं समवायेन जलत्वाधिकरणतावाँश्च पर्वत इत्यादिप्रतीतेरनिवार्यत्वात् । नच समवायसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाधिकरणतात्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाधिकरणत्वस्य जले बाधान्नापत्तिरिति वाच्यम्? स्वरूपसम्बन्धावच्छिन्नाधिकरणत्वस्यानेकत्वाभावेन जले सत्त्वात् । किञ्च पर्वतीयरूपस्य समवायेन पर्वते सत्त्वेन समवायेन पर्वतीयरूपाधिकरणत्ववान्पर्वत इति प्रतीतिसत्त्वात् समवायेन वह्न्यधिकरणत्ववान् पर्वत इति प्रतीतेश्च निराकर्त्तुमशक्यत्वात् । तथा च आश्रयत्वम्भिन्नम्भिन्नमिति कालः पचतीत्यापत्तेस्तादवस्थ्यात् कृतावेव शक्तिर्नतु कर्त्तरीति ।

किञ्च"लः कर्मणी" तिसूत्रे "कर्त्तरि कृदि" तिसूत्रादाकृष्टं कर्त्तरीति कृतिविशिष्टसामान्यं लकाराणामर्थम्बोधयति । कृत्याश्रये शक्तिर्नतु आश्रये, कृतित्वजातेरेव शक्यतावच्छेदकतावच्छेदकत्वेन लाघवात् ।

नच कर्तृत्वन्नहि कृतिविशिष्टत्वमपि तु व्यापाराश्रयत्वम् "अनन्यलभ्यो हि शब्दार्थ" इतिन्यायेन व्यापारस्य धातुलभ्यत्वेन आश्रयमात्रं लकारार्थः,आश्रये शक्तिः, आश्रयस्य चैत्रादिपदाल्लाभेऽपि आश्रयत्वेन सामान्येन लाभाऽभाव इति वाच्यम् ? अचेतनस्याऽपि काष्ठादेः कर्तृत्वप्रसङ्गात् । नच रथो गच्छतीत्यादावचेतनस्य रथादेः कर्तृत्वाऽसम्भवेनाश्रये लक्षणया बोधेनेष्टापत्तिरिति वाच्यम् ? पाककर्तृत्वावच्छिन्नाधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तुर्जिज्ञासितो यो धर्मस्तद्वान्पचतीत्याकारकान्वयबोधजनकं यत्किञ्चिद्धर्मावच्छिन्नोद्देश्यताकपाककर्तृत्वविधेयकज्ञानम्भवत्वित्याकारकजिज्ञासायां प्रयुक्तं कः पचतीतिवाक्यम् । तस्य श्रवणानन्तरं चैत्रः पचति ब्राह्मणः पचतीत्यादिकमेव लोक उत्तरवाक्यम्प्रयुङ्क्ते नतु काष्ठम्पचतीति । इदानीं वैयाकरणनये तादृशवाक्यस्याऽपि उक्तेच्छानिवर्त्तकत्वेन प्रयोगापत्तेर्लोके तु कृतिर्यत्नविशेषस्तद्विशिष्ट एव कर्त्ता न तु व्यापारविशिष्टोऽपि । किञ्च पचतीत्यस्य पाकं करोतीत्येव विवरणं श्रूयते न तु पाकाश्रयव्यापाराश्रय इति । तदेव किं करोति ? पचति-इतिप्रश्नोत्तरयोस्समानार्थकबोधजनकत्वानुरोधेन कृधातोरिव लकाराणां कृतिवाचकत्वं सुलभमेव । नच कृधातोर्यत्नार्थकत्वे बीजादिनाऽङ्कुरः कृत इत्यादौ अङ्कुरे यत्नाऽभावात्कथं शाब्दबोध इति वाच्यम् ? तत्र कृधातोरुत्पत्त्याश्रये लक्षणास्वीकारेणापत्तिविरहात् ।

पश्य मृगो धावतीत्यत्रैकवाक्यता भाष्यसम्मतेति—

निरुक्तअध्याय २।२।१।१० तद्यत्रोभे भावप्रधाने इतिसूत्रम् तदर्थश्च यत्र वाक्ये उभे नामाख्याते स्तस्तत्र भावप्रधाने भवत इति ।

पचति भवतीति भाष्यस्य पाको भवतीति ।

प्रथमान्तकर्तृवाचकपदसत्त्वे प्रायः प्रथमान्तार्थमुख्यविशेष्यक एव बोधो नैयायिकानामपि, प्रायःः पदोपादानेन पश्य मृगो धावतीतिभाष्यसिद्धैकवाक्यतानुरोधेन च क्वचित् क्रियाविशेष्यकोऽपि शाब्दबोधः । कर्मतासम्बन्धेन तिङर्थभावनाप्रकारकबोधे धातुजन्यभावनोपस्थितिः कारणम् इति कार्यकारणभावात् ।

नच गौरवानुसन्धानम् ? भाष्यसिद्धैकवाक्यताऽनुरोधेन धात्वर्थभावनाप्रकारकबोधे धातुजन्यभावनोपस्थितिः कारणमिति साम्यमेवेति व्याख्यानात् । परन्तु वैयाकरणमते देवदत्तः पचति भवतीत्येकवाक्यतानुरोधेन प्रथमान्तार्थकर्तृकारकबोधे तिङर्थभावनोपस्थितिः कारणम् । प्रथमान्तार्थकर्तृविशिष्टा पाककृतिवर्त्तमानभावनाऽऽश्रयिकेति शाब्द इति नैकवाक्यत्वहानिः ।

एवञ्चैकवाक्यता या पदैकवाक्यता सा शाब्दिकतार्किकमतद्वयेऽपि सिद्ध्यतीति ।

भावार्थकाख्यातस्थले तु भावनाया एव विशेष्यत्वम्, तथैव प्रतीतेः । लट्त्वेन कालार्थकलिङ्गनुवादक एव संख्या नाख्यातार्थोऽन्वयाऽप्रतीतेः । साधुत्वार्थमेकवचनमेवैकवचनमुत्सर्गतः करिष्यत इति "द्व्येकयो"रितिभाष्यात् ।

काले युक्ताऽभिसरणे मुह्यन्ते मृगमोहिकाः ।
उष्ट्रासिकास्समास्यन्ते शय्यन्ते हतशायिकाः ॥

इत्यत्र बहुवचनन्तु भाष्यप्रयोगादेव नोपायान्तरम् ।

अव्यये "ऽव्ययादाप्सुपः" इतिगमकवत्सत्येव गमके ह्यौत्सर्गिकमेकवचनमिति प्रवर्त्तत इति । अत एव ङ्याप्सूत्रखण्डने तिङन्तेभ्यस्तदुत्पत्तिवारणाय तिङा संख्याया उक्तत्वान्न तिबुत्पत्तिरिति भाष्यं तदपि न युक्ततरम् । "अपदन्न प्रयुञ्जीते" तिनियमपालनार्यैवौत्सर्गिकवचनन्न तत्र गमकापेक्षा गरीयसी । ङ्याप्सूत्रभाष्यन्तु संख्यासामान्याऽभावबोधकम् । एका च क्रियेति भाष्यमप्येतदर्थकमेव भाष्यप्रयोगातिरिक्तस्थले द्विवचनादिकमसाध्वेवेति ।

पच्यते तण्डुल इत्यत्र प्रथमान्तार्थविशेष्यकबोधः, तण्डुलम्पचतीत्यत्र तु क्रियामुख्यविशेष्यकबोधः । पक्ता यष्टेत्यादौ कृत्प्रत्ययस्थले प्रथमान्तार्थविशेष्यकबोधः । देवदत्तेन भूयत इत्यत्र प्रथमान्तपदाऽभावात् क्रियामुख्यविशेष्यकबोध इति बहुत्र बहुरीतिदर्शनेन "भावप्रधानमाख्यात" मितिशाब्दिकाभिमतस्य प्रायिकत्वमेवेति शुक्लाः ।
अत्र तार्किकाः

व्याकरणमहाभाष्योक्तपदैकवाक्यताम्पश्य मृगो धावतीत्यत्रत्यान्तार्किका अपि समादधते । धावनक्रियाकर्तृत्वेनाऽभिमतस्य मृगस्य कर्मतासम्बन्धेन पश्यत्यर्थेऽन्वयात्पदैकवाक्यता भाष्याभिमता साध्व्येव । भाष्यकृतो हि मृगपदार्थान्वय एव तात्पर्य्यम् ।

नचैवमन्वये तण्डुलः पचतीत्यादावपि कर्मतासम्बन्धेन तण्डुलपदार्थस्य पाकेऽन्वयसम्भवात्तादृशप्रयोगापत्तिरिति वाच्यम् ? भाष्यप्रामाण्यात्तत्र कर्मतासम्बन्धेनान्वयेऽपि प्रमाणविशिष्टाऽभावेन सर्वत्र तथान्वयस्यानौचित्यात् । अव एव काष्ठम्भस्मराशिः करोतीति प्रयोगाऽभावः ।

न च काष्ठं भस्मराशिः क्रियत इत्यत्र कर्मणि प्रत्यय इति वाच्यम् ? तत्संसर्गत्वस्य तत्राऽस्वीकारे वाक्याऽभेदाऽपत्त्या काष्ठं नाश्यते भस्म क्रियते इत्यर्थनिर्णयो न स्यात् । इदम्भस्म काष्ठविकृतिरन्यविकृतिर्वेति संशायकवाक्ये संशयनिवर्त्तकत्वाऽसिद्धेस्तथाचोक्तप्रयोगसिद्धिसौष्ठवात् । एवञ्च भावनाप्रकारकबोधे धातुजन्योपस्थितिरित्ति वदतां युक्तिशून्यत्वमेव ।

किञ्च पश्य मृगो धावतीतिवत् तण्डुलः पचतीत्यत्र नाऽपत्तिः कर्मतान्वयसंसर्गकपच्यर्थविशेष्यकबोधस्य सर्वथाऽप्रसिद्धत्वात्, यादृशम्फलं क्वचित्प्रसिद्धन्तादृशस्यैवाऽपत्तिस्सम्भवति, तण्डुलम्पचतीत्यादौ यद्यपि प्रसिद्धम् तथाऽपि तत्र द्वितीयान्तसमभिव्याहारः कारणमिति व्याप्तेः ।

ननु प्रथमान्तार्थविशेष्यकबोधस्वीकारे पचतिकल्पश्चैत्रःपचतः कल्पं चैत्रावित्यादौ समानलिङ्गवचनकत्वाऽपत्तिराख्यातार्थकृतेश्चैत्रेऽभेदान्वयस्येष्टत्वात् शक्यार्थस्याऽयोग्यत्वादन्वयाऽभावात् इत्याहुः ।

वस्तुतस्तु मृगकर्तृकोत्कटधावनदर्शन एव तात्पर्यम् । धावनस्यैव कर्मत्वेनाऽन्वये प्रवृत्तिःकीदृशन्धावनमिति प्रतीतेः । तथाच क्वचित्प्रथमार्थविशेष्यकबोधः क्वचित्क्रियाविशेष्यकबोध इतिनिश्चयेन प्रकरणतात्पर्य्यानुसारेण यथाप्रयोगम्व्यवस्थेत्यलम् ।

नच "लः कर्मणी" तिसूत्रे कृतिपदार्थश्रवणं कथमिति वाच्यम् ? पचतीत्यादौ पाकानुकूलकृत्याश्रयो देवदत्त इति बोधात्कृतिविशिष्टविषयकबोधजनकत्वविशिष्टबोधजनका लकारा भवन्तीति । नच "तिङ्समानाधिकरणे प्रथमेति" वार्त्तिकात्तिङर्थाऽभिन्नार्थबोधकपदात्प्रथमेति श्रुतिस्तथा च तिङर्थकृत्यभेदस्य चैत्रे वाधात्पचति चैत्र इत्यादीनामसिद्धिरिति वाच्यम् ? समवायस्वरूपान्यतरसम्बन्धेन तिङर्थान्वितार्थबोधकपदात्प्रथमेत्येव व्याख्यानात् तिङर्थकृतेस्समवायेन चैत्रे सत्वात् । नच प्रसिद्धार्थेन "लः कर्मणी" तिस्मृतिविरोध इति कथं कृतौ शक्तिरिति वाच्यम् ? नहि वाच्यवाचकभावो व्याकरणस्मृत्यधीनस्तस्यान्वयव्यतिरेकगम्यत्वात् । नच शब्दाधिकाराश्रयेण कृतिपरत्वस्वीकारे प्रमाणाऽभाव इति वाच्यम् ? शानजादौ पचमान इत्यादौ सत्त्वभूतो भावोऽर्थः । भूयते इत्यादावसत्त्वभूतो भावोऽर्थ इति वैधर्म्यस्य सर्वसिद्धत्वात् । नचाचेतने रथो गच्छतीत्यादौ लक्षणया लक्ष्यतावच्छेदकगौरवं नैयायिकमते, वैयाकरणमते तथा शक्यतावच्छेदकमितिसाम्यमेव न गौरवमिति वाच्यम् ? अतिरिक्तशक्तिकल्पनापेक्षया क्लृप्तायां शक्तिसम्बन्धरूपलक्षणायां गौरवाऽभावात् । नच लक्षणाऽश्रयणे सकृदुच्चारितश्शब्दस्सकृदर्थं गमयतीति न्यायेन वृत्तिद्वयाऽनभ्युपगमात्कथम्वर्त्तमानत्वादीनामन्वय इति वाच्यम् ? शक्तावच्छेदकलक्ष्यतावच्छेदकभेदात् लट्त्वेन वर्तमानत्वे शक्तिर्लकारत्वेन लक्षणा, लकारत्वलट्स्वरूपशक्ततावच्छेदकभेदात् । नच लक्षणाज्ञानजन्याऽश्रयत्वाद्युपस्थितेरेककालावच्छेदेन हेतुत्वकल्पने गौरवमिति वाच्यम् ? तद्विषयकशाब्दबोधम्प्रति तद्विषयकवृत्तिज्ञानजन्योपस्थितित्वेनैव हेतुतया लक्षणाज्ञानस्य पृथक् हेतुत्वाऽभावात् । नचानुकूलाभेदादिसंसर्गाणां कथं शाब्दबोधविषयत्वं वृत्त्याऽनुपस्थितत्वात्, किञ्च संसर्गविषयकशाब्दबोधोऽस्ति वृत्त्योपस्थितिर्नास्तीतिकार्यदलं गच्छति अर्थात्कार्य्यमस्ति हेतुदलागमनेन हेतुर्नास्ति हेतोः कार्यतावच्छेदकानाक्रान्तत्वन्दोष इति वाच्यम् ? संसर्गभिन्नतद्विषयकशाब्दबोधम्प्रति तद्विषयकवृत्तिज्ञानजन्योपस्थितेः कारणत्वात् । तद्धर्मप्रकारकतद्धर्मावच्छिन्नविशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मप्रकारकतद्धर्मविशेष्यकवृत्तिज्ञानाधीनोपस्थिते कारणत्वात् । संसर्गाणां तद्धर्मप्रकारकत्वाऽभावेन दोषाऽभावात् । नच वृत्त्यनुपस्थितानुकूलाभेदादिसंसर्गाणां शाब्दबोधविषयत्वे राजपुरुष इत्यादौ जन्यजनकादियावत्संसर्गभानापत्तिरिति वाच्यम् ? तात्पर्यस्य नियामकत्वात् । शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गस्संसर्गमर्यादया भासते । नच किं करोति किन्विषयको यत्न इत्येवं यत्नार्थककरोतिना प्रश्ने पचतीत्युत्तरदर्शनादाख्यातस्य यत्नार्थत्वे कृञो यत्नार्थत्वे यतिवत्

कृञोऽकर्मकत्वापत्तौ घटं करोतीतिवत् घटं यतते इतिप्रयोगापत्तिरिति वाच्यम्? सकर्मकोऽपि धातुविवक्षयाऽकर्मको भवति "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्" इत्युक्त्या विवक्षाधीनत्वेन तत्र नैयायिकमते दोषाऽभावात्।

न च क्रियते घटस्स्वयमेवेत्यादौ कर्मवद्भावानापत्तौ यगाद्यनापत्तिः कर्मावस्थायां या क्रिया सा कर्त्रवस्थायाञ्चेत्तदैव "कर्मवत्कर्मणे" त्यस्य प्रवृत्तिः, कृतिश्च न घटादिं-निष्ठा—प्रश्नवाक्ये यत्नविशिष्टे जिज्ञासितसम्बन्धः, उत्तरवाक्येतु आश्रयत्वादिसम्बन्ध इति वैषम्यात्। तथा च कृञो यत्नार्थत्वन्न योग्यमिति वाच्यम्? अनेकार्था-अपि धातवो भवन्ति धातूनामनेकार्थत्वात्तत्तदिष्टप्रयोगानुरोधेन धातूनान्तत्तदर्थपरिकल्पनात्।

नच पच्यते तंडुलेनेत्यादौ नैयायिकमते "कर्मवत्कर्मणे" त्यतिदेशात्कर्मणि द्वितीयापत्तिः, वैयाकरणमते तु "लिङ्याशिष्यङिति" द्विलकारकाल्ल इत्यनुवृत्तेर्ल्लकारवाच्यस्यैव कर्तुः कर्मवत्त्वेन भावे लकारे तेन कर्तुरनुपस्थितेरदोष इति वाच्यम्? लकारवाच्यकृत्याश्रयः कर्त्ता कर्मवदिति सूत्रार्थेन लकारवाच्यकर्तृत्वाश्रयः कर्त्ता कर्मवदिति लक्षणया परिकल्पितेनार्थेन च दोषाऽभावात्कृतावेव शक्तिरिति पक्षस्य निर्विवादत्वात्।

नच वैयाकरणमते आख्यातार्थाश्रयप्रकारकबोधम्प्रति प्रथमान्तपदजन्यबोधो हेतुः तदर्थसंख्याप्रकारकबोधे तदर्थाश्रयज्ञानं हेतुः, तदर्थकालप्रकारकबोधे धातुजज्ञानं हेतुरिति कार्यकारणभावत्रयज्ञानं नैयायिकमते तु काल इष्टसाधनत्वाद्यतिरिक्ताख्यातार्थबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति संख्याभावनयोरेक इति वाच्यम्! आख्यातत्वाद्यजानत ईदृशकार्य्यकारणभावग्रहाऽसम्भवात्। किञ्च आख्यातेन क्वचित्कृतेः क्वचिदाश्रयत्वस्य बोधः कृतेः क्वचिद्धातुना क्वचित्प्रत्ययेन बोध इत्यर्थस्य पर्यवसितत्वेनानेककार्यकारणभावापत्तेः। नच लकाराणां कृतौ शक्तिस्वीकारे पच—अजर्घा अचकात् इत्यादौ प्रत्ययानां लोपेन अस्यापत्यमिरियानितिवच्छिष्यमाणो लुप्यमानार्थाऽभिधायीति न्यायेन यत्नकालसंख्यानां धातुवाच्यत्वावश्यकत्वेन सामान्यरूपेण प्रत्ययशक्तिकल्पने गौरवमिति वाच्यम्? शास्त्रमात्रेऽवशिष्टानां सर्वाधिकारवत्त्वस्याऽगत्या स्वीकारात्। नच पचन्तं चैत्रम्पश्येत्यादौ सामानाधिकरणयानुपपत्तौ शतृपत्ययो न स्यादिति वाच्यम्? "लः कर्मणि चे" तिसूत्रस्य "लटश्शतृशानचा" वित्यनेनैकवाक्यतयाऽभीष्टसिद्धेः। नच तिङर्थाऽभिन्नत्वं हि तिङ्सामानाधिकरण्यमिति कृतौ शक्तिस्वीकारे पुरुषव्यवस्था न सिद्ध्येदिति वाच्यम्? तत्र समानाधिकरणपदबलात्तिङ्वाच्यकारकवाचिनी इत्यर्थवत्समवायस्वरूपान्यतरसम्बन्धेन तिङर्थान्वितार्थबोधके युष्मद्युपपदे इत्यर्थेन दोषाऽभावात्। अत एव अतित्वम्भवतीत्यत्र न मध्यमपुरुषव्यवस्था।

नच पच्यते तण्डुलेनेत्यत्र कथन्निर्वाह इति वाच्यम्? समवायसम्बन्धेन लका-

रार्थान्वितार्थः कर्ता कर्मवदिति कर्मवत्कर्मणेत्यस्यार्थेन दोषाऽभावात्। किञ्च "लः-कर्मणि च "द्व्येकयोर्द्विवचनैकवचने" "बहुषु बहुवचनम्" इत्त्यादिसूत्राणां "तिप्तस्झीति" विधिशास्त्रेण महैकवाक्यतया कर्त्तुरेकत्वे विवक्षिते एकवचनात्मको लकारः द्वित्वे विवक्षिते द्विवचनात्मको लकार एवमेव तिबादीनां विधानमिति। अत एव महाभाष्ये यदैकत्वादयो विभक्त्यर्थास्तदा इति। अत एव

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैस्सह।
एकवाक्यतया युक्तमुपदेशम्प्रतन्वते ॥

इत्यभियुक्तोक्तिस्सङ्गच्छते। नच कृतिशक्तिवादे चैत्रः पचतीत्यादावभिहितानभिहितव्यवस्थानुपपत्त्या तृतीयापत्तिरिति वाच्यम्? कर्त्तृगतसंख्याऽनभिधाने तृतीयेत्यर्थस्य जल्पनीयत्वात्, कर्मत्वादिरहितप्रथमान्तपदोपस्थाप्यस्य चैत्रादेस्संख्याभिधानयोग्यत्वात्। इतरविशेषणत्त्वेन तात्पर्याविषयत्वमित्यर्थः। अत एव चैत्र इव मैत्रो गच्छतीत्यत्रापि न तृतीयापत्तिरिति। संख्याकत्रोरन्यतराभिधाने तृतीयेत्यर्थेन कल्पितेनादोषाच्च। नच कर्त्तरि शक्तौ अनन्तकृतीनां शक्यतावच्छेदकत्त्वे गौरवमन्ववादि तत्कथम्? लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकस्य गुरुणि स्वीकारे बाधकाऽभावः. अन्यूनानतिरिक्तवृत्तित्वरूपस्यावच्छेदकत्त्वस्य गुरुधर्मेऽपि सत्त्वम्, अवच्छेदकत्वन्नातिरिक्तपदार्थः किन्तु स्वरूपसम्बन्धस्तत्तत्स्वरूपमेवेति तस्यावच्छेदकत्वे न हानिः। नच सम्भवति लघौ गुरौ नावच्छेदकत्वम् कम्बुग्रीवादिमान्नास्तीतिवत् इति वाच्यम्? यत्र लघुगुरुरूपाभ्याम्बोधो निर्विवादस्तत्रैव लघुधर्मावच्छिन्ने शक्तिश्शक्यतावच्छेदकञ्च! प्रकृते तु प्रत्ययात्कृतित्वेन बोधस्सविवाद इति कथनात्। पूर्वोक्तं गौरवं गुरुतरभारोद्वहनमिव शरीरस्य चित्तस्य वा न खेदजनकम्? एतल्लेखप्रारम्भिककार्यकारणभावगौरवाणाञ्जागरूकत्वात्। न च रथो गच्छतीत्यादौ कृतिशक्तिवादे कथमाश्रये लक्षणा, विभक्तौ न लक्षणा—अत्र "कर्त्तृकर्मणोः कृती"ति सूत्रं ज्ञापकमन्यथा शेषषष्ठ्यैव कर्तृत्वकर्मत्त्वयोर्लक्षणया लाभे सिद्धे तत्किमर्थम्। किञ्च ऋजवस्सन्तु पन्था इति वैदिकवाक्ये सुप्रत्ययस्यैकवचनस्य बहुत्वे लक्षणयैव सिद्धौ "सुपां सुलुक्पूर्वसवर्णाच्छेये"तिसूत्रङ्किमर्थन्तथा च कथं रथाश्रये लक्षणा। नच "द्वन्द्वे च "न बहुव्रीहा" वित्यादौ प्रथमार्थकसप्तमी लक्षणाम्विना कथं सिद्ध्येदिति वाच्यम्? सूत्राणां छन्दोवत्त्वेन निर्वाहादिति वाच्यम्? सुब्विभक्तौ न लक्षणेति सिद्धान्तस्यैवाऽभिमतत्वात्। ननु ज्ञापकमसति बाधके प्रमाणानां सामान्ये पक्षपात इतिन्यायेन विभक्तौ न लक्षणा तिङोऽपि "सुप्तिङन्तमि"ति सूत्रेण विभक्तित्वमिति सामान्यकल्पनेति चेत्तर्हि विवादग्रस्तोऽयम्विषयः। नच कृतौ शक्तिस्वीकारे करोति करणं कृतिरित्यादौ कृधातोरपि स एवार्थः प्रत्ययार्थोऽपि कृतिरेव कथन्तयोः कृत्योरन्वय इति वाच्यम्? द्वौ ब्राह्मणौ व्यतिलुनीत इतिवदर्थबोधकप्रद्वयसमभिव्याहारे एकस्मिन्सङ्कोच्यसङ्कोचकभावाश्रयणेन अगत्या युक्त्यन्तराऽभावेनचाक्षतेः। नच कृतिशक्तिवादे रथो गच्छतीत्यादौ लक्षणा, कृतिर्यत्नविशेषस्तस्य रथे-

१७ व्यु०

ऽसम्भव इति कथन्नैतत् गौरवन्दोषावहम्, अत एव निषादस्थपतिं याजयेदिति मीमांसावाक्ये निषादश्चासौ स्थपतिश्चेति कर्मधारयो न तु निषादानां स्थपतिरिति तत्पुरुषः पूर्वपदे लक्षणाप्रसङ्गात्। अत एव च राजपुरोहितौ स्वाराज्यकामौ यजेयातामित्यत्रोभयपदार्थप्रधानो राजा च पुरोहितश्चेति द्वन्द्व एव न तु राज्ञः पुरोहिताविति तत्पुरुषो लक्षणाप्रसङ्गात्। अत एव च उद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दः कर्मनामधेयम् नान्यत् उद्भिनत्तीति उद्भित् खनित्रादिकन्तद् गृहीत्वा उद्भिद्वता यागेनेत्यर्थाश्रयणे तु मत्वर्थलक्षणापत्तिरित्युद्भिदधिकरणं सङ्गच्छते। तथा च कर्त्तर्येव शक्तिरिति वाच्यम्? यत्र गौरवलाघवचर्चा नास्ति तत्र तत्र वाक्यार्थबोधोपपत्तये लक्षणा सफलैव, तद्वदिहापि स्वीकारे न क्षतिः। किञ्च प्रसिद्धाऽप्रसिद्धशक्तिभ्यामेव लक्ष्यशक्यस्थले निर्वाहे वैयाकरणमते लक्षणावृत्तेरनङ्गीकारात्। गङ्गायां घोष इतिवद्रथो गच्छतीत्यादौ अप्रसिद्धाया एव शक्तेस्स्वीकारेण लक्षणया गौरवानुसन्धानं वैयाकरणमतेऽपि नास्तीति प्रतिद्वन्द्येवोत्तरमिति गौरवाऽभावात्कृतावेव शक्तिरिति विचित्रतरङ्ग इति शुक्लाः। नच कर्त्तरि शक्तिः व्यापाराश्रयत्वं कर्तृत्वम् तत्र व्यापारस्य धातुलभ्यत्वेनाश्रयमात्र लकारार्थ इति वैयाकरणमतेऽखण्डमाश्रयत्वं शक्यतावच्छेदकन्नैयायिकमते यत्नत्वमिव साम्यं यथा आश्रययत्वन्तथा यत्नत्वम् यत्नत्वाश्रयत्वयोस्समानरूपत्वेन कथम्वैयाकरणमते गौरवं यत्नत्वशक्यतावच्छेदकत्वस्येवाश्रयत्वशक्यतावच्छेदके वैषम्याऽभावात्। कुमारीभार्य्य इत्यादौ "जातेश्चे"तिपुम्वद्भावनिषेधोपपत्तये कौमारादीनां क्षणिकपदार्थानामपि जातित्वम्। जातिलक्षणे नित्यत्वप्रवेशो नास्तीति तत्त्वम्। एवञ्च क्वाऽपि शाब्दबोधविरोधो न। किञ्च दीधितिकृता सिद्धान्तलक्षणे आश्रयत्वाधिकरणत्वाद्ययोऽतिरिक्ता एव पदार्था अन्यथा आश्रयत्वस्य अधिकरणस्वरूपत्वे आधेयस्वरूपत्वे वा परस्पराऽसंयुक्तघटभूतलसत्त्वेऽपि इदानीम्भूतलं घटवदिति प्रतीतेर्दुर्वारत्वात्। तथा च कथङ्कृतिवाद इति वाच्यम्? तत्तत्कालपुरुषाद्युपाधिभेदेन तत्कालीनतत्पुरुषीयज्ञानाधिकरणसाक्षात्संयोगसम्बन्धावच्छिन्नविषयताया आश्रयणेऽसंयुक्ते भूतलं घटवदिति प्रयोगानापत्तेः। अन्यथा कालान्तरे पुरुषान्तरे च संयोगादिसत्त्वेऽनिष्टरूपापत्तेर्दुर्वारत्वात्। जातिलक्षणे नित्यत्वखण्डनप्रकारश्च विकल्पग्रस्तः कुमारीभार्य्यः कुमारभार्य्य इत्युदाहरणद्वयदानात् इतिपक्षद्वयं समर्थितन्तत एव द्रष्टव्यम्। तथा च तत्तदाश्रयभेदाश्रयत्वम्भिन्नम्भिन्नमितिवैयाकरणमते शक्यतावच्छेदकभिया कृतावेव शक्तिरिति। किञ्च पूर्वोक्तसंयोगेनाधिकरणतावान्पवतस्समवायेनेत्यापत्तेरपरिहार्य्यत्वाच्चेति शुक्लाः।

केचित्तु

"ल कर्मणो"तिसूत्रे ल इतिपदं षष्ठ्यन्तं "लः परस्मैपदमि"तिवत् लस्य य आदेशस्स कर्मणीति सूत्रार्थं इति तन्न? जसन्तत्वे श्रुतपदार्थेन सम्बन्धः षष्ठ्यन्तत्वे आदेशपदाध्याहार इति गौरवात् प्रथमान्तत्वमेवेति।

यद्यपि आश्रयत्त्वस्य नित्यत्वे जलवान् घट इत्यादौ घटादेरुत्पत्तिविनाशव्यवहारो न भवेदयम्बजूदोषस्तथापि वायुत्वरूपयोस्समवायस्यैकत्वेऽपि रूपनिरूपितत्वाऽभावेन वायौ रूपवत्ताप्रतीत्यभाववन्न प्रतिभाति हानिस्तथापि पूर्वोक्तापत्तेरनिर्वार्यत्वात्।

वस्तुतस्तु

लकारस्य कर्त्तरि शक्तौ वैयाकरणमते राजसम्बन्धिपुरुषाऽभिन्नकर्तृकं गमनमिति तात्पर्येण राज्ञः पुरुषो गच्छतीति प्रयोगवत् स्वस्वामिभावादिसम्बन्धेन राज्ञः कर्त्रन्वयविवक्षया राजा पुरुषो गच्छतीति प्रयोगापत्तिः। नच तत्र षष्ठी भवति ? तदर्थस्य प्रातिपदिकार्थविशेष्यत्वे सत्येव विवक्षिते षष्ठीविधानादत्र तस्या अप्राप्तेः। तथा चैतत्तोषभिया कृतावेव शक्तिः प्रतिभाति।

ननु "भावकर्मणो" रितिसूत्रेण तयोरात्मनेपदविधानम् "शेषात्कर्त्तरि परस्मैपदमि" ति सूत्रेण कर्त्तरि परस्मैपदविधानमिति लकाराणां भावकर्मकर्त्तारोऽर्थास्स्युरेव "लः कर्मणीति"सर्वं सूत्रङ्किमर्थमिति प्रश्नः। निरुक्तरीत्या सूत्राभावे नियन्तुरभावेन सकर्मभ्योऽपि धातुभ्यो भावे प्रत्ययापत्तौ पटं भिद्यते यज्ञदत्तेनेत्यादिप्रयोगापत्तेः। नचैवम् 'अकर्मकेभ्यो भावे ल'' इत्येव सूत्रमस्तु भावे चेल्लकारस्तर्हि अकर्मकेभ्य एवेति न पूर्वोक्तो दोष इति वाच्यम् ? यत्र २ स्वतोनियमस्तत्र २ विपरीतनियमोऽपि इति न्यायेन कदाचित् "अकर्मकेभ्यश्चेद् भाव एव" इति नियमापत्त्यां अकर्मकेभ्यः कर्त्तरीष्टस्यापि लकारस्याभावापत्तेः। नच एवम् "भावे चाकर्मकेभ्यो ल" इत्येव लाघवात् सूत्रमस्तु चकारात् कर्त्तरीत्यनुकर्षात् अकर्मकेभ्यो भावे कर्त्तरि च लकारोपपत्तौ न दोष इति वाच्यम् ? कर्त्तरीत्यंशेऽपि भाववत् अकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यः कर्त्तरि इष्टस्यापि लकारस्याभावापत्तेः नन्वेवमेतद्दोषवारणाय "लश्च" भावेचाकर्मकेभ्यः" इति न्यास एवास्तु पूर्वत्र योगे चकारात् कर्त्तरीत्यनुकृष्य लकाराः सकर्मकेभ्यः कर्त्तरि स्युरितितात्पर्यवर्णनेन कर्मणि च ज्ञापकादेव लकारविधाने सिद्धे न दोष इति चेन्न ? उत्तरत्र "तयोरेव कृत्यक्त" इतिसूत्रे कर्मणोऽपि परामर्शार्थमेतस्यावश्यकत्वादिति।

आख्यातस्थले क्रियामुख्यविशेष्यकश्शाब्दबोधः। अत एव "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति" यास्काचार्यवचनमनुकूलम् भावो भावना उत्पादना क्रियेति यावत्। अत एव चैत्रो ग्रामङ्गच्छतीत्यादावेकत्वावच्छिन्नचैत्राऽभिन्नकर्तृको वर्त्तमानकालिको ग्रामाऽभिन्नकर्मनिष्ठो यस्संयोगस्तदनुकूलगमनव्यापार इत्येवमनेकशाब्दबोधप्रकारा अस्मत्कृतपरिष्कारदर्पणे द्रष्टव्या इति वैयाकरणमतम्। काण्डे कुड्ये रमते ब्राह्मणकुलमिति क्रियाप्रधानमिति "ह्रस्वो नपुंसके प्रातिपदिकस्ये"तिसूत्रभाष्यं सङ्गच्छते। तत्रैतन्नाम क्रियानुरोधेन गुणभूतक्रियावाचिभ्यः कालान्तरे प्रत्यया न तु तिङ् कालान्तरे इति व्यवतिष्ठते। प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधो नैयायिक-

मते । नच प्रथमान्तार्थविशेष्यत्वे क्रियाया विशेषणत्वे पाको भवति इत्यर्थे पचति इति शिष्टवाक्यन्नोपपन्नं स्यात् अत एव "भूवादि" सूत्रभाष्ये का तर्हीयम्वाचो युक्तिः पचति त्वम्पचसि भवति पक्ष्यति भवतीति प्रश्ने समुत्तरम् , पचादयः क्रिया भवति-क्रियायाः कर्त्र्यो भवन्तीति । किञ्च "कर्मणा यमभिप्रैती"ति सूत्रभाष्ये क्रियाऽपि कृत्रिमङ्कर्म क्रियापि हि क्रियया ईप्सिता भवति कया क्रियया सन्दर्शनादिक्रिययेति । नच आख्यायते सर्वप्रधानीभूतोऽर्थोऽनेनेत्याख्यातपदेन धातुरेवेति वाच्यम् ? आख्यातमाख्यातेन क्रियासातत्य इति "मयूरव्यंसकादि"सूत्रे तस्याऽग्रहणात् । भाष्ये चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च भावकालकारकसंख्याश्चत्वारोऽर्थाः आख्यातस्य । तत्र भावप्रधानमिति तद्भाष्यम् , निष्कौशांबिरिति विषये "लुप्ताख्यातेषु चे"ति समर्थसूत्रस्थवार्त्तिके कृति आख्यातपदप्रयोग उपचारात् इति भाष्यम् कृत्प्रकृतिभूतधातावव्याप्तेश्च शिश्ये इति तिङन्तेऽतिव्याप्तेश्च ।

किञ्च आख्यातपदेन धातोर्ग्रहणे क्रियावाचकत्वमात्रे वक्तव्ये प्रधानपदनिवेशनिरर्थकत्वापत्तेश्च । अत एव "प्रशंसायां रूपबि"ति सूत्रभाष्ये पचति रूपम् पचतो रूपमित्यादेरसिद्धिमाशङ्क्य क्रियाप्रधानमाख्यातम् द्रव्यप्रधानन्नाम यतः क्रियाम्पृष्टस्तिङाचष्टे किन्देवदत्तः करोति पचतीति द्रव्यम्पृष्टः कृता आचष्टे कतरो देवदत्तः यः पाचक इत्युक्तम् । न च नामान्याख्यातजानीति केषाञ्चिदुक्तिः कथं सिद्ध्येदिति वाच्यम् ? तत्राख्यातपदेन तदवयवो धातुर्गृह्यते प्रमाणञ्च सर्वन्नामधातुजमेवेति निरुक्तमुणादयो बहुलमिति सूत्रभाष्योक्तेः ।

प्रकृतिः प्रत्ययो विभक्तिरित्येतावन्नाम सत्ता द्रव्यं लिंगं संख्या चेति नामार्थः । तेषु द्रव्यम्प्रधानमिति निरुक्तभाष्योक्तेश्च ।

किञ्च नमन्ति आख्यातार्थम्प्रति विशेषणीभवन्ति इति नामेति च निरुक्तभाष्यम् । अव्ययातिरिक्तनामलक्षणम् उपसर्गनिपाता इत्यत्र निपातपदमव्ययमात्रोपलक्षणमिति तद्भावः । तथा च क्रियाप्रधानमाख्यातमित्यत्र प्रत्ययार्थाऽपेक्षया यत्र धात्वर्थः प्रधानन्तदाख्यातमित्यर्थः । नच धात्वर्थपेक्षया क्रिया कृतिः प्रधानमिति तदर्थः भावशब्देनापि कृतिरेवेति वाच्यम् ? प्रत्ययार्थः प्रधानमित्येव सिद्धे भूयत इत्यादिभावाऽख्यातेऽव्याप्तेश्च । नच क्रियाप्रधानमाख्यातमित्यत्र क्रियायाः प्रधानं क्रियाप्रधानमर्थात्क्रियानिरूपितप्रधानम्प्रथमान्तार्थं इति नैयायिकसरणिस्समायातीति वाच्यम् ? नमन्त्याख्यातार्थम्प्रति विशेषणीभवन्तीति तद्भाष्यविरोधात् । नच पचति त्वम्पचसि भवतीत्यत्र भवतीति सम्बोधनपदम् काञ्चिन्नायिकाम्प्रति कस्यचिदुक्तिः तामनुवदति भाष्यकार इति न क्रियाकर्तृत्वेन तार्किकहानिरिति वाच्यम् ? उत्तरदले पचादयः क्रिया भवतिक्रियाया इतिदर्शनेन सम्बोधनविवरणाऽभावात् । नच तत्रापि भवतीति सम्बोधनमेव परिच्छेद्यम् कर्त्र्यो भवन्तीत्यस्य क्रियाद्वयसमभिव्याहारे एकस्याविशेषणत्वमपरस्या विशेष्यत्वं यथा गच्छति भुङ्क्ते तत्रेति कथनेन गमनंविना

भोजनन्न भवतीति तत्तदधीनत्वमिति यावत् । शाब्दबोधे विशेषणत्वम्विशेष्यत्वमन्व-यव्यतिरेकगम्यमिति चेद्वाच्यम् ? पूर्वोक्तानेकभाष्य उपायाऽभावात् । नच भावप्रत्यये देवदत्तेन भूयत इत्यादौ प्रथमान्तपदाऽभावात् तदर्थस्य विशेष्यत्वाऽभावेऽपि प्रथमान्तपदसमभिव्याहारे समवायसम्बन्धावच्छिन्नैकत्वविशिष्टकर्तृविशिष्टक्रियाऽश्रयो देवदत्त इति प्रथमान्तार्थविशेष्यकबोध एव स्यादिति वाच्यम् ? तादृशबोधस्यानु-भवाऽगम्यत्वात् । किञ्च यत्रोभे भावप्रधाने भवत इत्युत्तरनिरुक्तविरोधात्तदर्थञ्च तद्भाष्ये नामाख्यतयोः परस्परविनाभूतयोस्स्वस्वपदार्थोक्तावेकस्य भावप्राधान्यमेकस्य सत्त्वप्राधान्यम् । अथ पुनर्यत्र ते उभे भवतो वाक्ये तत्र भावप्रधाने आख्यातार्थप्रधाने वाक्ये ह्याख्यातम्प्रधानन्तदर्थत्वाद् गुणभूतन्नाम कृदभिहितो भावो द्रव्यवत्प्रकाशते ।

तदर्थस्य भावनिष्पत्तावङ्गत्वात् एवञ्चावद्वाक्ये आख्यातम्प्रधानमिति । अत्र नामपदेन निपातातिरिक्तस्य ग्रहणन्तेन क्रियाया नञर्थविशेषणत्वेऽपि न क्षतिः । अत एव हरिर्वसन्ददर्शेत्यादौ "धातुसम्बन्धेन प्रत्यया" इत्यनेन प्रधानतिङन्तवाच्यक्रियानु-रोधेन गुणभूतक्रियावाचिभ्यः कालान्तरे प्रत्ययाः न तु तिङ् कालान्तरे इति व्यवति-ष्ठते "वर्त्तमानसामीप्य" इत्यादिना कालबाध एव प्रक्रान्तः काल एव बाध्यते कृदुप-स्थाप्यस्य गौणत्वानापत्तौ कालबाधानुपपत्तेर्दोषकरत्वात् । किञ्च सुवृष्टिश्चेदभविष्य-त्तदा सुभिक्षमभविष्यदित्यादौ क्रिययोः प्रधानाऽप्रधानभावेन कार्यकारणभावेनान्वया-भावे हेतुहेतुमत्त्वाऽप्रतीतेर्हेतुहेतुमतोर्लृङित्यादेरप्रवृत्त्यापत्तौ रूपहानिरितोऽपि क्रिया-प्राधान्यमध्यवसीयते नतु प्रथमान्तार्थप्राधान्यम् । किञ्च नैयायिकमते प्रथमान्तार्थप्रा-धान्यस्वीकारे "पुरीमवस्कन्द लुनीहि नन्दनम्मुषाणे" त्यादौ पुर्य्यवस्कन्दनरूपाऽस्वा-स्थ्यक्रियेत्याकारकाद्यन्वयाऽभावे धातुसम्बन्धे विहितस्य लोडादेरनापत्तिः । नच तिङ-न्तोपस्थापिता क्रिया क्रियान्तरैस्समवायन्न गच्छतीति भाष्यविरोधः इति वाच्यम् ? क्रिययोः कर्तृकर्मभावेन परस्परमन्वयो भवति न तु करणत्वेनेति कैयटेन व्याख्यात-त्वात् । अत एव पठन् गच्छतीतिवत्पठति गच्छतीति कुतो'नेति तद्वाक्यस्याऽप्रामाणि-कत्वम् कैयटोक्तेः । अत एव "सुबन्तं हि यथानेकसुबन्तस्य विशेषणम् । तथा तिङ-न्तमप्याहुस्तिङन्तस्य विशेषणम्" । किञ्च प्रथमान्तार्थप्राधान्ये न्यायाभिमते प्रचार-णीये पश्य मृगो धावति शृणु देवदत्तो गायति इत्यादौ प्रधानदर्शनक्रियाम्प्रति मृगस्य कर्मत्वात्तन्निरूपितद्वितीयापत्तिः । मृगकर्तृकोत्कटधावनाऽभिन्नमृगकर्मकदर्शनस्यैव त-न्मते प्रतीतेः । वैयाकरणमते तु समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वविशि-ष्टमृगाऽभिन्नाश्रयकमृगकर्तृकोत्कटधावनकर्मकन्दर्शनमिति उत्कटधावनस्य क्रियात्वेन द्वितीयानवकाश इति वाच्यम् ? तत्र विशिष्टमहावाक्यार्थबोधे वाक्यार्थस्य कर्मत्वाद्वा-क्यस्य प्रातिपदिकत्वाभावेन द्वितीयानवकाशात् । अत एव क्रमादमुन्नारद इत्यबोधि स इत्यादौ वाक्यार्थस्य कर्मत्वान्न द्वितीयेति । नच निपातेनेतिनाऽभिहितत्वान्न द्वि-

तीयात्रेति वाच्यम् ? अभिधानश्च प्रायेण तिङ्कृत्तद्धितसमासैरित्येव भाष्ये पाठात् । अमुन्दृश्यमानन्तेजः पुञ्जमित्यबोधि नारदोऽयम् नारद इति अमुन्तेजः पुञ्जमबोधीति कथनेनाऽविरोधात् । नच उत्कटधावनानुकूलव्यापाराश्रयो मृगस्तं पश्येत्यर्थापत्तौ मृगस्यैव कर्मतासम्बन्धेन न्यायानुयायिमते प्रधानत्वेन च प्रातिपदिकत्वेन द्वितीयापत्तिः अन्यथा पचन्तञ्चैत्रम्पश्येत्यादावपि पाकानुकूलकृतिविशिष्टस्य चैत्रस्य कर्मतया द्वितीयानापत्तेरिति वाच्यम् ?

शक्तिग्रहम्व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥

लोकेऽर्थबोधनाय वाक्यप्रयोगः येन तात्पर्येण यद्वाक्यम्प्रयोज्यन्तदेवार्थम्बोधयति ।

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च षड्भिस्तात्पर्य्यनिर्णयः ॥

उत्कटधावनदर्शनतात्पर्य्येणैव वाक्यप्रयोगः । शृणु देवदत्तो गायतीत्यस्य गानकर्मश्रवणतात्पर्य्येण प्रयोगः । विचित्रन्धावनम् विचित्रञ्ज्ञानमिति धावनम्पश्य गानं शृणु इति तात्पर्यवर्णनेन तत्र कर्मत्वाऽप्रवृत्तेः । नच

पश्य लक्ष्मणपम्पायां बकः परमधार्मिकः ।
शनैश्शनैः पदन्धत्ते मीनादेर्नाशशङ्कया ॥

इत्यादौ प्रथमान्तबकस्यैव दर्शनक्रियायामन्वयस्तस्य प्रातिपदिकत्वेऽपि न द्वितीया, तथैव पश्य मृगो धावतीत्यादावपि न द्वितीयेति वाच्यम् ? बकोऽस्ति तम्पश्येति अद्ध्याहृतक्रियया तत्र द्वितीयाया अप्रवृत्तेः । अत एव भिग्देवदत्तेत्यादौ सम्बोधनविषये अस्त्यादिक्रियाद्ध्याहारेण सम्बोधनं क्रियायां विशेषणम् ।

सम्बोधनपदं यच्च तत्क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥

अध्याहृतक्रियाया विशेष्यत्वेन तत्रैव देवदत्तपदार्थस्यान्वयेन द्वितीयाया अप्रवृत्तेः । एवमेव

श्रुत्वा ममैतन्माहात्म्यन्तथा चोत्पत्तयश्शुभाः ।

इत्यत्रार्षत्वान्न द्वितीयेति समाधानं विहाय अस्त्याद्यद्ध्याहारेणैव द्वितीयाया अप्रवृत्तिवर्णनात् । नच प्रथमान्तार्थस्य विशेष्यत्वाऽभावे नैयायिकविरुद्धे

सुरथो नाम राजाऽभूत्समस्ते क्षितिमण्डले ।
तस्य पालयतस्सम्यक् प्रजाः पुत्रानिवौरसान् ॥

इत्यत्र

तुल्येऽपराधे स्वर्भानुर्भानुमन्तञ्चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नस्स्फुटम्फलम् ॥

इत्यत्र च तच्छब्देन सुरथग्रसनपरामर्शाऽनुपपत्तिरिति वाच्यम् ? "दाणश्च सा

चेच्चतुर्थ्यर्थे" इति सूत्रे सापदेन "समस्तृतीयायुक्तादि" तिसूत्रोपात्ताप्रधानतृतीयापरामर्शेन सर्वनाम्नाञ्च प्रधानपरामर्शकत्वमपि तु बुद्धिस्थमात्रपरार्शकत्वम्प्रधानाऽप्रधाननियमो नास्ति । तथा च सुरथग्रसनपरामर्शे वाधाऽभावेन क्रियामुख्यविशेष्यकबोधे ह्यान्यभावात् । नच पश्य मृगो धावतीत्यत्र धावनपदार्थस्य दर्शनक्रियायां सकर्मिकायाम्वैयाकरणमते कथमन्वय इति वाच्यम् ? शाब्दबोधे चैकपदार्थेऽपरपदार्थस्येतिनियमेन कर्मत्वस्य संसर्गतया भानात् । नच मृगपदार्थस्य प्रथमान्तार्थस्य संसर्गमर्यादया कर्मत्वमाश्रित्यान्वयस्स्यादिति वाच्यम् ? निपातातिरिक्तप्रातिपादिकार्थयोः क्रियानिपातातिरिक्तप्रातिपदिकार्थयोश्च साक्षाद् भेदसम्बन्धेनाऽन्वयोऽव्युत्पन्न इति सिद्धान्तेन विभक्त्यर्थाऽभावादन्वयानर्हत्वात् । अप्रथमासामानाधिकरण्येन तिङो वाधित्वा शत्राद्यापत्तेश्च । नच वाऽसरूपोऽस्त्रियामित्यनेन तिङ्वेति वाच्यम् ? लादेशेषु तदभावस्य भाष्ये स्पष्टत्वात् । यो धावति मृगस्तम्पश्येत्यद्ध्याहारेणान्वयेऽपि भाष्यसम्मतस्य पदैकवाक्यतयान्वयस्य विलयापत्तेश्च । नीलविशिष्टघटस्य दर्शनकर्मत्वे प्रतिपिपादयिषिते नीलं घटज्ञानामीत्यादौ द्वितीयानापत्तेश्च । नच तवाऽपि मृगीयधावनस्य विशिष्टस्य दर्शनकर्मत्वे विशेषणस्य मृगस्याऽपि कर्मत्वात्प्रातिपदिकत्वाच्च द्वितीयापत्तिरिति वाच्यम् ? धावनक्रियाविशेषणस्य मृगस्यान्तरङ्गसंस्कारप्रथमाविभक्तिविशिष्टस्य पश्चाद् बहिरङ्गसंस्कारकर्मत्वानर्हत्वात् । नैयायिकमते तु-धावनक्रियानिरूपितविशेष्यत्वे मृगस्य दृशा साक्षाद्विशेषणत्वात् । अन्तरङ्गादपि प्रधानकार्य्यं सर्वतो बलवदिति "हेतुमति चे" ति सूत्रभाष्यसम्मतत्वेन बलवत्त्वाद् द्वितीया दुर्वारैव । किञ्च चैत्रः पचतीत्यादौ कृतिप्रकारकप्रथमान्तार्थविशेष्यको बोध इति चेन्न ? एकविशेषणवैशिष्ट्येन उपस्थिते विशेष्ये तत्सजातीयसम्बन्धेन विशेषणान्तरसम्बन्धस्याऽव्युत्पन्नत्वात् । अस्मादेव नियमात् राजपुरुषो भार्य्यायाश्चेति न प्रयोगः घटो द्रव्यमित्यर्थे घटो द्रव्यत्वस्येति च न प्रयोग इति समर्थसूत्रे भाष्ये स्पष्टम् । किञ्च नैयायिकमते पचति व्रजतीत्यादीनां साधुत्वापत्तिः स्वस्वमतव्युत्पत्त्यनुसारेण बोधस्य दुर्वारत्वेऽपि साधुत्वस्य निर्विवादत्वात् । साधुत्वञ्च वैयाकरणमत एव भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् "साधुत्वन्तद्भावेऽपि बोधो नेह निवार्य्यते" इति हरिः । "ते विभक्त्यन्ताः पदमिति" गौतमसूत्रे न्यायवार्त्तिककारोऽप्याह द्वयी विभक्तिस्स्वाद्यन्तन्नाम तिबाद्यन्तमाख्यातमित्यादि दूषणाम् ।

किञ्च प्रथमान्तार्थप्राधान्ये भावप्रत्ययस्थले प्रथमान्तपदाऽभावात्क्रियाविशेष्यक एव बोधस्तथा सर्वत्रैवास्तु व्यवहारः । नच वैयाकरणमते कर्मप्रत्ययस्थले पच्यते तण्डुल इत्यादौ देवदत्तकर्तृकपाकानुकुलविक्लित्त्याश्रयस्तण्डुल इत्यादिबोधे प्रथमान्तार्थस्य प्रधान्यन्तस्मात्सर्वत्रैव स व्यवहार इति वाच्यम्? पूर्वोक्तानेकदोषाणान्दुर्वारत्वात् मीमांसकजैमिनिसूत्रविरोधाच्च । तथाहि "भावार्थाः कर्मशब्दास्तेभ्यः कियाप्रतीयेतैष ह्यर्थो विधीयते" इति सूत्राऽकारः कर्मशब्दा यजेत दद्यात्

जुहुयादित्यादयस्ते भावार्थाः प्राधान्येन क्रियार्थाः। क्रियाप्रधानमाख्यातम्। भावप्रधानमाख्यातमित्यभियुक्तोक्तेः। अतस्तेभ्यः क्रिया प्राधान्येन प्रतीयेत हि प्राधान्यादेवैषोऽर्थः क्रियारूपःसर्वत्र विधीयते नतु नामार्थः तस्याश्च शीघ्रनाशित्वाद् द्वारमपूर्वस्वीकार्य्यमिति तदर्थः। तस्मान्न भावना प्रत्ययार्थ इत्यपि सिद्ध्यति, भावप्रधानमाख्यातमित्यपि वचनं क्रियाविशेष्यकबोधसञ्चालकञ्च सिद्ध्यतीति। नच प्रत्ययार्थः प्रधानम् प्रकृतिप्रत्ययौ सहार्थम्ब्रूतस्त प्रत्ययार्थः प्रधानमिति नियमोऽत एव पक्ता पाचक इत्यादीनां सिद्धिरौपगव इत्यादीनाञ्च। तथा च प्रत्ययार्थस्य कर्त्तुःप्रकृत्यर्थत्वात् प्रथमान्तार्थविशेष्यकबोध आपतत्येव इति नैयायिकमतम्भावनाप्रत्ययार्थवादिमीमांसकमतञ्च सुदृढमेवेति वाच्यम्? प्रत्ययार्थः प्रधानमिति वचनं यत्र प्रत्ययस्य वाचकता तद्विषयकमेव, कर्त्तरि शबित्यादौ तद्विषयाद्धातोरित्यर्थेन तिङन्ताद्द्योतकत्वाद्विशेषणत्वमेव भावे इत्यस्य तथाऽन्वयस्यैव युक्तत्वात्। अत एव "स्नुक्रमोरनात्मन" इति सूत्रभाष्ये "भावकर्मणोरि"ति सूत्रस्य भावकर्मवृत्ताद्धातोरित्यर्थकथनं कृतम्, तस्य भाष्यस्य भावकर्मविषयाद्धातोरित्यर्थे कैयट आह धातोस्तद्विषयत्वं कर्मादिविशिष्टक्रियावाचकत्वेन। कर्मादीनां स्वप्रकृतिकप्रत्ययवाच्यत्वेन च बोध्यन्तत्र च तिङ्विषयलकारस्थले आद्यम् क्रियाप्रधानमाख्यातमिति स्मृत्यन्तरात् शबादिप्रत्ययविषये त्वन्त्यम्। सत्त्वप्रधानानि नामानीति स्मृतेः शबादिविकरणा द्योतका एव सार्वधातुके यगितिसूत्रस्थसार्वधातुकार्थाः कर्त्रादय इति सिद्धान्तमूलकमेव सत्त्वप्रधानानि नामानीति। स्त्रीप्रत्ययपक्षे द्विवचनाद्यनुत्पत्तिराशङ्किता भाष्ये। अत एव भगवान्पाणिनिराह – "प्रधानप्रत्ययार्थवचनमर्थस्याऽन्यप्रमाणत्वादि"तिसूत्रम् प्रधानम्प्रत्ययार्थ इति न कार्य्यम् अर्थस्य अर्थावबोधकत्वात् अन्यप्रमाणत्वात् व्युत्पत्त्यनुसारित्वादिति हि तदर्थः न तु व्यभिचरितत्वादित्यर्थः। अत एव लोकत एव सिद्धेरिति कौमुदी। तथा च क्रियाख्यविशेष्यक एव बोध इति निश्चितम्। किञ्च यद्वान्या क्रिया क्वचित् क्रियान्तरानाकाङ्क्षा स्वयमेव प्रधानन्तदाख्यातमिति भाष्यञ्च प्रमाणम्। किञ्च प्रत्ययार्थकालकारकसंख्यापेक्षया धात्वर्थप्राधान्यमद्ध्यवस्यमिति च महाभाष्यम्। किञ्च पञ्चमे न्यायभाष्येऽपि क्रियाकालयोगाऽभिधायि आख्यातधात्वर्थमात्रञ्च कालाऽभिधानविशिष्टमिति तत्र कालेनाभिधानेन कारकेण विशिष्टन्धात्वर्थमात्रमाख्यातार्थ इति तदर्थः, तस्यैव व्याख्यान क्रियाप्रधानमाख्यातमिति वार्तिककृताऽत्र कृतम्। किञ्च तत्रैव सूत्रे वार्तिककार आह विशेष्यभावस्यैकविषयत्वाद् यदि गोशब्दस्य तिष्ठतिशब्दस्य चैकमभिधेयम्भवति ततो विशेषणविशेष्यभावाऽपन्नयोर्गोशब्दतिष्ठतिशब्दयोस्सामानाधिकरण्यं युज्यते नान्यथा। एवञ्चानेन प्रमाणेन विस्पष्टं कारकस्य विशेषणत्वम् प्रत्ययार्थत्वम् क्रियाया मुख्यविशेष्यकत्वञ्चेति। किञ्च न्यायटीककवात्स्यायन आह पदसमयपरिपालनाय व्याकरणम्प्रवृत्तिमिति व्याकरणबोध्योऽर्थ ऐश्वरसमयविषय इत्येवम्।

पाणिनीयम्महाशास्त्रम्पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नन्त्याज्यन्न किञ्चन ॥

इतिपराशरः "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" श्रुतिः साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरित्यभियुक्तवाक्यञ्च । शक्तिग्रहम्व्याकरणोपमानेति च । रोदितीव पठतीति वाक्यन्तु न भवति नवै तिङन्तेनोपमानमस्ति इति किन्तु तत्र सम्भावनार्थं इवशब्द इति कैयटः । तिङन्तेन शब्देनोपमानबोधो नास्तीति तद्भाष्यार्थः । उपमेयत्वन्त्वस्त्येव, ब्राह्मणवदधीत इति प्रतीतेः । पचति भवतीति व्याख्या—क्रियायाः कर्तृकर्मभावेनान्वयेऽपि तदितरकारकत्वेन क्रियान्तरेऽन्वयो न भवति । क्रियानाधारकारकत्वेनान्वयाद्वा लिङ्गसंख्याऽनन्वयाद्वा असत्त्वभूतत्वम्बोध्यम् । नच भूवादिसूत्रभाष्योक्तपचति भवतीत्यादौ समानवाक्ये तिङ्द्वयलाभेन तद्व्यावृत्त्यर्थं "न्तिङङतिङ" इतिसूत्रेऽतिङ्ग्रहणस्याऽवश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोध इति वाच्यम् ? लौकिकैकवाक्यत्वसत्त्वेऽपि एकतिङ् वाक्यमिति पारिभाषिकस्यासत्त्वमितिभाष्याशयात् । लौकिकैकवाक्यत्वञ्च "सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विते" त्यमरोक्तमेव ।

क्वचिद् भावे लकारेऽपि बहुत्वसंख्याप्रतीत्या बहुवचनम् "हतशायिकाश्शय्यन्ते" इति यादृशानि हतानां शयनानि तादृशानि शयनानीत्यर्थः । तथा च क्रियाप्रधानता युक्ततरैव ।

काले युक्ताऽभिसरणे मुह्यन्ति मृगमोहिकाः ।
उष्ट्रासिकास्समास्यन्ते शय्यन्ते हतशायिकाः ॥

इतिभाष्यकारप्रयोगः ।

## ( अथ धात्वर्थविचारः )

फलव्यापारयोर्द्धातुराश्रये तु तिङस्स्मृताः ।
फले प्रधानम्व्यापारस्तिङर्थस्तु विशेषणम् ॥ १ ॥

फलव्यापारोभयवाचकत्वन्धातुत्वमित्याशयः । फलव्यापारोभयवाचकत्वं सकर्मकत्वम् केवलव्यापारमात्रवाचकत्वमकर्मकत्वम् । ननु व्यापार एव धात्वर्थोऽस्तु घटः कर्मत्वम् आनयनम् कृतिरिति वाक्याच्छाब्दबोधवारणाय घटङ्करोतीतिवत् घटं यतते इतिप्रयोगावारणाय च घटनिष्ठकर्मतादिरूपकमानयनमित्याकारकशाब्दबुद्धित्वावच्छिन्नव्यापारविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति द्वितीयान्तग्रामादिपदसमभिव्याहृततिङन्तगच्छत्यादिपदसमभिव्याहारः कारणम् । अत एव पाको गमनमित्यनयोर्गम्धात्वर्थस्य पाके पचधात्वर्थस्य गमने न व्यभिचारः । तत्तदर्थबोधे तत्तद्धातुसमभिव्याहारः कारणम् । विशेषविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति धातुविशेषजन्यव्यापारोपस्थितिः कारणम् । ग्रामन्त्यजतीत्यत्र ग्रामकर्मकत्यागरूपफलविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति त्यज्धातुजन्यस्पन्दनरूपव्यापारोपस्थितिःकारणम् । ग्रामकर्मकसंयोगरूपफ-

लविषयकशाब्दबोधम्प्रति गम्धातुजन्यस्पन्दरूपव्यापारोपस्थितिः कारणम् । अत एव ग्रामं गच्छतीतिवत् ग्रामं स्पन्दते इति न प्रयोगः । नच फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वमिति सकर्मकाऽकर्मकव्यवस्थाऽनुपपत्तिरिति फलावच्छिन्नव्यापारे धातोश्शक्तिरिति वाच्यम् ? तत्तद्वाक्यार्थविषयकशाब्दबोधे चिकीर्षिते द्वितीयान्तपदजन्यार्थविशिष्टव्यापारवाचकत्वं सकर्मकत्वम् केवलव्यापारमात्रवाचकत्वमकर्मकत्वमिति लक्षणात् । अत एव कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम् तदनन्वय्यर्थकत्वमकर्मकत्वमत एव "अधिशीङ्स्थासाङ्कर्म"त्येन कर्मत्वादकर्मत्वेऽपि अध्यास्यते भूमिरिति वाक्ये कर्मणि प्रत्ययः । यत्तु

यद्धातुसमिव्याहृतफलव्यापारोभयप्रतीतिविषयत्वं सकर्मकत्वन्तद्भिन्नत्वमकर्मकत्वमिति तन्न ? कर्मप्रयोगे सकर्मकत्वज्ञानं सकर्मकत्वज्ञाने कर्मप्रयोग इत्यन्योन्याश्रयापत्तेः । नच पूर्वकल्पे फलविषयकबोधे द्वितीयाजन्योपस्थितिर्हेतुः व्यापारविषयकशाब्दबोधे धातुजन्योपस्थितिर्हेतुरिति अकर्मकधातुसमभिव्याहारे व्यापारविषयकशाब्दबोधम्प्रति धातुजन्यव्यापारोपस्थितिर्हेतुरिति कार्य्यकारणभावद्वयम् । फलव्यापारोभयार्थकधातौ तु जन्यफलव्यापारोभयोपस्थितिर्हेतुरिति एक एव कार्यकारणभाव इति लाघवमिति वाच्यम् ? सम्भवति लघौ धर्मे गुरौ नावच्छेदकत्वमिति सिद्धान्तेन फलावच्छिन्नव्यापारत्वस्य शक्यतावच्छेदकत्वे गौरवात् विनिगमनावैकल्येन फलप्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन व्यापारविशेष्यतानिरूपितफलप्रकारताशालित्वेन हेतुत्वस्वीकारे कार्य्यकारणभावद्वयगौरवाच्च । नच तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम्, विभिन्नविषयकानुमितित्वावच्छिन्नम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमिति च नियमः । तथा च प्रतिबध्यप्रतिबन्धकभावेऽपि विनिगमनाविरहेण प्रतिबध्यतानिरूपितप्रतिबन्धकता प्रतिबन्धकतानिरूपितप्रतिबध्यतेति पूर्वम्प्रतिबध्यो धर्त्तव्यः प्रतिबन्धको वा इति । तथा च द्वितीयाजन्यधातुजन्येतिकार्यकारणभावेऽनेकाऽनेककार्य्यकारणभावापत्तिः । फलावच्छिन्नव्यापारधात्वर्थे तु एक एव प्रतिबध्यः प्रतिबन्धको वा, एवम्पूर्वोक्तनियमद्वयेऽपि एक एव । तथा च न केवलव्यापारमात्रन्धात्वर्थः किन्तु वैयाकरणाऽभिमतफलव्यापारयोर्द्धातुरित्येवेऽति वाच्यम् ?

ग्राममध्यास्ते ग्राममधिशेते ग्रामं संयुनक्तीत्यादौ द्वितीयाया आधेयत्वार्थकत्वेन केवलफलमात्रार्थकत्वेनाभीष्टाऽसिद्ध्या सर्वमते गौरवप्रवर्त्तकस्य द्वितीयार्थस्य नान्तरीयकत्वात् । लाघवगौरवानुसन्धानपरित्यागेऽपि व्यापारमात्रस्य धात्वर्थत्वे पच्यते तण्डुलस्स्वयमेवेत्यादौ कर्मवद्भावानापत्तिः । नच धात्वर्थव्यापारजन्यफलाश्रयत्वमेव कर्मवद्भावविषय इति वाच्यम् ? यत्यते घटस्स्वयमेवेत्त्यस्यापत्तेः, धात्वर्थजन्ययत्नजन्योत्पत्तिरूपफलस्य घटे सत्त्वात् । अन्यथा क्रियते घटस्स्वयमेवेत्यस्याऽनापत्तेः ।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥
असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।

व्यापाराणामग्नीन्धनसंयोगत्वतण्डुलप्रक्षालनत्वचुल्ल्युपरिधारणत्वतण्डुलस्थालीजलसंयोगत्वानामानन्त्येऽपि बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासितधर्मावच्छिन्ने शक्तेन तदादिन्यायेन बुद्धिविशेषत्वमेव शक्यतावच्छेदकमिति न तत्तन्नामोच्चारणेन गौरवम् । किंच फलस्य द्वितीयार्थत्वे ग्रामङ्गच्छतीत्यादौ संयोगादिरूपफलस्य द्वितीयार्थत्वे तस्य जनकत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः । ग्रामवृत्तिसयोगजनकव्यापारवानिति बोध एवम्प्रकारेण भूमिङ्गच्छति न महीरुहमित्यादौ महीरुहवृत्तिसंयोगस्य जनकत्वसम्बन्धेन गमनव्यापारेऽभावो वक्तव्य इत्यत्र जनकत्वसम्बन्धावच्छिन्नप्रतियोगिताको महीरुहवृत्तिसंयोगस्याऽभावो नञर्थो वक्तव्यस्सच जनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावोऽप्रसिद्ध एव ? वृत्त्यनियामकस्य जनकत्वसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वात् वृत्तिनियामकस्यैव सम्बन्धस्याभावप्रतियोगितावच्छेदकत्वात् अप्रसिद्धस्य च बोधो न सम्भवतीति । किंच द्रव्यङ्गच्छति न गुणमित्यादौ दोषः गुणमिति द्वितीयार्थस्संयोगरूप एव फलम् प्राप्त इति जनकत्वसम्बन्धावच्छिन्नप्रतियोगिताको यो गुणवृत्तिसंयोगस्याऽभावस्तद्व्यापारवांश्चैत्र इत्येव शाब्दबोधो वक्तव्यस्सच न सम्भवति ? गुणे संयोगरूपगुणस्य बाधात् । गुणवृत्तिसंयोगरूपफलाऽभावस्य नञर्थत्वाऽसम्भवेनान्वयबोधाऽसम्भवात् । किंच द्रव्यङ्गच्छति नाभावमित्यादौ च दोषः समवायसम्बन्धावच्छिन्नाऽधेयतैव द्वितीयार्थः यथा ग्रामङ्गच्छतीत्यत्र संयोगस्य समवायेन ग्रामवृत्तित्वात्तादृशसंयोगे ग्रामनिरूपिताऽऽधेयताऽप्यस्ति ग्रामानुयोगिकसमवायोऽप्यस्त्येवेति संयोगरूपफलनिष्ठाऽधेयता सम्बन्धावच्छिन्नास्तीति यदि समवायातिरिक्तकालिकादिसम्बन्धावच्छिन्नाऽप्याधेयता द्वितीयार्थस्स्यात्तदा ग्रामन्त्यजत्यपि चैत्रे ग्रामत्यागकाले समवायेन चैत्रसंयोगस्य ग्रामाऽवृत्तित्वेऽपि कालिकसम्बन्धेन ग्रामे सम्भवादेव तादृशकालिकसम्बन्धावच्छिन्नग्रामवृत्तिसंयोगमादाय ग्रामङ्गच्छति चैत्र इति प्रयोगापत्तिरूपोऽतिप्रसङ्गस्स्यादेव । तन्निवारणार्थं समवायसम्बन्धावच्छिन्नाऽऽधेयता द्वितीयार्थ इति वक्तव्यम् । तथा च ग्रामत्यागकाले समवायेन चैत्रसंयोगस्य ग्रामेऽसम्भवात् कालिकसम्बन्धावच्छिन्नग्रामवृत्तिसंयोगवृत्त्याऽऽधेयतायाः कालिकसम्बन्धावच्छिन्नत्वेन समवायसम्बन्धावच्छिन्नत्वात् । समवायानवच्छिन्नाऽऽधेयताया द्वितीयार्थत्वाऽभावाच्च ग्रामं गच्छतीति प्रयोगाऽपत्तिर्नास्त्येव । एवं स्थिते द्रव्यङ्गच्छति नाभावमित्यत्राप्यभावपदोत्तरद्वितीयार्थस्समवायसम्बन्धावच्छिन्नाऽऽधेयतेति वक्तव्यम् । तत्र यदि कोऽपि पदार्थोऽभावे समवायसम्बन्धेन स्यात्तदा तस्मिन्नभावानुयोगिकसमवायस्य सत्त्वेन तन्निष्ठा साऽभावनिरूपिताऽऽधेयता समवायसम्बन्धावच्छिन्ना स्यादिति, नचैवमस्ति ? अभावे कस्याऽपि समवायेन वृत्तित्वाऽ-

नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यतावच्छेदकविधेयभावमहिम्ना नियमतो भासते। अतः पाकस्य तण्डुलाद्यारम्भकसंयोगनाशजनकत्वेऽपि तन्नाशस्य द्रव्यान्तरोत्पत्तौ द्रव्यनाशेनान्यथासिद्धतया समभिव्याहारस्थले संयोगं पचतीति प्रयोगवारणाय संयोगनाशकृद्द्वारा नाशकत्वमेव द्वितीयार्थो वक्तव्य इति कृतं प्रयोज्यप्रयोजकभावबोधेन।

तण्डुलमोदनं करोति, काष्ठं भस्म करोति, दुग्धं दधि करोतीत्यादावपि प्रकृतिकर्मोत्तरद्वितीयया तन्नाशकत्वं कृतौ प्रत्याय्यते विकृतिकर्मोत्तरद्वितीयया च विषयताविशेष उत्पादकत्वं वा मिलितं वा कृतौ बोध्यते। काशान् कटं करोति कुसुमानि मौक्तिकानि वा स्रजं करोतीत्यादौ काशादिपदोत्तरद्वितीया कृतौ विषयताविशेषमेव बोधयति। का-

---

भावादिति अभावनिरूपितस्य तथाविधाऽऽधेयत्वस्य समवायसम्बन्धावच्छिन्नाऽऽधेयत्वस्याऽप्रसिद्ध्या तदभावबोधाऽसम्भवः। अभावनिरूपितस्य समवायावच्छिन्नाधेयत्वस्य नञाऽभावबोधाऽसम्भवः ? अप्रसिद्धप्रतियोगिकाऽभावस्याऽस्वीकारात्।

वस्तुतस्तु

फलावच्छिन्नो व्यापारो धात्वर्थः व्युत्पत्तिवैचित्र्येण नामार्थधात्वर्थयोरपि साक्षादन्वयबोधलाघवाऽभावस्तु न ? द्वितीयाशक्तिधातुशक्तिकल्पनापेक्षया धातुजन्यविशिष्टविषयकोपस्थितेरेव गरीयस्त्वात्।

भावनापरपर्य्यायव्यापारो न प्रत्ययार्थ उक्तयुक्तेः "भावार्थाः कर्मशब्दास्तेभ्यः क्रियाप्रतीयेतैष ह्यर्थो विधीयते" इति मीमांसकसूत्रबलेन।

फलव्यापारयोर्धातुराश्रये तु तिङस्स्मृताः।

इतिशाब्दिकप्रकार एव ज्यायान्।

वृत्त्यनियामकेति—

आश्रयत्वसंयोगादीनामेव वृत्तिनियामकत्वम् तेषामेव प्रतियोगितावच्छेदकत्वम्। येन सम्बन्धेन यः पदार्थो यत्र वर्त्तते तेनैव सम्बन्धेन तत्रैव तत्पदार्थस्याऽभावोपि नञा प्रत्याय्यते स्वत्वसम्बन्धेन तु न कस्यचित्पदार्थस्य राजादेः पुरुषादौ स्थितिः प्रतीयते। न हि राज्ञः पुरुष इत्युक्ते स्वत्वसम्बन्धेन राज्ञः पुरुषे स्थितिः प्रतीयते येन स्वत्वस्य वृत्तिनियामकत्वं स्यात्। वृत्तिनियामकत्वाभावेन च स्वत्वस्य प्रतियोगितावच्छेदकत्वाऽभाव इति व्याख्यानेनाऽधिकरणताऽनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वन्नास्तीति सर्वत्रानुगमः कार्य्य इत्यलम्।

इति समासो लः कर्मणि म।खण्डः।

---

नियमतो भासत इति—असति बाधके उद्देश्यतावच्छेदकप्रयोज्यत्वस्य विधेये मानमिति नियमोऽत एव धनवान्सुखीत्यादौ तथा प्रकारस्सङ्गच्छते।

शाद्युच्छेदकतायास्तत्र बाधात् । कटमित्यादौ द्वितीयार्थः पूर्ववत् । स्रगादिपदार्थविन्यासविशेषविशिष्टकुसुमादेर्न कुसुमाद्युपादानकक्रुतिविषयता, अपि तु विन्यासादिरूपविशेषणस्यैव, तस्यैव कृत्यधीनोत्पत्तिरिति स्रजमित्यादिद्वितीयान्तस्य विशिष्टसत्त्वनिर्वाहकत्वमर्थः । विशेषणोत्पादकस्यापि स्वरूपसम्बन्धविशेषरूपं विशिष्टसत्त्वनिर्वाहकत्वमक्षतमेव ।

अग्निः श्यामं रक्तं करोतीत्यादावचेतनकर्तृव्यापारबोधकतया तत्समभिव्याहृतश्यामादिपदोत्तरद्वितीयाया अपि नोपादानताख्यविलक्षणविषयतार्थकत्वसम्भवः, अपि तु तादृशद्वितीयान्तेन श्यामरूपादिविशिष्टासत्त्वनिर्वाहकतारूपं विशिष्टोच्छेदकत्वं तादृशव्यापारे प्रत्याय्यते । घटं रक्तं करोतीत्यादावपि घटादिपदस्यारक्तत्वविशिष्टघटादिलाक्षणिकतया विशिष्टघटाद्यसत्त्वनिर्वाहकत्वं प्रतीयते । प्रकृतिविकृतिभावस्थले कर्माख्यातेन प्रकृतेः कर्मत्वमेव प्रत्याय्यते अतः काष्ठानि भस्मराशिः क्रियन्त इत्यादावाख्यातार्थविशेष्यकाष्ठादिवाचकपदसमानवचनत्वमाख्यातस्य, न तु निर्वर्त्यभस्मादिरूपविकारवाचकपदसमानवचनता । अथैवं निर्वर्त्यकर्मवाचकपदात्प्रथमा न स्याद्, अपि तु द्वितीयैव ? तत्कर्मताया लकारेणानभिधानात् ।

यत्तु उभयकर्मत्वमेव लकारेणाभिधीयते । प्रधानाप्रधानकर्मसमभिव्याहृतनीवहादिदुहादिरूपद्विकर्मकोत्तरकर्मप्रत्ययस्यैव कर्मद्वयानभिधायकत्वनियमात् । प्रकृते च कर्मद्वयस्यैव तुल्यत्वात् । विकृतेराख्यातार्थविशेष्यत्वेऽपि आख्यातस्य तत्समानवचनत्वानियमः ॥ "गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हि"इत्यनुशासनसिद्धप्रकृतिविकृतिसमभिव्याहृतलकारीयविकारसंख्याबोधकत्वाभावव्युत्पत्तिनिर्वाह्य इत्युक्तस्थले न क्रियापदस्यैकवचनान्तता । तदर्थान्वितसङ्ख्याबोधकस्यैवाख्यातस्य तत्पदसमानवचनत्वनियमाद् न तु तद्विशेषणकत्वार्थकर्मत्वादिबोधजनकाख्यातमात्रस्येति । तदसत् । विकारविकारिणोर्द्वयोराख्यातार्थविशेष्यत्वे वाक्यभेदापत्तेः । घटपटौ स्तः, घटपटौ दृश्येते इत्यादौ विशेष्यभेदेऽपि विशेष्यतावच्छेदकद्वित्वादेरेकधाभानान्न वाक्यभेदः । अत्र च न तादृशं विशेष्यतावच्छेदकभानमस्ति, येन तत्रेवात्राप्येकवाक्यतानिर्वाहः । न चागत्येष्यत एवात्र वाक्यभेद इति वाच्यम् ? तथा सत्येकवाक्यार्थपरस्य काष्ठं क्रियते, इत्येतादृशप्रयोगस्यापत्तेः । काष्ठं भस्म क्रियत इति वाक्यजबोधस्य काष्ठविकृतिर्भस्मान्यविकृतिर्वेति संशयनिवर्त्तकत्वानुपपत्तेः । काष्ठभस्मनोः प्रकृतिविकारभावाभानात् ।

---

प्रत्याय्यत इति—रक्तपदोत्तरद्वितीयाविभक्त्या जनकत्वमित्यर्थः ।

भस्मन्मते च काष्ठोच्छेदकत्वरूपकाष्ठकर्मकत्वभस्मनिवर्त्तकत्वरूपतत्कमकत्वयोरेकविशिष्टेऽपरान्वय एव पूर्वोपदर्शितरीत्या काष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठप्रकृतिकत्वस्य भस्मनि लाभसम्भवादिति चेत् ? सत्यम् । भस्म क्रियत इत्यादौ भस्मादिनिर्वर्त्यकर्मताया लकारेणानभिधानेऽपि तत्कर्मताया धात्वर्थसंसर्गतया भानोपगमेन तादृशकर्मोत्तरं प्रथमायाः साधुता । प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयादिविभक्तिसाधुत्वात् । यथार्घं नम इत्यादौ नमःपदार्थत्यागेऽर्घादिकर्मत्वबोधेऽपि अर्घादिपदात्प्रथमैव । निपातार्थत्यागे कर्मतासम्बन्धेनैव नामार्थस्यान्वयात् । एवं भूतले न घट इत्यादावपि सम्बन्धस्याभावे संसर्गतया भानात् षष्ठीविषयेऽपि प्रथमा । नच धात्वर्थे नामार्थस्य साक्षादन्वयोऽव्युत्पन्न इति प्रकृतेः कर्मतायाः संसर्गतया भानं न सम्भवतीति वाच्यम् ? घटो नीलो भवति, काष्ठं भस्म भवतीत्यादौ भवनादिक्रियायां नीलादेः कर्तृतासम्बन्धेन साक्षादन्वयवदत्रापि व्युत्पत्तिवैचित्र्येण कर्मान्तरविशेषणतापन्नक्रियायामपरकर्मणः कर्मतासम्बन्धेन साक्षादन्वयोपगमात् ।

न चैवमपि कर्मत्वस्य प्रकृत्यविशेष्यत्वेन विवक्षया काष्ठं भस्मराशि क्रियेत इत्यादिप्रयोगापत्तिः । कर्मत्वान्तरविशेषणतानापन्नक्रियायामेव द्वितीयया कर्मत्वं बोध्यत इतिव्युत्पत्तिकल्पने गौर्दुह्यते क्षीरमजा नीयते ग्राममित्यादौ दोहननयनादिक्रियायां क्षीरग्रामादिकर्मकत्वानन्वयप्रसङ्ग इति वाच्यम् ? प्रकृतिविकृत्युभयकर्मकस्थले तथा व्युत्पत्तेः । यथोक्तातिप्रसङ्गवारणाय दर्शिता व्युत्पत्तिः कल्प्यते, तथा कर्तृत्वविशेषणतयाऽभासमानायां क्रियायां तृतीयार्थकर्तृत्वान्वय इत्यपि व्युत्पत्तिः कल्प्या । अन्यथा प्रकृत्यर्थविशेष्यतया कर्तृत्वविवक्षया काष्ठं भस्मना भवतीति प्रयोगस्य दुर्वारत्वात् । व्युत्पत्तिप्रयोजकनाशप्रतियोगित्वरूपविकार एव काष्ठं भस्म भवतीत्यादौ धात्वर्थः । आधेयत्वरूपं तत्कर्तृकत्वमेव सम्बन्धमर्यादया भासते । काष्ठेन भस्मना भूयत इत्यादौ भस्माद्याधेयत्वमुत्पत्तौ काष्ठाधेयत्वं च नाशप्रतियोगित्वे तृतीयोपस्थाप्यं प्रकारतया भासते । कर्तृत्वविशेषणतया भानस्य निरुक्तभवनस्यान्तर्गततायामेवोत्पत्तौ भस्मादेराधेयत्वसम्बन्धतया भासत इति व्युत्पत्तेः, काष्ठेन भस्म भूयते इत्यादयो न प्रयोगाः । भावाख्यातस्य कर्तृत्वाबोधकत्वात् । कर्मत्वान्तरविशेषणतानापन्नकृत्यादौ कर्मत्वस्य संसर्गतया भानमव्युत्पन्नमिति काष्ठं भस्मराशिः करोतीत्यादयो न प्रयोगाः ।

---

तथा व्युत्पत्तिरिति—एवञ्च गोक्षीरयोरजाग्रामयोश्च प्रकृतिविकृतिभावो न भ-

अधिशीङ्स्थासां कर्मेत्यादिना यत्राधारस्य कर्मसंज्ञा तत्राधारत्वमावेद्यत्वं वा द्वितीयार्थः । स्थलीमधिशेत इत्यादौ तादृशार्थे द्वितीयायाः स्थल्या अधिशयितेत्यादौ कृत्प्रयोगे षष्ठ्याश्च साधुत्वार्थमेवाधारस्य कर्मसंज्ञाविधानात् । अथ कृत्वर्थव्यापाररूपक्रियान्तरं धात्वर्थेऽन्तर्भाव्य शयनादिरूपफलावच्छिन्नव्यापारार्थकसोपसर्गशीङ्प्रभृतिधात्वर्थतावच्छेदकशयनादिरूपफलाश्रयतयाधारस्य कर्मत्वोपपादनसम्भवात् तादृशसूत्राणां वैयर्थ्यमेव । अध्याद्युपसृष्टशीङ्प्रभृतीनामेव च तादृशार्थे निरूढलक्षणा, न त्वनुपसृष्टानामतो न स्थलीं शेत इत्यादयः स्वारसिकप्रयोगा इति चेन्न ? धातोर्मुख्यार्थपरत्वेऽपि दर्शितप्रयोगनिर्वाहाय भगवता पाणिनिमुनिना तादृशसूत्रप्रणयनात् । तत्प्रणीतवतां सर्ववर्मप्रभृतीनां मुख्यार्थपराणां स्थल्यामधिशेत इत्यादिप्रयोगाणां साधुताया दुर्वारत्वाच्च ।

कालाध्वदेशानामकर्मकक्रियायोगे कैश्चित्कर्मप्रत्ययार्थं विभाषया कर्मत्वमनुशिष्यते । अन्ये तु क्रियान्तरान्तर्भावेणोक्तरीत्या तत्र पाक्षिकं कर्मप्रत्ययमुपपादयन्तस्तन्नानुशासति । उक्तं चैतत् "कालाभावाध्वदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते" इति । तन्मते च मासमधीते मासमास्ते योजनं धावतीत्यादावभिव्याप्त्यर्थे कालाध्वनोरत्यन्तसंयोग इत्यनेन द्वितीयाविधानं यद्यप्यनर्थकं, धात्वर्थेऽध्ययनस्थित्यादिविशेषणतयाभिव्यापनार्थकक्रियाया अन्तर्भावेण तत्कर्मतया तत्र तत्र द्वितीयोपपत्तेः । तादृशधात्वर्थे व्याप्त्यनन्तर्भावे मासमास्त इत्यादौ द्वितीयया तद्बोधनेऽपि आस्यते मास इत्यादौ स्थित्यादिव्याप्त्यलाभानिर्वाहात्, तथापि मासं रमणीया क्रोशं कुटिला नदीत्यादौ भवतीत्यस्यानध्याहारेऽपि द्वितीयायाः साधुतानिर्वाहकत्वेन भाष्यकृतस्तत्सूत्रं सार्थकयन्ति । तत्र हि रमणीयत्वाभिव्याप्यत्वं मासादौ प्रतीयते । न च तत्र क्रियासमभिव्याहारोऽस्ति यत्राभिव्याप्तिरन्तर्भविष्यति तत्कर्मतया द्वितीया च स्यात् । एवं मासमासितेत्यादावभिव्याप्त्यन्तर्भावेण मासस्य कर्मत्वोपपादनेऽपि कृद्योगात् षष्ठ्येव स्याद् न द्वितीयेत्यतोऽपि तत्सूत्रं सार्थकम् ।

अथ केयमभिव्याप्तिर्योऽत्यन्तसंयोग उच्यते । न तावद्व्याप्यवृत्तिः

---

वति । अत एव पूर्वोक्तव्युत्पत्तिर्न विरुध्यते ।

कर्मसंज्ञाविधानादिति—अन्यथा सप्तमी स्यादितिभावः ।

कालाध्वभावेति—अत्र कालत्वव्याप्यावान्तरधर्मो दिनादिः । अध्वत्वावान्तरधर्मो हि क्रोशादिः ।

कालिकः सम्बन्धः कालिकसम्बन्धस्य व्याप्यवृत्तित्वं व्याप्यकालानवच्छिन्नत्वं दिवसादिमात्रवृत्तिमासादिनिष्ठसम्बन्धो दिवसाद्यवच्छिन्न इति तत्र मासमास्त इति न प्रयोगः। मासपदार्थश्चात्र त्रिंशद्दिनमात्रस्थायो कश्चिदखण्डः पदार्थः, न तु क्रियाप्रचयस्तथा सति दिनैकादिमात्रस्थायिनोऽपि सम्बन्धस्य कासु चित् क्रियासु व्याप्यवृत्तितया तत्र तथा व्यवहारापत्तेरिति युक्तम्। चैत्रो मासं काश्यां तिष्ठतीत्यादौ काशासंयोगस्य मासव्यापकस्यैकस्याभावे ऽप्रामाण्यप्रसङ्गात्। संयोगव्यक्तीनां मासनिष्ठकालिकसम्बन्धस्यावान्तरदिनाद्यात्मककालावच्छिन्नत्वात्। न च संयोगानां भेदेऽपि चैत्रीयसंयोगत्वाद्यवच्छिन्ननिरूपितकालिकसम्बन्धावच्छिन्नाधारता मासव्यापिकैकैव। सा च नावान्तरकालावच्छिन्नेति तत्र तदनवच्छिन्नत्वबोधकमुक्तवाक्यं भवेदेव प्रमाणमिति वाच्यम्? सामान्यघटितविशेषधर्मावच्छिन्नाधिकरणताकूटादेव सामान्यधर्मावच्छिन्नवत्ताप्रत्ययोपपत्तेः। शुद्धसामान्यधर्मावच्छिन्ननिरूपिताधिकरणतायामतिरिक्तायां मानाभावात्। यत्र त्रिंशद्दिनेषु कमपि कालमधीते तत्र मासे ऽध्ययनसम्बन्धस्याव्याप्यवृत्तितया मासमधीत इति प्रयोगानुपपत्तिरपि न शक्यते वारयितुम्। उच्यते। अभिव्याप्तिर्यावदवयवसम्बन्धः। यत्समुदायो मासादिपदार्थस्त एव तदवयवाः। एवं च त्रिंशद्दिनानां मासपदार्थतया त्रिंशद्दिनेषु किञ्चित् किञ्चित् कालावच्छेदेनाध्ययनसम्बन्धेऽपि मासमधीत इति प्रयोगोपपत्तिः। त्रिंशद्दिनसम्बन्धश्च दिनपर्याप्तत्रिंशत्वव्यापकत्वम्। तादृशत्वादेश्च मासादिपदप्रवृत्तिनिमित्तस्य मासादिपदादेव लाभाद्व्यापकत्वमात्रं द्वितीयार्थः।

व्यापकत्वं च व्याप्यविशेषाघटितमखण्डं दुर्वचमिति खण्डशोऽभावप्रतियोगितावच्छेदकत्वमभावश्च द्वितीयार्थः। प्रथमाभावे प्रकृत्यर्थो मासादिराधेयतासम्बन्धेनान्वेति। मासादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नस्य च प्रतियोगितयाऽभावान्तरेऽन्वयः। तस्य चान्वयितावच्छेदकचैत्रकर्तृकाध्ययनत्वादिरूपस्वाश्रयघटितपरम्परासम्बन्धेनाध्ययनादावन्वयः। प्रथमाभावे च प्रतियोगिव्यधिकरणत्वं विशेषणमुपादेयम्। तेन त्रिंशद्दिनेष्वेव च यत्राधीतं तत्र दिनावान्तरदण्डादावध्ययनाभावेऽप्युक्तप्रयोगोपपत्तिः। मासपदं च त्रिंशद्दिनपरमेव न तु तावत्कालः

---

चैत्रो मासं काश्यान्तिष्ठतीति—सप्तम्यर्थस्य स्थाधात्वर्थसंयोगेऽन्वयः, मासव्यापककाशीवृत्तिसंयोगवान् चैत्र इति शाब्दबोधः।

द्वितीयार्थ इति—अनन्यलभ्यो हि शब्दार्थ इति न्यायात्।

स्थाय्यखण्डवस्त्वन्तरपरम् । एकदिनाध्ययनस्थलेऽपि तादृशाखण्डकाले प्रतियोगिव्यधिकरणाध्ययनाभावसत्त्वेन मासमधीत इति प्रयोगापत्तेः । मासघटकं च दिनं सूर्योदयावधि सूर्योदयान्तरपर्यन्तावस्थाय्यखण्डवस्तुरूपं, न तु क्रियादिप्रचयः । तथा सत्येकैकक्रियादिव्यक्तेरपि मासत्वाधिकरणतया तत्र प्रतियोगिव्यधिकरणाध्ययनाभावसत्त्वेन व्यापकत्वरूपद्वितीयार्थस्य बाधापत्तेः ।

दिवसं स्वपितीत्यादौ च दिवसादिपदं सूर्योदयावधिसूर्योदयान्तरपर्यन्तक्षणकूटपरमेव । अतो नैकदण्डादिमात्रस्वप्ने तथा प्रयोगः ।

अथ व्यापकत्वस्य द्वितीयार्थत्वे एकमासादिव्यापकाध्ययनस्थलेऽपि मासान्तरेऽध्ययनाभावसत्त्वेन मासत्वादिव्यापकताया अध्ययने मासमधीत इत्यादिप्रयोगानुपपत्तिः । न च मासपदेन यत्किञ्चित्त्रिंशद्दिनमात्रवृत्तिविशेषधर्मप्रकारेणानुपस्थापनेऽपि तद्धर्मवत्त्वनिरूपिताधेयत्वसम्बन्धेन मासपदार्थस्याभावेऽन्वयोपगमात् यत्किञ्चिन्मासनिष्ठाभावप्रतियोगितानवच्छेदकत्वमन्वयितावच्छेदके लभ्यत इति न काप्यनुपपत्तिरिति वाच्यम् ? तत्तन्मासमात्रवृत्तिधर्मविशेषाणां सम्बन्धघटकत्वेऽपि शाब्दबोधे संसर्गतात्पर्यज्ञानस्य हेतुतया संसर्गविशेषोपस्थितेरपेक्षितत्वात् । सम्बन्धघटकतादृशधर्मान् विशिष्याविदुषः शाब्दबोधानुदयप्रसङ्गात् । न चेष्टापत्तिः ? अनुभवविरोधात् । अनागतादिमासवृत्तितादृशधर्माणां विशिष्य ज्ञानसामग्र्या असर्वज्ञस्य दुर्लभतयास्मदादीनां सर्वेषामेव तादृशमासत्वव्यापकताबोधोच्छेदप्रसङ्गात् ।

न च तादृशवाक्यार्थतात्पर्यमुक्तज्ञाने च वाक्यार्थघटकः सम्बन्धः संसर्गमर्यादयैव भासत इति विशेषरूपेणानुपस्थितस्यचोक्तधर्मघटितसम्बन्धस्य तात्पर्यज्ञाने बाधाभावबलाच्छाब्दबोधे च तात्पर्यज्ञानबलाद्भानमनपवादमेवेति वाच्यम् ? एकपदार्थविशिष्टापरपदार्थरूपवाक्यार्थविशेषिततत्प्रतीतीच्छारूपतात्पर्यविषयकनिश्चयस्य प्राग्वाक्यार्थानिश्चये दुर्घटतया तस्य शाब्दधीहेतुत्वे च योग्यतासंशयाच्छाब्दबोधानुपपत्तेर्विशकलिततत्पदार्थतत्तत्संसर्गविषयकत्वविशेषितप्रतीतीच्छाज्ञानस्यैव शाब्दधीहेतुताया उपेयत्वात् । तत्र च तादृशसंसर्गोपस्थितेरवश्यापेक्षणीयत्वादिति चेत् ? सत्यम्, मासादिघटकतावद्दिनादिनिष्ठत्रिंशत्त्वादिरूपमास-

---

क्षणकूटपरमिति—अखण्डकालपरत्वे तु एकदण्डादिमात्रस्वप्नेऽपि दिवसं स्वपितीति अनिष्टाऽपत्तेः । अनुगतरूपेणेति—मासत्वत्वेनेत्यर्थः ।

मीमांसकानुयायिभिरिति ।

नच मीमांसकाभिमतपक्षे मासपदार्थतावच्छेदकत्वं किमिति प्रश्ने त्रिंशत्त्वत्वेन

त्वादिर्मासादिभेदेन नानैव मासादिपदप्रवृत्तिनिमित्ततापरमनुगतरूपेण। अन्यथा शक्त्यानन्त्यप्रसङ्गात्। सर्वोपसंहारेण व्युत्पत्तिं विना प्रागप्रतीतमासादेः शाब्दानुभवानिर्वाहाच्च।

न च त्रिंशत्त्वादिकं बुद्धिविशेषविषयत्वरूपं वाच्यम्? दिनादेर्द्रव्यानात्मकत्वेन तत्र गुणरूपसङ्ख्याया असम्भवात्। द्रव्यात्मकत्वेऽपि क्षमिकेषु तेषु सङ्ख्योत्पत्तेरसम्भवात्, तत्र बुद्धेरनतिप्रसक्तं वैलक्षण्यमनुगतं दुर्वचम्। जातिरूपस्य तस्य सङ्करप्रसङ्गनिरस्तत्वात्। तत्तद्दिनविषयकत्वरूपस्य तत्तद्दिनाद्यननुगमेनाननुगतत्वादिति वाच्यम्? तावत्कालस्थायिनो द्रव्यस्यापि दिनादिरूपत्वसम्भवात्। मीमांसकानुयायिभिरगत्या सङ्ख्यायाः पदार्थान्तरत्वोपगमाच्च। सङ्ख्यादिरूपनानादिनादिनिष्ठानुगतत्रिंशत्त्वादेः सुवचत्वात्। एवं मासमधीते चैत्र इत्यादावधिकरणतैव द्वितीयार्थः।

मासादिपदार्थतावच्छेदकदिनपर्याप्तत्रिंशत्त्वादेर्धर्मिविशेषणतापन्नस्य द्वितीयार्थाधिकरणतायां चैत्रकर्तृकाध्ययनाधारतात्वादिव्याप्यधर्मावच्छिन्नं स्वरूपसम्बन्धरूपमवच्छेद्यत्वं संसर्गतया भासत इत्युपगमेन सामञ्जस्यात्। यत्किञ्चिदेकमासं व्याप्य यत्राधीतं तत्राध्ययनाधारतानामवच्छेद्यतावच्छेदकाधारतावृत्त्यन्यतमत्वविशेषादिरूपोक्तधर्मावच्छिन्नानतिप्रसक्तत्वेन तद्वृत्तित्रिंशत्त्वेनावच्छेदात् न्यूनकालाध्ययनस्थले च अतिप्रसक्ततया तादृशस्य मासत्वस्योक्तरूपावच्छिन्नाधारतानवच्छेदकत्वाच्चाप्रसङ्गातिप्रसङ्गयोरनवकाशात् मासादिपदप्रवृत्तिनिमित्तधर्मे चैत्राध्ययनाधारताया व्याप्यत्वस्य शब्दालाभे ऽप्यर्थतस्तल्लाभादिति। द्वितीयाया अत्यन्तसंयोगार्थपरत्वमिति नानुशासनविरोधः।

---

प्रतीयमानं त्रिंशत्त्वन्तच्चातिप्रसक्तम्, तत्तत्त्रिंशत्वेन प्रवेशश्चेत्तर्हि अननुगतत्वमिति वाच्यम्? सूर्योदयक्षणविशिष्टवृत्तित्रिंशत्त्वस्य मासपदार्थतावच्छेदकत्वात्। वैशिष्ट्यञ्च स्ववृत्तित्वस्वपूर्वक्षणाऽवृत्तित्वस्वोत्तरसूर्योदयक्षणावृत्तित्व-स्वोत्तरसूर्योदयक्षणाऽव्यवहितपूर्वक्षणावृत्तित्वमिति चतुष्टयसम्बन्धेन।

एवं रीत्यैव सूर्योदयक्षणविशिष्टत्वन्दिनत्वम्बोध्यम्। इदमेव हि मासपदप्रवृत्तिनिमित्तम्

नचैकदिनाद्ध्ययनस्थलेऽपि मासमधीत इति प्रयोगस्स्यात् त्रिंशत्त्वस्यैकदिवसेपि विद्यमानत्वात् इति वाच्यम्? एकसूर्योदयक्षणविशिष्टवस्तुद्वयाऽवृत्तित्वमेव त्रिशत्त्वमेवञ्च न काऽपि क्षतिरितिव्याख्यानात्। वैशिष्ट्यानि पूर्वोक्तान्येवेति परममान्याः। स्वरूपसम्बन्धरूपेति।

अतिप्रसक्तधर्मस्याऽधेयतावच्छेदकत्वन्न भवत्यपि तु स्वरूपसम्बन्धरूपावच्छेदक-

त्वस्यैवेति । परन्त्वयमपि पक्षो न श्रेयस्करः ! धूमवान्वह्नेरित्यादौ वह्नित्वमपि धूमसामानाधिकरण्यावच्छेदकम्भवेदेवञ्चान्यूनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वप्रवेश इति ग्रन्थाशयः ।

घटाऽभाववद्भूतलम् ।

संयोगसम्बन्धावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नाऽभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताको बोध इत्येकः प्रकारः ।

संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यतासमानाधिकरणा या स्वरूपसम्बन्धावच्छिन्नाऽभावत्वावच्छिन्नाऽभावनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या भूतलत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताको बोध इति द्वितीयः प्रकारः ।

संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धाच्छिन्नऽभावत्वावच्छिन्नविशेष्यताऽभिन्ना याऽभावनिष्ठा प्रकारता तादृशप्रकरतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्याताको बोध इति तृतीयः स्थूलार्थप्रकारः ।

संयोगसम्बन्धावच्छिन्नसमवायसम्बन्धावच्छिन्नघत्वनिष्ठा या निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्वावच्छिन्ना घटत्वावच्छिन्ना घटनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या स्वरूपसम्बन्धावाच्छिन्नाऽभावत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिनाऽभावनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वरूपसम्बन्धावच्छिन्नाऽभावत्वावच्छिन्नाऽभावनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धाच्छिन्नभूतलत्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपिता स्वरूपसम्बन्धावच्छिनाऽवच्छेद्यता तादृशावच्छेद्यतावती या भूतलनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना भूतलत्वावच्छिना भूतलनिष्ठा प्रकारता तादृशप्रकरतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानधिकरणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या सत्ताद्याख्यक्रियात्वावच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्याताको बोधश्शाब्दिकमते ।

तार्किकमते तु सत्तानुकूलकृत्याश्रयम्भूतलमिति बोधस्सम्बन्धास्स्वयमूह्या इति सूक्ष्मार्थः ।

विनिगमनावैकल्येन शाब्दबोधे वैपरीत्यम्, तथाहि, भूतलत्वनिष्ठा या समवायसम्बन्धावच्छिन्ना निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या स्वरूपसम्बन्धावच्छिन्नाऽभावत्वावच्छिन्नाऽभावनिष्ठा प्रकरता तादृशप्रकारतानिरूपिता या अभावनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्नाऽभावनिष्ठा प्रकारता

न च भूतले घटः भूतलं घटवदितिप्रत्ययबलादतिप्रसक्तोऽपि धर्मः

---

तादृशप्रकारत्वावच्छिन्ना तत्समानाधिकरणा तदभिन्ना वा या प्रतियोगिनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या समवायसम्बन्धावच्छिन्ना घटत्वनिष्ठा निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता या घटनिष्ठा प्रकारता तादृशप्रकारताकशाब्दबोध इति प्रबन्धेन कालक्रियादीनामपि योजना। सर्वं वाक्यं सावधारणम्भवति सर्वं हि वाक्यजातं क्रियायाम्परिसमाप्यत इतिन्याययोस्सञ्चारात्।

घटो नास्ति भूतलेऽत्र क्रमवैपरीत्योभयज्ञानम्। तत्र पूर्वंवैपरीत्यम् भूतलत्वनिष्ठसमवायसम्बन्धावच्छिन्नप्रकारतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यत्वाऽभिन्ना तादृशविशेष्यतासमानाधिकरणा वा या प्रकारता तादृशप्रकारतानिरूपिता या सप्तम्यर्थवृत्तित्वत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिताऽभावत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तदभिन्ना तत्समानाधिकरणा वा याऽभावनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारत्वाऽभिन्ना तदवच्छिन्ना तत्समानाधिकरणा वा या प्रतियोगिनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नघटत्वनिष्ठा या प्रकारता तादृशप्रकारताशालिबोधः।

अथ क्रमः, समवायसम्बन्धावच्छिन्नघटत्वनिष्ठनिरवच्छिन्नप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या घटनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यतात्वावच्छिन्ना तदभिन्ना वा या नञर्थाऽभावत्वावच्छिन्नाऽभावनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तदभिन्ना वा याऽभावनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना विशेष्यता तादृशप्रकारतानिरूपिता या सप्तम्यर्थवृत्तित्वत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यतात्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या प्रकारता तादृशप्रकारतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या समवायसम्बन्धावच्छिन्ना भूतलत्वनिष्ठा प्रकारता तादृशप्रकारताशालिशाब्दबोधः। भूतलनिरूपितवृत्तित्ववान् घटः, भूतलनिरूपितवृत्तित्वाऽभाववत्सत्ताकर्त्ता घटः, भूतलनिरूपितवृत्तित्वाऽभाववद् घटकर्तृका सत्ता, भूतलनिरूपितवृत्तित्ववद् घटकर्तृकसत्ताऽभावः, भूतलनिरूपितवृत्तित्ववद्घटकर्तृकसत्ताप्रतियोगिकाऽभावः। यद्यपि उद्देश्यपदार्थे विशेष्यतासम्बन्धो विधेयपदार्थे प्रकारतासम्बन्ध इतिनियम "इको यणचि" पर्वते वह्निस्सर्वेषु घटेषु रूपमित्यादौ विधेयवह्न्यादौ विशेष्यताया एव प्रतीतेर्नायं प्रामाणिक इति तत्त्वम्।

आलोकविरोधम्प्रदर्श्य चिन्तामणिविरोधम्प्रस्तौति नह्यतिप्रसक्तमिति।

आधेयत्वाधारत्वयोरवच्छेदक इति वाच्यम्? तादृशप्रत्ययेऽवच्छेदकत्व-भानानुपगमात्। आधेयताया अतिप्रसक्तधर्मावच्छेद्यत्वे साध्यसामाना-धिकरण्यावच्छेदकधर्मात्मकव्याप्तिशरीरे मिश्रादीनां स्वरूपसम्बन्धरू-पावच्छेदकत्वनिवेशस्य व्यभिचारिण्यतिव्याप्त्या, न ह्यतिप्रसक्तमवच्छेदक-मिति तत्तस्थलीयचिन्तामणिफक्किकाविरोधेन चासम्भवदुक्तिकतापत्तेः।

आधारताया अतिप्रसक्तधर्मावच्छेद्यत्वे यद्धेत्वधिकरणत्वं साध्याधि-करणतावच्छेदकमिति तल्लक्षणव्याख्यापक्षे स्वरूपसम्बन्धरूपावच्छेद-कत्वप्रवेशं व्यभिचारिण्यव्याप्त्या दूषयित्वा विरुद्धदिक्कालावच्छिन्नवृत्तिकस्ये-त्यादिदूषणान्तरेण तत्परित्यज्य दीधितिकृतामनतिरिक्तवृत्तित्वरूपावच्छेद-कत्वविवक्षाया असङ्गत्यापत्तेः।

अस्तु वा ऽव्यासज्यवृत्तिधर्मस्यातिप्रसक्तस्यापि दर्शितप्रतीतिबलादा-

---

अव्यासज्यवृत्तीति—व्यासज्यवृत्तित्वञ्च एकत्वेतरसंख्यावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगित्वम्।

दर्शितप्रतीतिबलादिति—भूतले घटःभूतलं घटवदिति प्रतीतिबलादिति तत्त्वम्।

घटोऽस्तीतिवाक्यस्य शाब्दबोधः प्रासङ्गिकः।

घटाऽभिन्नैकत्वविशिष्टकर्तृवृत्तिवर्त्तमानकालिकी सत्तेति स्थूलार्थः। समवायस-म्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता या घटत्वनिष्ठनिरवच्छि-न्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्ना घटनिष्ठा विशेष्यता ता-दृशविशेष्यतासमानाधिकरणा तादृशविशेष्यतात्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा याऽभेदसम्बन्धावच्छिन्ना घटत्वावच्छिन्ना घटनिष्ठा प्रकारता तादृशप्रकारतानि-रूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यतात्वावच्छिन्ना तादृशविशेष्यत्वाऽभिन्ना वा या वृत्तित्वसम्बन्धाव-च्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता परिच्छिन्न-त्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना या वर्त्तमानकालनिष्ठा प्रकारता ताद-शप्रकारतानिरूपिता या सत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यता-शालिशाब्दबोध इति शाब्दिकाः।

अत्रैव प्रसङ्गे घटवद् भूतलम्।

संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपित-स्वरूपसम्बन्धावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नभूतलत्वावच्छिन्नविशेष्यताशालिशा-ब्दबोध इत्येकः प्रकारः।

संयोगसम्बन्धावच्छिन्नघटत्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेद्यतावती

धाराधेयभावावच्छेदकत्वम् । व्यासज्यवृत्तेस्त्वतिप्रसक्तस्य तदवच्छेदकत्वमप्रसक्तम् । क्षितिजलोभयं गन्धवत् स्नेहगन्धोभयं क्षिताविव्याद्यप्रतीतेः । अथ वा द्वितीयाद्यर्थे ऽध्ययनाधारत्वे तत्तन्मासादिरूपप्रकृत्यर्थविशेषणतापन्नतत्तन्मासादिव्यक्तीनां व्यापकतासम्बन्धेन पारतन्त्र्येण विशेषणत्वमुपेयते । तादृशं च व्यापकत्वं स्वसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन स्वावच्छिन्नस्य यो भेदस्तदाश्रयधर्मवत्त्वं तादृशधर्मश्च चैत्रोऽधीत इत्यादौ चैत्रीयाध्ययनाद्याधारतात्वं विशिष्यैव सम्बन्धेऽन्तर्भावनीयम् । मासान्तरनिष्ठतादृशाभावप्रतियोगितावच्छेदकत्वस्य तादृशधर्मे सत्त्वेऽपि तत्तन्मासत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतादृशधर्मे उक्तसम्बन्धेन तत्तन्मासत्वाद्यवच्छिन्नस्य यो भेदस्तदाश्रयत्वमक्षतमेवेति यत्किञ्चिदेकमासादिमात्रव्यापकाध्ययनादिस्थलेऽपि तादृशप्रयोगनिर्वाहः । प्रतिमासमधीत इत्यादौ प्रत्यादिशब्दानां मासादिपदोपस्थाप्यानुगतरूपावच्छिन्नमासत्वादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभावघटितव्यापकताबोधकतया यत्किञ्चिदेकमासव्यापकाध्ययनादिस्थले न तादृशः प्रयोगः ।

अथात्यन्तसंयोगार्थकद्वितीयाया एकादिपदं विनापि यत्किञ्चिदेकमासादिव्यापकताबोधकत्वमुपसङ्क्षिश्वरित्वा मासमेकमग्निहोत्रं जुहोतीत्यत्र एकपदवैयर्थ्यमिति चेन्न ? तत्र मासाधिककालव्यापकत्वे ऽपि मासव्यापकतयाधिककालव्यापकस्य होमस्य शास्त्रार्थतावारणायैकपदोपादानात् । तथा सति तस्य केवलार्थकतया मासमात्रव्यापकतालाभात्तादृशप्रयोजनोपपत्तेः ।

अत एव च यावज्जीवमग्निहोत्रं जुहोतीतिश्रुतिबोधिताग्निहोत्रानु-

---

या समवायसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपिता घटनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वाऽभिन्ना तादृशविशेष्यतात्वावच्छिन्ना वा या स्वरूपसम्बन्धावच्छिन्ना घटत्वावच्छिन्ना घटनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या भूतलत्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना भूतलनिष्ठा विशेष्यता अथवा समवायसम्बन्धावच्छिन्नभूतलत्वनिष्ठप्रकारतानिरूपिता या भूतलनिष्ठा विशेष्यता तादृशविशेष्यताशालिबोध इति द्वितीयः प्रकारः ।

यावज्जीवमित्यादीति । मीमांसाद्वितीयाध्यायतृतीयपादचतुर्विंशसूत्रेऽधिकरणमेतद्विवेचितम् ।

वादेन सतिलव्रीहिचरुरूपद्रव्यस्य मासैकरूपकालस्य च विधाने वाक्यभेदः स्यादिति तादृशद्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रपदप्रतिपाद्यस्य कर्मान्तरस्यैव विधायिका तादृशी श्रुतिरिति सिद्धान्ते यावज्जीवकालान्तर्गतमासरूपकालांशेऽप्यनुवादकतासम्भवात्प्राप्ताग्निहोत्रानुवादेन द्रव्यस्यैव विधानमुचितमिति पूर्वपक्षो निरस्तः।

यावज्जीवमित्यादिश्रुत्या यावज्जीवव्यापकत्वे बोधितेऽर्थतो मासैकव्यापकतालाभेऽपि उपसच्चरुकरणकत्वविशिष्टहोमे तन्मात्रव्यापकताया अलाभेन तस्यापि विधेयतया वाक्यभेदस्य प्राप्ताग्निहोत्रानुवादेन द्रव्यविधिपक्षे दुर्वारत्वात्।

विधिपक्षे दुर्वारत्वात्।

अथ तादृशश्रुतेर्द्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रप्रतिपाद्यस्य कर्मान्तरस्य विधायकत्वेऽपि न कथं वाक्यभेदः? विधेयभेदस्यैताबताप्यपरिहारात्। प्रत्युत धर्मिणोऽप्यधिकस्य विधानात्। एवं च "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नत" इत्यपि निर्युक्तिकमिति चेन्न? यत्र विधेयांशे युगपदनेकधर्माणां विशेषणतया भानं तत्र विधेयविशेषणभेदेऽपि विशिष्टनिष्ठविधेयत्वाभेदेन वाक्यभेदविरहात्। अन्यथा भूतलं नीलघटवदित्यादावपि नीलवद्घटवदित्यादाविव वाक्यभेदप्रसङ्गात्। अनुवाद्यांशे विशेषणतया यत्रानेकेषां विधानं तत्र तेषां विधेयता भिन्नैवेति वाक्यभेदः। यद्यपि तत्रोपसच्चरुकरणकहोमाधिकरणतात्वेन अधिकारिविशेषकृततादृशहोमाधिकरणतात्वेन वा मासैकव्यापकता मासन्यूनकालहोतृकृतहोमाधिकरणतायामप्यन्यान्यदिने पुरुषान्तरकर्तृकहोमाधिकरणतासत्त्वेनाक्षतैव, तत्तत्पुरुषकर्तृकतादृशहोमाधिकरणतात्वेन व्यापकतायाः श्रुतितात्पर्यविषयत्वे च विधेयानन्त्यम्, तथापि विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयावृत्तितादृशचरुहोमाधिकरणतामात्रवृत्तिधर्मत्वेनानुगतीकृत्य तत्तत्पुरुषकर्तृकतादृशचरुहोमाधिकरणतात्वावच्छिन्नव्यापकतानां संसर्गविधया विवक्षितत्वान्न दोषः। तादृशाधिकरणताद्वयावृत्तित्वं च स्ववृत्तित्वस्वनिरूपकहोमकर्तृनिष्ठभेदप्रतियोगिकर्तृकहोमाधिकरणतावृत्तित्वोभयसम्बन्धेनाधिकरणताविशिष्टान्यत्वरूपमनुगतं बोध्यम्। मासमधीत इत्यादावपि चैत्रा-

---

प्रतियोगित्वमिति। अस्मिन्पक्षे निरूपकत्वसम्बन्धेन। अनुयोगित्वपक्षे तु स्वरूपसम्बन्धेनाऽभावेऽन्वयः। प्रतियोगिपदार्थस्य चानुयोगित्वे निरूपकतासम्बन्धेनान्वय इत्यभिमतिः।

दिकर्तृकाध्ययनाधिकरणतास्वरूपव्यापकतावच्छेदकधर्मस्योक्तानुगतरूपेणैवानुगमः कार्यः । अतो मासमधीयानो दृष्ट इत्यादौ विशिष्य चैत्रत्वाद्यनुपस्थितावपि नान्वयबोधानुपपत्तिः । अन्यत्स्वयमूहनीयम् ।

दण्डं विना न घट उत्पद्यते, रासभं विनापि घट उत्पद्यत इत्यादौ विनापदार्थो ऽभाववान् । तत्पदसमभिव्याहृतद्वितीयाया अभावान्वयिप्रतियोगित्वमनुयोगित्वं वार्थः । अभाववतश्चोत्पत्तावाधारत्वेनान्वयः । तथा च दण्डाभाववद्वृत्त्युत्पत्तिकभाववान् घटो रासभाभाववद्वृत्त्युत्पत्तिको घट इत्याकारको बोधः । यद्यपि निपातार्थे नामार्थस्य साक्षादपि भेदेनान्वयः, तथापि सम्भवति सार्थकत्वे विभक्तेर्निरर्थकत्वमनुचितमिति द्वितीयायाः सार्थकत्वमुपेयते ।

भूतले न घटश्चन्द्र इव मुखमित्यादौ प्रथमायाः प्रतियोगिताद्यर्थकत्वे प्रथमैव न साधुः स्यात् । प्रातिपदिकार्थान्वयिनोन्यपदेनाभिधानस्थल एव प्रातिपदिकार्थेत्यादिसूत्रेण प्रथमाविधानादिति तत्र प्रतियोगित्वादिः सम्बन्धविधयैव भासत इत्युपेयते । दण्डं विना न घटोत्पत्तिरित्यादौ च विनान्तार्थे घटोत्पत्त्याद्यभावान्वये ऽनुयोगिविशेषणदण्डाद्यभावस्य च तदनुयोगितावच्छेदकत्वं भासते । द्रव्ये न गन्ध इत्यप्रयोगात् उपलक्षणीभूतधर्मावच्छिन्ने न नञर्थाभावान्वय इतिव्युत्पत्तेरिति रासभं विना न घटोत्पत्तिरिति न प्रयोगः ? अतिप्रसक्ततया रासभाभावस्य घटोत्पत्त्याद्यभावानुयोगितावच्छेदकताविरहात् ।

अथवा अभाव एव विनार्थः । दण्डं विना न घट इत्यादौ च विनान्तार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासम्बन्धेनैवान्वयः । अत एव रासभं विना न घट इत्यादयो न प्रयोगाः । अत एव दण्डाद्यभाववति घटादेर्वृत्तावपि जायते इत्यस्याध्याहारं विनैव दण्डं विना न घट इति प्रयोगोपपत्तिः । रासभं विना घट इत्यादौ च विनार्थस्याभावस्य सामानाधिकरण्यसम्बन्धेन घटादावन्वयः । दीधितिकृताप्यविनाभावो व्याप्तिरित्यत्र साध्यं विना साध्याभाववति योऽभाव इति यद्व्याख्यातं तत्र सप्तम्यन्तेन संसर्गविधया भासमानं तदधिकरणनिष्ठत्वमेवोपात्तं न तु विनार्थत्वेनाधिकरणम् । अभावाधिकरणपर्यन्तस्य विनापदार्थत्वेऽपि सप्तम्याधेयत्वरूपापदार्थविवरणरूपताया आवश्यकत्वात् । न च

---

अन्यपदेनेति—नात्र शक्तम्पदमिति गृह्यते किन्तु "सुप्तिङन्तमि"ति पारिभाषिकमतो न दोषः ।

विनापदोत्तरलुप्तसप्तम्यर्थं एवाभाववतीति सप्तम्या विवृत इति वाच्यम्? निपातोत्तरविभक्तेर्निरर्थकत्वात्।

अत एव सर्वत्र निपातोत्तरं साधुत्वार्थं प्रथमैवेति शाब्दिकाः। पृथिव्यामेव गन्ध इत्यादावेवकारप्रकृतिकसप्तम्या यदाधेयत्वबोधकत्वमङ्गीकृतं दीधितिकृद्भिस्तत्रापि तेषां न निर्भरः।

अस्तु वा तत्र प्रतियोगितया पृथिव्यन्यवृत्तित्वभानानुरोधेनैवकारस्यान्यवृत्तित्वार्थकत्वं गौरवादुपेक्ष्य तत्राधेयत्ववाचकत्वेन क्लृप्तायाः सप्तम्याः कल्पनम्। प्रकृते चाधेयत्वस्य संसर्गतयैवोपपत्तौ विनापदसाकाङ्क्षाधेयत्वार्थकसप्तमीकल्पनं दुष्कल्पनमेव। एवकारस्थले चाभावरूप एवार्थेऽन्यरूपतदर्थान्तरस्याधेयतासम्बन्ध इति न सम्भवति? आधेयतादेस्तद्वृत्त्येव सम्बन्धत्वात् न तु तदभावे। न च तत्राधेयत्वाभावो न प्रतीयते, अपि तु तत्सम्बन्धावच्छिन्नप्रतियोगिताकपृथिव्याद्यन्याभाव इत्युपेयम्। तादृशप्रतियोगिताकत्वमेवाभावेऽन्यस्य सम्बन्धोऽस्त्विति वाच्यम्? आधेयतासम्बन्धस्य प्रतियोगिन आधारस्यानुयोगिन्याधेये वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वात्। चैत्रः पचतीत्यादौ कृत्यादिसम्बन्धस्यापदार्थत्वेऽपि पाककृतिमानित्यादौ मतुबादिपदेन विवरणवत् उक्तस्थले सामानाधिकरण्यस्य पदेन विवरणमपि न विरोधमासादयति। विवरणीयार्थस्याप्यन्यलभ्यत्वेऽपदार्थतोपपत्तेरित्यलमसदावेशेन। विना वातं वृक्षः पतित इत्यादौ विनापदार्थस्याभावस्याश्रयतासम्बन्धेन वृक्षेऽन्वयाद्वाताभावविशिष्टो वृक्षः पतित इति शब्दतो लभ्यते। पतनेऽनुभवसिद्धो वातजन्यत्वाभावलाभश्चार्थः, जन्यतायाः पदानुपस्थाप्यत्वात् तदभावस्य तस्य वृत्त्यनियामकसम्बन्धत्वात्तदवच्छिन्नवाताभावस्य च शब्देन बोधयितुमशक्यत्वात्।
पुत्रं विना गत इत्यादौ पुत्रादिपदं लक्षणया पुत्रगमनादिपरम्। विनापदबोध्यतदभावश्च समानकालीनत्वादिसम्बन्धेन गमनेऽन्वेति। समानकालीनत्वघटकं कालनिष्ठं स्वाधिकरणत्वमनवच्छिन्नं बोध्यम्। अतो गमनादिकाले तदनधिकरणदेशावच्छेदेन गमनाद्यभावसत्त्वेऽपि नातिप्रसङ्गः।

केचित्तु उक्तस्थले साहित्यमेव विनापदार्थः। तस्य च गमनादिकर्त्तर्यन्वयः। असाहित्यं च स्वकर्तृकसमभिव्याहृतगमनादिक्रियासमानकालीनतादृशक्रियाकर्तृत्वरूपसाहित्याभावः, क्रियान्वयिस्वकर्तृक-

---

अस्तु वेति—सप्तम्याः कल्पनमिति वाक्येन सम्बन्धः। स्वाधिकरणत्वमिति—स्वं गमनाऽभावः। स्वकर्तृकसमभिव्याहृतेति—स्वकर्तृका या सम-

तादृशक्रियाकालीनत्वाभाव एव वा विनार्थः, कर्तृत्वे पुत्रादेराधेयत्वेनान्वयः। विभक्तिः साधुत्वार्थैव। अस्तु वा आधेयत्वं द्वितीयार्थः। सप्तम्या आधेयत्वार्थकत्वेऽपि नात्र सप्तमीप्रसक्तिः ? तस्याः कारकविभक्तित्वेन क्रियान्वयिस्वार्थबोधकत्वात्। अतः शेषषष्ठीप्रसक्त्या तामेवोपपदविभक्तिर्द्वितीया बाधत इति सर्वा उपपदविभक्तयः षष्ठ्यपवादिका इत्यस्याविरोध इति।

विनासमानार्थकयोर्ऋतेऽन्तरेणेति निपातयोरपि दर्शितैव रीतिः। एवं विनायुक्ततृतीयापञ्चमीस्थलेऽपि, मर्यादाभिविध्यर्थकयावच्छब्दयोगेपि द्वितीया दृश्यते, तत्र मर्यादार्थको यावच्छब्दः। आरभ्य तस्यां दशमीं तु पुत्रोमित्यादौ मर्यादा। सीमा कालरूपा देशरूपा च, कालनिष्ठं तत्त्वं च तत्कालनिष्ठत्वसमभिव्याहृतकालप्रागभावानधिकरणत्वप्रागभावाधिकरणत्वसजातीययावत्कालवृत्तिसमभिव्याहृतक्रियानधिकरणत्वम्। एवं चोक्तस्थले यावच्छब्देन पूजारूपक्रियायां शुक्लदशमीनिष्ठतादृशसीमात्वनिरूपकत्वं प्रत्याय्यते। तावतैवार्थतः शुक्लदशम्यां मर्यादात्वं लभ्यते। तन्निष्ठसीमात्वनिरूपकत्वं च तदवृत्तित्वे सति कृष्णनवमीप्रागभावानधिकरणशुक्लदशमीप्रागभावाधिकरणतिथिकूटव्यापकत्वम्। तावता षोडशतिथ्यधिकरणकषोडशपूजारूपस्यैककर्मणो विधेयतया लाभः। व्याप्यकालसमुदाये सजातीयत्वविशेषणात्पूजायामुक्तविशेषणद्वयाक्रान्तदण्डादिसमुदायाव्यापकत्वेपि न बाधः। अन्वयितावच्छेदकरूपेण साजात्यस्य विवक्षणादुक्तस्थले च तिथिमित्यस्याध्याहारेण दशमीपदार्थतावच्छेदकस्य तिथित्वघटितत्वेन वा यावत्पदार्थान्वयितावच्छेदकतया तिथित्वभानात्तेन रूपेण दण्डादेर्दशमीसजातीयत्वाभावात्। तिथिश्चाखण्डकालविशेषरूपा, न तु चन्द्रमण्डलकलारम्भाद्यनुगुणक्रियाप्रचयरूपा ? पूजायास्तावत्क्रियावृत्तित्वासम्भवात्। अत्र च प्रागभाव एव यावत्पदार्थः। द्वितीयार्थः प्रतियोगित्वमनुयोगित्वं वा। तत्र तत्प्रकृत्यर्थदशम्या अन्वयः। तावता दशमीप्रतियोगिकप्रागभावलाभः। तस्य स्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतासम्बन्धेन पूजारूपसमभिव्याहृतक्रियायामन्वयः।

व्यापकत्वं च स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकपूजाविशेषत्ववत्त्वम्। स्वाधिकरणत्वं च स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदविशिष्टकालिकविशेषणतासम्बन्धेन।

---

भिव्याहृतगमनक्रिया तत्समानकालिकी या गमनक्रिया तत्कर्तृत्वेत्यर्थः।

मर्यादाभिविध्यर्थेति—तेन विना मर्यादा, तत्सहितोऽभिविधिः।

एतेन कृष्णनवमीप्रागभावाधिकरणप्रतियोगिकभेदस्याव्याप्तकतया तत्सामान्यभेदनिवेशे भाविकृष्णनवमीप्रागभावाधिकरणत्वमादाय नाप्रसिद्धिः।

तथा सत्यपि तत्तद्दशमीप्रागभावाधिकरणकालस्य स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदवत्त्वसम्बन्धेन तत्तत्प्रागभावाधिकरणत्वाक्षतेः। न चैवमपि व्यवहितपूर्वकृष्णनवमीप्रागभावावच्छिन्नभेद घटितसम्बन्धेनाव्यवहितपूर्वकृष्णनवमीपूर्वतिथीनामपि तत्तद्दशमीप्रागभाववत्त्वात्तदधिकरणतिथिव्यापकत्वं पूजायां न सम्भवतीति वाच्यम् ?

स्वावच्छिन्नकृष्णनवमीप्रागभावाधिकरणत्वसम्बन्धेन स्वावच्छिन्नभेदस्यैव प्रागभावसम्बन्धे निवेशनीयत्वात्। स्वाधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकत्वमपि तादृशावच्छेदकत्वसम्बन्धेन,स्वावच्छिन्नस्य भेदः। अतस्तादृशावच्छेदकत्वत्वावच्छिन्नाभावनिवेशे यत्किञ्चिद्दशमीप्रागभावाधिकरणनिष्ठाभावप्रतियोगितामादायासिद्धिवारणाय विशिष्य तत्तत्प्रागभावरूपस्वपदार्थस्य सम्बन्धमध्ये प्रवेश्यतयाननुगम इति निरस्तम्। देशरूपा सीमा च काशीतः कौशिकीं यावद् यातीत्यादौ। तत्र कौशिक्याः गमनसीमात्वं प्रतीयते। तच्च काशीपूर्वकौशिकीपश्चिमदेशव्यापकगमनानधिकरणत्वम्। यावत्पदेन च कौशिक्यनधिकरणकत्वे सति काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते। तत्र द्वितीयार्थोऽवधित्वमवधिमत्त्वं वा प्रतीचीत्याद्यन्वयि, निष्कर्षः पूर्ववत्स्वयमूहनीयः।

अभिविध्यर्थो यावच्छब्दः कार्तिकमारभ्य चैत्रं यावच्छीतं भवतीत्यादौ काशीतः पाटलिपुत्रं यावद् वृष्टो देव इत्यादावभिविधिस्तत्पर्यन्ताभिव्याप्तिः। एवं च प्रथमे कार्तिकपूर्वकालोत्तरकालपूर्वकालव्यापकत्वं चैत्रोत्तरकालाऽवृत्तित्वसहितं शीतभवने द्वितीये च काशीपश्चिमदेशपूर्वपाटलिपुत्रपूर्वदेशपश्चिमदेशव्यापकत्वं पाटलिपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ यावता प्रत्याय्यते। विशेषः पूर्ववत्। यावच्छब्दसमानार्थकाङ्शब्दस्थलेऽपि दर्शितैव रीतिरवसेया। तद्योगे च पञ्चमी साधुः।

---

स्वाधिकरणेति—अत्र स्वपदं दशमीप्रागभावपरम्। तत्सामान्यभेदनिवेश इति—कृष्णनवमीप्रागभावत्वातिरिक्तधर्मानवच्छिन्नप्रागभावनिष्ठावच्छेदकता)भिन्नावच्छेदकत्वाऽनिरूपितप्रतियोगिताकभेदस्य निवेश इत्यर्थः।

तथा सत्यपीति—उक्तसामान्यभेदस्याऽप्रसिद्धत्वेऽपीत्यर्थः।

यज्ञमनु प्रावर्षदित्यादावनुशब्दार्थः कारकत्वरूपं हेतुत्वम्। अनुर्लक्षणे इत्यत्र कर्मप्रवचनीयसञ्ज्ञाविधायकसूत्रे लक्षणपदस्य कारकहेतुपरत्वात्। तत्र च यज्ञान्वितस्याधेयत्वरूपद्वितोयार्थस्यान्वयः। हेतुतायाश्च निरूपकत्वसम्बन्धेन वृष्टावन्वयः। जन्यत्वं वानुशब्दार्थः। तत्र निरूपितत्वरूपद्वितीयार्थस्य यज्ञान्वितस्यान्वयः। जन्यतायाश्चाश्रयत्वसम्बन्धेन वृष्टावन्वयः। अन्वर्जुनं योद्धार इत्यत्रापकर्षरूपं हीनत्वमनुशब्दार्थः। अर्जुनावधिकत्वं द्वितीयान्तार्थस्तस्य चापकर्षेऽन्वयः।

अवधित्वस्यापादानतारूपत्वेऽपि क्रियान्वयाभावान्न पञ्चमीप्रसक्तिः। अस्मादयं दीर्घ इत्यादौ भवतीत्यस्याध्याहारेणैव पञ्चम्युपपादनात्। अतः षष्ठ्यपवादतानिर्वाहः।

वृक्षं प्रति विद्योतते विद्युत, मातरं प्रति साधुः, यो मां प्रति स्यात्, वृक्षं प्रति सिञ्चतीत्यादौ लक्षणेत्थं भूतेत्यादिसूत्रानुशिष्टकर्मप्रवचनीयसञ्ज्ञकप्रत्यादिशब्देषु प्रथमे परिचायकत्वरूपं लक्षणत्वं परिशेषरूपं लक्ष्यत्वं वा कर्मप्रवचनीयार्थः। वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद् वृक्षस्य परिचायकता। द्वितीयार्थश्चाधेयत्वं निरूपितत्वं वा। द्वितीये

---

स्वावच्छिन्नभेदस्येति। स्वावच्छिन्नप्रतियोगिताकभेदस्येति। अत्र स्वपदेन शुक्लदशमीप्रागभावस्य ग्रहणम्

ननु पूजायाश्शुक्लदशमीप्रागभावाधिकरणत्वन्नैवास्ति शुक्लदशमीप्रागभावाधिकरणत्वस्य पूजानधिकरणतिथिष्वपि पूर्वोक्तभेदविशिष्टकालिकविशेषणतासम्बन्धेन विद्यमानत्वात्। नच यत् यत् दशमीपूर्वविद्यमानं नवमीमारभ्य पर्वतराजपुत्रीपूजनंविहितन्तत्तद्दशमीप्रागभावव्यापकत्वस्य विवक्षणेन न सामान्यतिथिष्वतिप्रसक्तिरिति वाच्यम्? एवन्निवेशेन दोषवारणेऽपि अननुगमदोषस्य तत्तद्व्यक्तिभेदेन सौकर्यात्।

अत्र गृ० त० क० मान्याः पर्वतराजपुत्रीपूजायां शुक्लदशमीप्रागभावावच्छिन्नप्रतियोगिताकभेद एव गृह्यत इति ग्रन्थाशयः। अत्र भेदश्च स्वाधिकरणत्ववन्निष्ठाऽभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताक एव। स्वाधिकरणता च स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नप्रतियोगिताकभेदविशिष्टकालिकसम्बन्धेन। एवञ्च सम्बन्धघटकीभूतस्वपदेन तत्तद्व्यक्तेरेव ग्रहणमिति न काऽपि हानिरित्यलम्।

वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकसम्बन्धत्वाभावादाह जन्यत्वं वेति।

ननु सर्वत्रावध्यर्थे पञ्चम्या विधानमेव योग्यमिति द्वितीया कथमित्याशयेनाह अवधित्वस्येति।

साधुत्वं प्रियकारित्वं साधुत्वघटकक्रियान्वयी सम्बन्धः कर्मप्रवचनीयार्थः। तृतीये भागः स्वत्वाश्रयः प्रत्याद्यर्थः। तदन्वयी सम्बन्धो द्वितीयार्थः।

इत्थं चास्मत्सम्बन्धी यो भागः स्यादिति बोधः। चतुर्थे कर्मण्येव द्वितीया, षत्वाबाध एव संज्ञाफलम्। प्रतिश्च निरर्थकः गृहे गृहेऽश्व इत्यादाविव व्यापकताया द्विरुक्तिबललभ्यत्वात्प्रतिशब्दस्य व्यापकतार्थकत्व उक्तार्थकत्वेन गृहं व्याप्नुवतेऽश्वा इत्यादाविव द्विरुक्तिरेव न स्यात्।

न च प्रतिशब्दस्यापि व्यापकतार्थकत्वं प्रतिदिनमधीत इत्यादौ क्लृप्तम्, द्विरुक्तेरपि वृक्षं वृक्षं सिञ्चतीत्यादौ क्लृप्तमिति प्रकृते सम्भेदेनान्यतरवैयर्थ्यमिति न्यायाद् द्वयोरेव व्यापकताबोधकत्वमवर्जनीयमिति वाच्यम्? प्रतिमासमधीतइत्यादावव्ययीभावे हि प्रथमातिरिक्तविभक्तेरसाधुत्वेन प्रतिशब्देन मासान्वितव्यापकत्वं क्रियायां बोध्यते। विभक्तिः साधुत्वार्था।

वृक्षं वृक्षं प्रतिसिञ्चतीत्यत्र तु सेके द्वितीयार्थकर्मत्वावरुद्धप्रकृत्यर्थवृक्षविशेषितव्यापकता बोधयितुं न शक्यते। एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वे व्युत्पत्तिविरोधात्।

कर्मत्वसम्बन्धस्यैव च व्यापकताघटकत्वेन स्वीकरणीयतया वृत्त्यनियामकस्य तस्य तथात्वासम्भवाच्च। तस्य सेककर्मत्व आश्रयतासम्बन्धघटितव्यापकताप्रत्यायनमपि न युज्यते? प्रकृत्यर्थसुबर्थयोरन्तरा नञार्थातिरिक्तभानस्य व्युत्पत्तिविरुद्धत्वात्। नामूढस्येतरोत्पत्तेः, नानुपमृद्य प्रादुर्भावादित्यादौ नञर्थमात्रस्य पञ्चम्यर्थहेतुताया विशेषणत्वेन प्रकृत्यर्थस्य च विशेष्यत्वेनान्वयात्। तस्मात्प्रतिरनर्थक एव।

द्विरुक्तान्वये तात्पर्यबलाच्च सेचनकर्मत्वे वृक्षादेर्व्यापकत्वं संसर्ग-

---

परिचायकत्वरूपमिति—निरूपकत्वसम्बन्धेन तस्या विद्युत्यन्वयः। तथा च वृक्षनिष्ठपरिचायकतानिरूपिका विद्युत्प्रकाशनवतीत्यर्थः। षत्वबाध इति—कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधेन "उपसर्गात्सुनोती" ति न षत्वम्। द्विरुक्तिरेव न स्यादिति—उक्तार्थानामप्रयोग इतिशाब्दिकसिद्धान्तादिति तत्त्वम्।

प्रथमातिरिक्तेत्यादि—प्रतिशब्दस्य व्यापकत्वार्थकत्वमिति द्रढयितुमेतदुक्तिः। व्यापकताघटकत्वेनेति—व्यपकतावच्छेदकत्वेनेति। तस्य तथात्वाऽसम्भवात इति। कर्मत्वाख्यसम्बन्धस्य व्यापकतावच्छेदकत्वाऽसम्भवात्। व्युत्पत्तिविरुद्धत्वादिति—प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिविरुद्धत्वादित्यर्थः।

संसर्गतयैवेति—एवञ्च प्रतेर्व्यापकत्वमर्थो नैव।

यैव भासते। यदि च वृक्षं प्रति सिञ्चतीत्यादावुपसर्गस्य प्रतेर्वाच्यो द्योत्यो वा कश्चिदन्योऽर्थस्तदास्तु स एवात्रापि तदर्थः।

अत एव तस्यैवास्यापि प्रतिशब्दस्य प्रयोगो नानर्थकः।

वस्तुतोऽनर्थकयोः कर्मप्रवचनीयाधिपरिशब्दयोः प्रयोगवत्तादृशप्रतेरपि प्रयोगस्य प्रयोजनान्तरानुपपत्तिश्चिन्त्या। प्रतेर्यत्र व्यापकतार्थकत्वं तत्र प्रतिवृक्षं सिञ्चतीत्यव्ययीभावसमास एव नियतः। तदर्थकाव्ययस्याव्ययीभावसमासविधेर्विभाषाधिकारीयताविरहेण नित्यत्वादतो वीप्सया प्रतिवृक्षं सिञ्चतीतिवद् वृक्षं प्रतिसिञ्चतीति न प्रयोगः। यत्र व्यापकत्वार्थकेनाव्ययेनाव्ययीभावसमासस्तदुत्तरं सर्वत्र प्रथमा विभक्तिरेव, नतूपकुम्भे गच्छतीतिवत् प्रतिगृहेऽश्वा इत्यादिरपि प्रयोगः। उक्तयुक्त्या तत्र प्रतिनाऽश्वादौ गृहादिव्यापकताया बोधयितुमशक्यत्वात्।

तदाधारत्वादिरूपसप्तम्याद्यर्थे च समासार्थस्य गृहादिव्यापकत्वस्याश्रयतासम्बन्धेन तदर्थस्य व्यापकरूपधर्मिणो वा ऽभेदसम्बन्धेनान्वयेमेयत्वे घटः घटवृत्तौ घट इत्यादिप्रयोगवारणाय कल्प्यायाः सप्तम्यर्थाधारताया आश्रयत्वसंबन्धेनाभेदसंम्बन्धेन वा प्रकृत्यर्थानन्वयव्युत्पत्तेर्विरोधात्। उपकुम्भे निधेहि, उपकुम्भादागतः, उपकुम्भेन कृत इत्यादौ च विवक्षितस्याधारत्वापादानत्वकर्तृत्वादौ कुम्भसमीपादेराधेयतासम्बन्धेनान्वयस्याधेयत्वादौ निरूपितत्वसम्बन्धेन तदन्वयस्य वा बोधे न कश्चिद् व्युत्पत्तिविरोध इत्युपपद्यन्ते तथा प्रयोगा इति ध्येयम्।

त्वां च मां चान्तरेत्यादावन्तरान्तरेण युक्त इति द्वितीयाया निरूपितत्वमर्थः। तस्यान्तरापदार्थतावच्छेदकमध्यत्वेऽन्वयः। एवमन्यत्रापि तदर्थस्तूक्तदिशा स्वयं परिच्छेद्यः

इति द्वितीयाविभक्त्यर्थः

---

अस्याऽपीति—वृक्षं वृक्षं प्रति सिञ्चतीतिवाक्यघटकस्याऽपीत्यस्येति। आश्रयतासम्बन्धेनेति—अन्वये इत्यनेन सह सम्बन्धः। अभेदसम्बन्धनेति—एवञ्च गृहव्यापकम् यदाधारत्वं तदाश्रयीभूतोऽश्व इतिशाब्दः। मध्यत्वेऽन्वय इति—एवञ्च त्वन्निरूपितम् मन्निरूपितञ्च मध्यत्वम्प्रत्येतव्यम्।

इति श्रीत्रिकोणयन्त्रसन्निभकाशीप्रयागायोध्याख्यतीर्थत्रयमध्यभूमि-
जौनपुर बदलापुर उदयपुरगोल्हवाभिजनगर्गवंशीयसरयूपारीण-
शुक्लश्रीवेणीमाधवशास्त्रिकृतशास्त्रार्थ-
कलासहिते व्युत्पत्तिवादे द्वितीया-
कारकं समाप्तम्।

## ग्रन्थकृदन्वयपरिचयः

सृष्टिसमये ब्रह्माद्युत्पत्त्यनन्तरं गर्गगौतमशाण्डिल्यादयोऽग्निकल्पा महर्षयस्सम्बभूवुः। महीयांसश्च ते अग्निहोत्रादिवैदिककर्मानुष्ठानाय परमपवित्रं सरयूतटमागत्य यज्ञभूमिम् प्रकल्प्य स्थितास्तत्रैव वर्णाश्रममर्य्यादां पालयामासुः। तत्रास्माकं पूर्वजानां गर्गवंशे जनिः, गोरक्षपुरप्रान्तान्तर्वर्त्तिमझवली (मझौली) ति प्रसिद्धे विश्वसेन (विसेन) क्षत्रियपालिते तद्गुरुत्वेन तस्थुः पुराणपुरुषाः। कदाचित्तीर्थयात्राङ्कुर्वन्तस्ते महानुभावाः काशीप्रयागायोध्याभिधतीर्थत्रयमध्यभुवं जौनपुरबदलापुराभिधं मार्गस्थं सक्षत्रियाः प्रापुः। तत्र विशेषतो धर्मविपर्ययन्दुष्टजनजन्यं विलोक्य सार्धं विद्यमानं क्षत्रियमाज्ञाप्य कारयित्वा च दुष्टप्रशमं प्रातराराध्याः विजयदत्तशुक्लाः पुत्रचतुष्टयसम्पन्नाः तत्रैव तपस्समाचारमारेभिरे। क्षत्रियकुलललामभूताश्शिष्यास्तेजबहादुरसिंहाभिधाश्च तत एवारभ्य तत्रत्यप्रजास्सम्पालयामासुः। प्रातःस्मरणीयपादानान्तेषाञ्चतुर्णामेके सर्वतन्त्रस्वतन्त्रा विख्यातभूतलप्रतिष्ठाः षड्दर्शनालङ्कृताः स्वनामधन्याः श्रीटीकारामशुक्लशास्त्रिणः समजनिषत। ते च महानुभावाः शास्त्राध्ययनाध्यापनानन्तरं गार्हस्थ्यं सम्पाद्य स्वज्येष्ठसुताय अधीतशब्दवेदान्तज्यौतिषशास्त्राय देवदत्तनामकाय समर्प्य सम्पत्तिजातम् परमत्यागमाजग्मुः। मान्याश्चामी देवदत्तशुक्लाः यावज्जीवं निर्जीविकमध्यापनञ्चक्रुः। तेषाम् पुत्राः परमादरणीयचरणाः शब्दतर्कशुद्धाद्वैतादिकृतविशिष्टश्रमाः परममतयोऽनेकग्रन्थकृतःसाधीयांसः कीर्तिवर्णशुक्लाः गायत्र्यादिमहानुष्ठानेन तीर्थयात्रादिना साङ्गोपाङ्गं चातुराश्रम्यम्पालयाञ्चक्रुः। तदीयकनिष्ठपुत्रा षटिकाशतकशतावधानसंस्कृताशुकविवैयाकरणशिरोमण्याद्यनेकपदवीभृतः श्रीवेणीमाधवशास्त्रिणोऽस्मज्जनकाः शैशवे स्वमण्डलान्तर्वर्त्तिरुघौलीग्रामस्थेभ्यो वैयाकरणकेसरिश्रीदुर्गादत्तशास्त्रिमहोदयेभ्योऽधीत्य कौमुदीशेखरमनोरमान्यायसिद्धान्तमुक्तावल्यादिग्रन्थान् काशीमागत्य विश्वप्रसिद्धेभ्यः सर्वतन्त्रस्वतन्त्रेभ्यः शास्त्रार्थविद्यावतारेभ्यः पण्डितमार्तण्डेभ्यो महामहोपाध्यायादिपदेभ्यः श्रीशिवकुमारमिश्रशास्त्रिमहाशयेभ्यः महामहोपाध्यायश्रीजयदेवमिश्रशास्त्रिचरणेभ्यश्चाधीत्य सपरिष्कृति शब्दतर्कवेदान्तादिशास्त्रं द्वादशवर्षाध्यापनानन्तरं ग्रन्थनिर्माणे प्रवृत्ताः १ हिंसाखण्डनकौमुदी २ कौमुदीकल्पलतिका ३ वैयाकरणभूषणसार (टीका) ४

शक्तिवाद (टीका) ५ व्युत्पत्तिवाद (शास्त्रार्थकला टीका) ६ परिष्कारदर्पणादिग्रन्थरत्नान्यरचयन् । तच्चरणानुरागाल्लब्धसाधारणशब्दव्युत्पत्तिना तदीयद्वितीयपुत्रेण मया कौमुदीकल्पलतिकादिवदयमपि ग्रन्थो यथामति टिप्पणीभिः परिष्कृत्य संशोध्य च भवतां सेवासु निवेद्यते आशास्यते चाकिञ्चित्करोऽपि किञ्चित्करोऽयम् भवतामनुरागाद् भविष्यतीति ।

प्रार्थयते विद्वज्जनचरणसेवकः—

**श्रीराजनारायणशुक्लः**

काशीस्थ-शास्त्रार्थमहाविद्यालयप्रधानाचार्यः

---



# ...बाजारोंमें टर्मरिक ...करेगी विक्को लैब

क्रीमके मुकाबले कोल्ड क्रीम तेल युक्त होगी। इस वर्षके शुरूमें कम्पनीने 'विक्को बज्रदन्ति एस एफ' के नामसे भारतमें विक्को वज्रदन्ति टूथपेस्टकी चीनीसे मुक्त वस्तु पेशकी। उन्होंने कहा कि कम्पनीका टूथपेस्ट बाजारमें ४ प्रतिशत और वैनिशिंग क्रीममें ३५ प्रतिशत हिस्सा है। कम्पनीने मार्च १९९५ को समाप्त वर्षके दौरान ४० करोड़ रुपयेका कारोबार किया है।

## चांदीमें गिरावट

दिल्ली, १३ अक्टूबर (एनएनएस) न्यूयार्क में चांदी दिसम्बर वायदा ७ सेंट घटकर लगभग ५३८ सेंट प्रति औंस रह जाने और कल स्थानीय व बंबई की दो पार्टी की लगभग ६ हजार किलो विदेशी चांदी की आवक होने से हाजिर चांदी ९९९ टंच १०० रुपये टूटकर ७२४० रुपये प्रति किलो रह गयी। स्थानीय व दिवाली मांग कमजोर चल रही थी। चांदी डिलीवरी ७२९५ से लुढ़ककर ७२३० रुपये रह गयी। सिक्के में छुटपुट आवक उत्तर प्रदेश तथा हरियाणा से हो रही थी लेकिन दिवाली मांग की आशा में भाव नहीं घटे।

न्यूयार्क में हाजिर सोना आधा डालर घटकर लगभग ३८४.७० डालर प्रति औंस रह जाने तथा जेवर बनाने वालों की मांग कमजोर होने से सोना स्टैंडर्ड ४९२० रुपये पर ५ रुपये घटाकर बोला गया। आवक नगण्य होने से स्वर्ण बिस्कुट ४८५० रुपये पर डटे रहे।

## ...पुर

...00
...r Shipping () 42.00
...t West Travel () 14.00
...olex Ind. (42) 42.00 41.50
...C Balance Fund (9.25) 9.15
...C Big Value () 15.00
...zo (OL) 185.00
...ld Star (5.25) 5.50 5.80 6.00
...D F C Bank (38.50) 38.10
...00 37.75
...line Glass (15.50) 16.50
...dustan Motor () 36.00
... C I (44.25) 44.25 44.00
...DI (115) 115.00 114.50
...CI (96) 96.00 (OL 95.00
...00)
...dal Vijay Nagar (F Paid)
....60) 11.60
...dal Vijay Nagar (5\- Paid)
...65) 6.60 6.65 6.75 6.70 6.85
...dal Vijay Nagar (2\- Paid)
...60) 4.50 4.60 4.25
... T (285) 286.00 285.00
....00 286.00 287.25 288.00
....00 290.00 292.50 293.00
...3.50 294.00 294.50 295.00
....00 293.00 293.50 (OL
...2.00 280.50 284.00 287.00)
...pia Chem. (39) 39.00
...d Fin. () 87.00
...ngalore Refinery (38) 38.50
...25 38.00
...unt Everst (12.50) 12.00
...75 12.25
...dia Video (22) 22.00

Oriental Bank of Com. (63) 60.00 59.00
Overseas Cable () 27.00
Oil Country Tubulor () 13.75
Prism Cement (10.40) 10.00 10.25
Reliance Capital (122.50) 120.75 120.50 119.50 119.00 119.75 120.25 119.50 120.00 (OL 119.00 117.00)
Rajshree Polyfil (16.50) 16.50
Reliance Petroleum (P.P.) (14.25) 14.00 14.15 13.90 14.10 14.25
Reliance Petroleum (20.70) 20.00 20.25
Remi Metal (9) 9.00
Rama News Print () 12.85 12.75
State Bank Of Ind (228) 228.00 226.00 224.50 224.00 225.00 225.75 226.00 226.50 225.00 226.?? (OL 225.00)
SBI Magnum (14.25) 14.00 14.05
SBI Multiplus (10.20) 10.20 10.25 10.15
Sonal Cosmetics (30.50) 30.00
Silver Line () 46.00
Southern Iron () 18.50
Steelco Guj. () 8.50
Transpak Ind. () 185.00 180.00
Torrent Narmada () 14.00 13.70
Zillion Pharma () 39.00 41.00 39.50

वस्तु अधिनियममें संशोधन सुझानेके... था ताकि घरेलू उत्पादोंमें आ... हिस्सेकी पहचानके लिए ठप्पा लग... व्यवस्थाकी जाय। श्री शर्माने बताय... देशमें ऊन उद्योगसे जुड़ी पं... इकाइयोंकी संख्या ६५८ हैं जिनमें... लाख लोग काम करते हैं। इस उद्यो... जरूरतोंको पूरा करनेके लिए पिछले... ४७४ करोड़ रुपयेका कच्चा माल आया... किया गया जबकि निर्यात २५७७ करोड़... रुपयेका था।